ŚRĪ

# TATVA SUDHA

Vol. I

BY

Panditabhushana, Mimamsa-Vedanta Vidwan
Mimamsaka Siromani, Mimamsabhusana
Mimamsa Visharada

E. S. VARADACHARYA

Assistant Professor of Mimamsa
Maharaja's Samskrita College, Mysore.

1959

Price Rs. 5-00

॥ श्रीः ॥

श्री लक्ष्मीहयवदन परब्रह्मणे नमः

श्रीमते रामानुजाय नमः

'पण्डितभूषणम्', 'मीमांसावेदान्तविद्वान्' मीमांसकशिरोमणि,
'मीमांसाभूषणम्' 'मीमांसाविशारद' इत्यादि नानाबिरुदमेदुरेण
मैसूरु श्रीमन्महाराजसंस्कृतमहापाठशालायां
मीमांसाशास्त्राध्यापकेन
श्री ई-श-वरदाचार्येण विरचिता

# तत्त्वसुधा

['शतभूषणी समालोचना' परपर्याया]

प्रथमभागः

1959

मूल्यं : रू. ५=००

॥ श्रीः ॥



भवापवर्गकारणं भजे गतिं सतां सदा ।
श्रियाऽऽश्रितं गुणैर्युतं प्रभुं महाश्वकन्धरम् ॥



स्वभाष्य गूढार्थ सुबोधनाय
नवीनरङ्गेशयतीशमूर्त्या ।
रामानुजार्योऽवततार भूयः
भजेऽनिशं तं गुरुसार्वभौमम् ॥

# FOREWORD

Most people are blind in mind. Like infants which care only for food, fondling, and sleep, they seek only to satisfy their hunger and pleasures. Like insects, birds, and animals they are content therewith. They do not seek to know about birth and death, about the world, universe, and God.

But some men have enquiring minds, and seek to know the eternal truths.

They are the seers who transmitted the Vedas, the Upanishads, that most marvellous piece of literary composition called " Vedanta-Sutras"—which is like a treasure chest of precious stones, and that literary Elixir of Life, called the " Bhagavad-Geeta " These constitute Hinduism.

They reigned for a long epoch. Then arose a magnetic man, Gautama, who did not know Sanskrit and so rejected the Vedas, and who did not like Hinduism and so rejected its tenets. He evolved a faith by his own volition, and being easy and new, it caught men's fancy, and spread like wild-fire.

It required another marvellous man, Shankara, to fight that fire, and to quell it, at least in its home-land. He was a born Sanskritist, luminous scholar, and gifted thinker. He restored faith in the sanctity of the Vedas and the allied lore: but, possibly due to the prevalent Buddhistic thought, his tenets were not easily distinguishable from Buddha's.

All that while, orthodox Vedic faith, however, synchronising Deistic conclusions, was being transmitted by the ancient Master, Bodhayana and others. And 900 years ago that faith was given crystallised shape and form by the beaming intelligence, meticulous scholarship, and persuasive exposition of Saint Ramanuja. It went by the appellation, "Vishishtaadvaitha."

Ramanuja's doctrine was buttressed, refurbished, and given reverberating publicity by the matchless eloquence of Venkatanatha, renowned and revered during the centuries since as "Vedanta Deshika."

The contention of Vishishtadwaitism is that Shankara based a philosophy only on one set of Vedic passages and ignored those relating to Universal Creation which he dismissed as Maya. Truth had to be sought by coordinating the several sets of Vedic thought as entitled to equal credence. Ramanuja's "Sri Bhashya", "Vedanta Deepa", "Vedanta Sara", and "Vedartha Sangraha" are an eloquent exposition of that stand.

Among the subsequent Apostles of Srivaishnavism, Vedanta Deshika picked out one hundred fallacies in Advaithism, and wrote the work "Shatadooshanee". That was five centuries ago.

Recently however Mahamahopadhyaya Anantakrishna Sastry has sought to establish his greatness by writing a denunciation of it by name "Shatabhooshanee". The work seeks also to besmirch Sreevaishnavism and its proponents and devotees.

It has evoked a counter-blast in the present work.

A Government title does not confer scholarship. It is not often a recognition of scholarship. It is obtained by pulling strings. The title does not make Sri Anantakrishna Shastry a Shankara, a Yadava Prakasha, or Vidyaranya, or Appayya Deekshita. It does not make him a vanquisher of Vedanta Deshika.

Vedanta Deshika was a redoubtable Sanskritist, matchless dialectician, and unsurpassed devotee. As his fame was rising, great Vidyaranya, Prime Minister of the King of Vijayanagar, sought to investigate him, and went back pleased and charmed.

Later, when there was a discussion in the Vijayanagar King's Court between Sri Vidyaranya and Sri Akshobhyatheerthha, the Dwaithin, the king invited Sri Vedantha Deshika to adjudge the result of the great contest.

Later again, the king wanted to confer honours and rewards on Vedanta Desika, and Prime Minister Vidyaranya, the great Adwaithin, himself wrote the invitation to Vedantha Deshika.

And Vedantha Deshika's reply may serve as an eye-opener to us moderns!

"ज्वलतु जलधिक्रोडक्रीडत्कृपीटभवप्रभा
प्रशमनपटुज्वालाजालो मुहुर्जठरानलः ।
तृणमपि वयं सायं सम्फुल्लमल्लिमतल्लिका
परिमळमुचा वाचा याचामहे न महीश्वरान् ॥

नास्ति पित्रार्जितं किञ्चिन्नमया किञ्चिदार्जितम् ।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम् ॥"

"Were the fire of hunger in my stomach to blaze so fiercely as to pale the giant flame of fire raging in the depth of the ocean, I would not open my mouth in mealy-mouthed supplication even to beg a straw from the greatest of monarchs."

"I inherited no wealth from my ancestors. I have earned nothing myself. My sole treasured patrimony is the glorious God who adorns the summit of Hasthigiri, or Kancheepuram."

Centuries later, another great Adwaithin, Appayya Deekshitar, did not traduce Vedanta Deshika for his Shatadooshani, but wrote a charming commentary on Yaadavaabhyudaya.

Let us realise the fact that Adwaitism and Vishishtaadwaitism have both come to stay, and that neither can destroy the other. The Vedas are like a great high-way with forks, and Shankara and Ramanuja are two pilgrims, one picking his way through Itarsi, Katni, and Allahabad to Banares, and the other through Delhi, Haridwar, and Hrisheekesh, to Badari!

If Sri Anantakrishna Sastry, with such scholarship as he may have, chose to counter Shatadooshanee with Shatabhooshanee, his right to do so may not be questioned. But if he becomes little-minded and

vituperative, he is liable to be countered, and that with the gloves off.

And Vidwan E. S. Varadachariar, of Madras and Mysore, has rightly come out with this cogent and well-written, and pungent, counter-reply.

It is a warning that philosophical discussion should be carried out in a spirit of self-justification and self-purification, and not in a spirit of irate contempt for each other.

Critics of Shankara's Absolutism are offended with it because it does not absolutely conform to the Vedas, but is assertive and dogmatic, and consequently unorthodox. Westerners laud Shankara's Adwaithism by comparison of it with their own modern thinkers like Kant, and are unconcerned about its conformity to the Vedic scheme of thought.

Vedanta Deshika in "Shatadooshanee" carefully sought to index a hundred points of its unorthodoxy, and in the following pages, Vidwan E. S. Varadachariar seeks to re-establish that, despite all that Sri Mahamahopadhyaya Ananthakrishna Sastry could say, the unorthodoxy and consequent error of conclusions is indisputable.

G. R. Josyer,
Founder, International
Academy of Sanskrit Research
Mysore.



॥ श्रीः ॥

श्री ब्रह्मतन्त्रपरकालास्थानम्
महीशूरपुरी २६-३-५९

श्री लक्ष्मीहयवदन लक्ष्मीनारायणाभ्यां नमः
श्री ब्रह्मतन्त्रस्वतन्त्रपरकालगुरुपरम्परायै नमः

नाथोपज्ञं प्रवृत्तस्य यामुनेयानेकप्रबन्धैरुपचितस्य श्रीमद्रामानुज मुनिभिस्संरक्षितस्य निखिलमततमःकर्शनस्य श्री विशिष्टाद्वैतदर्शनस्यै तस्यापरिशीलनेन श्री यामुनरामानुजमुनिभ्यामनुगृहीतानां चिरन्तन सरस्वतीचिकुरबन्धसैरंध्रिकानां दिव्यसूक्तीनां भावानभिज्ञानेन च दुरभि निवेशमात्रावलंबनेन विवर्ताद्वैतमतावलम्बिनः परस्परदूषणप्रचुरान् बहून् ग्रन्थान् व्यरीरचन् । सर्वेषामेव तेषां ग्रन्थानां पर्यालोचनाय श्री यामुनरामानुज श्रीनिगमान्तदेशिक श्रीसूक्तिनिगूढार्थप्रकाशकान् श्री भाष्यगूढार्थसंग्रह, सर्वार्थ सिद्धिभावप्रकाश, त्रय्यन्तसारामृत, प्रमुखान् ग्रन्थानन्वगृह्णन् इदानींतन श्री ब्रह्मतन्त्रपरकालमहादेशिकाः

तेषामेतेषां गुरुचरणानां सन्निधौ चिरकालं सर्वानेव संप्रदाय- ग्रन्थानधीत्य पूर्वोत्तरमीमांसयोरनवरतं विरचितभूरिपरिश्रमाश्चैते श्री. ई. एस्. वरदाचार्याः ।

ते चेमे, श्रीमन्निगमान्तमहादेशिकानुगृहीत "श्रीशतदूषणी" परीक्षार्थं अनन्तकृष्णशास्त्रिविरचितस्य 'शतभूषणी' नामकग्रन्थस्य समालोचनात्मकं 'तत्त्वसुधा'भिधानं प्रबन्धं बुधमनोहरं विरचयन्ति स्म।

इदमत्रातीव हर्षावहम्-यत् न केवलमेते अत्र 'शतभूषणीं' परं समालोचयन् । किं तर्हि-श्रीमदाचार्यचरणानुगृहीत गूढार्थसंग्रहादि श्रीसूक्तिपर्यालोचितान् बहूनर्थान् प्राकाशयन्, येन निर्मत्सराः विद्वदग्रेसराः प्रमोदं प्राप्नुयुः । सर्वथा चायं ग्रन्थः 'शतभूषणी' निरसनाय, सिद्धान्तपोषणाय चानुगुण एवेत्यत्र न कोऽपि संशयः ।

वरदाचार्या इमे श्रीमतो लक्ष्मीहयवदनस्य निरवग्रहानुग्रहेण श्रेयःपारंपरीमाप्नुवानास्समेधन्तामित्याशास्महे—इति

कस्तूरि श्रीनिवासरङ्गाचार्यः
श्रीकार्यकर्ता, श्रीब्रह्मतन्त्रपरकालमठः
मैसूरु

* * *

॥ श्रीः ॥

न्यायवेदान्तविद्वान्
आत्मकूरु दीक्षाचार्यः
आस्थानमहाविद्वान्

मैसूरु
२०-३-५९

॥ श्री लक्ष्मीहयवदनपरब्रह्मणे नमः ॥

'श्री रामानुजसिद्धान्तशुद्धान्ताम्बुजभास्करः ।
जयताद्भूतरङ्गेन्द्रपरकालगुरूत्तमः' ॥

महदिदं प्रमोदस्थानम् यत् श्रीमन्तोऽस्मत्प्रियसुहृदो वरदाचार्याः 'तत्त्वसुधा'ऽभिधानं शतभूषणीसमालोचनात्मकं ग्रन्थं विरचयन्तः तत्र आदिमं भागं प्रकटीचक्रुरिति । एते च महाभागाः शास्त्रसरणौ जङ्घालाः, विशेषतः पूर्वोत्तरमीमांसयोर्विरचितभूरिपरिश्रमाः सैद्धान्तिकीं पद्धतिमनुसन्दधानाः भूषण्यास्सुतरामनुरूपं समालोचनं रचयन्ति स्म ।

संग्रहरूपेणानेनापरितुष्यन्तो धीराग्रेसराः अस्मदाचार्यचरणानुगृहीत श्री भाष्यगूढार्थसंग्रह सर्वार्थसिद्धिभावप्रकाशादिग्रन्थसूक्तिपरिशीलनपरि श्रमेण कृतार्थास्सन्तुष्टान्तरङ्गाः भवेयुः । वरदाचार्याश्चेमे श्रीमतस्सैन्धव कन्धरस्य निरवग्रहेणानुग्रहेण सकलश्रेयसामास्पदं भवेयुः, प्रभवेयुश्चैवमेव क्रमेण लोकोपकारायेति सहर्षोत्कर्षं निवेदयितुमुत्सहतेऽयं जनः—

इति विदुषामनुचरः
आत्मकूरु दीक्षाचार्यः
विश्रान्त-विशिष्टाद्वैतवेदान्त प्रधानोपाध्यायः
श्रीमन्महाराजसंस्कृतमहापाठशाला
मैसूरु

* * *

श्रीमद्भिः पूर्वोत्तरमीमांसाविपश्चिद्भिः वरदाचार्यैरस्मत्सुहृद्भिः विरचितायाः तत्त्वसुधायाः (शतभूषणीसमालोचनरूपायाः) भागः प्रथमः मयाऽवलोकितः । अवलोकिताचैतदीया विषयसरणिरामूलचूडम्। शतभूषणी समालोचनाय प्रवृत्तोप्ययंग्रन्थः दुरवगाहानां विशिष्टाद्वैत सिद्धान्तविषयाणां यथावस्थितं स्वरूपं सुप्रयुक्तसाधुपदकमनीयया सुग मया अनितरसाधारण्यशैल्या विशदयति । एतत्सिद्धान्तवद्भादरैरति शयित प्रोत्साहविश्राणने अवशिष्टभागा अपि प्रकाशिताभवेयुरित्याशासे।

कळले नडादूर् लक्ष्मीकान्तय्यंगार्यः
व्याकरण प्राध्यापकः
श्रीमन्महाराज संस्कृतमहापाठशाला
५-४-५९ मैसूरु

अबाधिताशेषवचश्श्रुतीनां न्यायैस्तदर्थैरुपवर्णितार्थम् ।
भूयोभिरभ्यर्थितमार्यवृत्तैः जीयाद्विशिष्टैक्यमतं जगत्याम् ॥

इमे तावत् ग्रन्थाचार्याः बाल्यात्प्रभृति'व्यसनं श्रुतौ' इत्युक्तरीत्या व्याकरणादिशास्त्राध्ययनपूर्वकं शिरोमण्यादिपरीक्षासु उत्तीर्णाः महिषासुरपुरमप्यागत्य श्रीमत्परकालमठास्थानमलंकुर्वतां ज्ञानवैराग्यानुष्ठान शेवधिश्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवकश्रीमदभिनवरङ्गनाथ ब्रह्मतन्त्र परकालमहादेशिकानामनुग्रहलब्धशारीरकसमीचीनतात्पर्याः । शास्त्रांतरेष्वपि सुशिक्षितबुद्धयः । श्री श्री सदाचार्यसकाशादधिगतद्वैताद्वैत विशिष्टाद्वैतसूक्ष्मस्वरूपज्ञानिनः विश्वसनीयाः आप्ताश्च । अत्रोक्तास्सर्वे सत्या एवेति 'यथार्थं सर्वविज्ञानं इति वेदविदां मत'मित्युक्त विशिष्टाद्वैतमेव जीयाज्जगत्याम् । एतद्ग्रन्थकाराणां सफल एवप्रयासोऽयम् तमिमं ग्रन्थं पण्डितप्रकाण्डाः अनसूयव एव आपादचूडमनुभूय सन्तुष्यन्त्विति सविनयं प्रार्थयते ।

श्रीमन्महीशूर संस्कृत महापाठशालानिवृत्त वैखानस
प्रधानोपाध्यायः, श्रीमन्महाराजास्थानमहा
विद्वान् व्याकरणविशिष्टाद्वैतविद्वान्
चक्रवर्ती तिरुमलाचार्यः
श्रीवैष्णवदास्यामृतरसिकः सन्मतोद्धारानु
मोदनेन आत्मानं चरितार्थयति च ।

॥ श्रीः ॥

*Meemamsarnava Meemamsakesari*
*Panditaraja-siromani*
D. T. Tatacharya, M.O.L.

TIRUPATI

श्रीमन्निगमान्तमहादेशिकानुगृहीत शतदूषणीखण्डनतत्परतया-म-म-श्री, अनन्तकृष्णशास्त्रिणा अचिरात् प्रकटितस्य 'शतभूषणी' नाम्नो ग्रन्थस्य निरसनाय मीमांसाभूषण,शिरोमणि, मीमांसावेदान्त विद्वदादिविरुदप्रख्यापितपाण्डित्यविशेषेण, मैसूरु महाराजसंस्कृतमहा कलाशालायां मीमांसाऽध्यापकपदवीमधितिष्ठता श्री ई. एस्. वरदाचार्येण विरचितायाः प्रकाश्यमानायाश्च 'तत्त्वसुधायाः' प्रथमं भागमवलोकितवन्तः स्मः ।

पाण्डित्यस्य प्रथमं लक्षणमिदं यत् पूर्वकृतस्वपरसिद्धान्तग्रन्थानामर्थस्य यथावत् ग्रहणम् । द्वितीयं लक्षणमिदं यत् विवक्षितार्थस्य विशद मनाकुलंचाविष्करणम् । आभ्यामुभाभ्यां संपन्नः श्री वरदाचार्यः प्रौढ रमणीयं इमं 'तत्त्वसुधा'ख्यं ग्रन्थं निबद्धवानिति पश्यन्तः नितरां संतुष्यामः । प्राचीनाद्वैतग्रन्थान् बौद्धग्रन्थान् मीमांसाग्रन्थान् सिद्धान्त ग्रन्थांश्च पदे पदे उदाहृत्य विषयविवेचनमिह क्रियमाणं सहृदयानां हृदयोल्लासाय कल्पेतेत्यत्र नास्ति संशयः ।

कृत्स्नग्रन्थप्रकाशनं यथा अविलंबेन भवेत् तथाऽनुगृह्णातु भगवान् श्रीनिवास इति प्रार्थयामहे ।

D. T. TATACHARYA

*Panditaratnam Vidwan*
*K. S. Varadacharya*
Research Assistant

Oriental Research Institute
MYSORE

'शिष्याशयानुगुणस्तत्त्वोपदेशः' इति बौद्धगृहे प्रसिद्धं—'देशना लोकनाथानां सत्त्वाशयवशानुगाः' इत्यादौ। तदेतद्दूषयन्तः श्रीशङ्कराचार्याः—'बाह्यार्थ-विज्ञान-शून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसम्बद्धप्रलापित्वं, प्रद्वेषो वा प्रजासु; विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः प्रजा इति' इत्यादिशन्ति।

एवं सति 'यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि। सा सैव प्रक्रियेह स्यात् साध्वी, सा चानवस्थिता' इति, 'कृपणमध्यमपक्वधियां नृणां मतिविलासविधात्रितयं क्रमात्। परिणतिर्ब्रहुजीवतमस्विता परमपुंसि तमः परिकल्पना' इति च शिष्याशयानुगुणमेव तत्त्वोपदेशकर्तव्यतां स्थापयन्तः. परे श्रीशङ्कराचार्यनाम्नैव ब्रह्मविवर्तवादं प्रचारयन्तीति विचित्रमेतत्।

ततोऽपि विचित्रतरमिदं यत्-उक्तत्रिविधाधिकारिभ्योऽप्यधमास्सन्त एव एते स्वहृदयविसंवादेनापि उत्तमवेदान्तिपक्षं साधयितुं कोलाहलमातन्वत इति।

ततोऽपि विचित्रतममिदं यत्-स्वाचार्यत्वेनोद्धुष्यमाणेषु श्री शङ्कराचार्येषु असम्बद्धप्रलापित्वं प्रजासुप्रद्वेषंवाऽप्यारोपयितुं बद्धकच्छा इव वर्तन्त एत इति।

श्री शङ्कराचार्यैः—'यत्तावदुच्यते योऽसौ नारायणः परोऽव्यक्तात् प्रसिद्धः परमात्मा सर्वात्मा स आत्मनात्मानमनेकधाव्यूह्यस्थित

इति, तन्न निराक्रियते...यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाऽभिप्रेयते तदपि न प्रतिषिध्यते, श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्' इति श्रुतिस्मृतिप्रसिद्धत्वेन प्रशंसितपरमसात्त्विकधर्मपरायणमहापुरुषानपि तान्त्रिकत्वेनावैदिकत्वेन च विनैव सङ्कोचं निन्दन्तः स्वपरघातुकानेतान् बालिशान् कृपार्हान् अपारकारुण्यवात्सल्यमहोदधिः भगवान् रक्षत्वित्यभ्यर्थनातो नान्यत्कर्तव्यमस्ति यद्यपि ब्रह्मविदां; तथापि स्वरक्षणव्यापारो यथा चेतनकृत्यः तथा कृपालोर्विदुषः पररक्षणव्यापारोऽप्यादर्तव्य एव ।

स्वपररक्षणं च तत्त्वातत्त्वविवेकेन । स च तद्याथार्थ्यज्ञानेन । अतश्च तत्त्वयाथार्थ्यज्ञानमिव अतत्त्वे अतत्त्वत्वज्ञानमप्युपादेयमेव । एतच्च परमतमर्मोद्घाटनाद्भवति ।

परमतमर्मभेदननासीरधाटीभटाश्चास्मद्गुरुवर्याः सुप्रसिद्धाः श्री श्री स्वामिचरणाः । तेषामनवग्रहानुग्रहपूर्णविषया एते 'तत्त्वसुधा'ग्रन्थकाराः प्रियसुहृन्मणयः स्वेषां श्रीस्वामिचरणशिष्याग्रणीत्वं प्रकटयन्त्यस्मिन् ग्रन्थे इति विदांकुर्युः स्वयं विमर्शकाः ।

'हरिणापि हरेणापि ब्रह्मणापि सुरैरप्यप्रतिसमाधेयायाः शतदूषण्याः खण्डनाभासस्य समालोचनव्याजेन एभिः विपश्चिदुत्तमैः न केवलं विशिष्टाद्वैतिनः-तत्त्वजिज्ञासुलोक एव सर्वथाऽधमर्णीकृत इत्यत्र न संशयलेशः ।

अचिरादेवावशिष्टभागत्रयमपि प्रकाशयित्वा तत्त्वजिज्ञासूनितोप्यधमर्णयन्त्विमे विद्वदुत्तमा इति परमाशास्ते यं जनः; प्राशास्ते च तदनुगुणसहायसंपत्तिमनुगृह्णातु रमाहयास्यः स्वविभवसंरक्षकेभ्यः एभ्यः ब्रह्मविदग्रेसरेभ्य इति । एतद्ग्रन्थरत्नप्रणेतॄणामस्मत्प्रियसुहृदां वैदुष्य

विषये नाधिकं वक्तुं प्रभवत्ययमल्पप्रज्ञः । 'श्लाघनीयोसि मे रिपुः' इतिन्यायेन परमतस्थानां हृदयान्येवावशमाकर्षयेदिदं ग्रन्थरत्नमित्यत्र न संशयलेशः । अथाप्यात्मद्रोहिणः अधमाधमकक्ष्यायां स्थिताअपि स्वहृदयविसंवादेन विवर्तवादं स्थापयन्तः केचित् किञ्चिल्लिखेयुः— अथापि न हानिः काचित्, यतः त्वमहंपूर्वं विवदद्भिरेभिः आत्माद्वैत स्वानुभव विरुद्धं प्रकटयद्भिः भेदवाद एव परिपोष्यते अतो वदन्तु यथेच्छं, लिखन्तु यथाकामं—आसुरानास्वाद्यैव 'तत्त्वसुधा' । तत्र किं क्रियताम् ।

'कलकण्ठगणास्वाद्ये कामस्यास्त्रे निजाङ्कुरे ।
निम्बवृत्तिभिरुद्गीर्णे न चूतः परितप्यते' ।।

संकटमयेऽद्यतनप्रपञ्चे केवललोकानुग्रहाय परस्सहस्रमपिक्लेशमविगणय्य तत्त्वप्रचारैकनिरतेभ्यः एभ्यो विद्वद्वर्येभ्यः सर्वमपिश्रेयः अनुगृह्णातु रमाहयास्यः सत्यसंरक्षकः । एतादृशान् पण्डितप्रकाण्डान् आत्मनः सुहृत्त्वेनानुसन्दधानस्तावतैवात्मानं धन्यं भावयत्ययं जनः साभिमानम् ।।

नव्यमङ्गलाभिजनः—

वरददासः

'न्यायवेदान्तविद्वान्'

Mysore. 31-3-59.

**V. T. Tirunarayana Iyengar, M.A., (Skt. & Ph.)**
**Formerly Asst. Professor of Sanskrit,**
**University of Mysore.**

Indian Philosophy, starting with the Vedas, reached the peak in the Upanisads. The rich and varied experience gathered by the seers in the Upanisads, later developed into different systems, orthodox as well as heterodox. Of the six orthodox systems, only the Vedanta has come to stay as a system of thought and as a way of life, the others having only a secondary role to play, to assist the better understanding and appreciation of the Vedanta thought.

The Sutras of Badarayana have served as the key to the interpretation of the Upanishadic philosophy. All the acaryas have therefore commented elaborately on the Vedanta Sutras. Of the many views on the vedanta, the view of Samkara, —that Brahman alone is real, that It is pure and simple and the world of multiplicity is a mere appearance, has been subjected to bitter criticism by Ramanuja, according to whom Brahman is no doubt alone real but it is inclusive of the world of multiplicity, and all is dependant on the Saguna Brahman in the body-soul relationship. The Vedanta philosophy is undoubtedly monistic. It is Advaita. But the philosophers do not agree about the sort of Advaita that the Upanisads teach.Samkara has laid before the readers the Nirvisesa Advaita, while Ramanuja has placed the Visista Advaita.

Among the followers of Ramanuja, emerged a keen thinker in the person of Vedanta Desika.

He devoted his time and energy mostly to the refutation of the Samkara point of view, and his classical work, the "Satadusani" is proof of his activity. Philosophical polemics developed with full vigour in the hands of the followers of Ramanuja, Samkara and other interpreters of Vedanta and the torch is being carried even to the present day.

Six centuries after Vedanta Desika, a work has appeared to refute the thought of the "Satadusani" and to uphold the thought of Samkara. That work is the "Satabhusani" by Mm. Anantakrishna Sastriar. Soon after the appearance of this book, reaction appeared in the Visistadvaita School and scholars have engaged themselves in the defence of the "Satadusani", against the attack made in the "Satabhusani".

Sri E. S. Varadachariar, a scholar of great repute, has written a lengthy treatise, Tattvasudha, carrying on the Vedantic polemics, and subjecting the "Satabhusani" to severe criticism. His thesis is to appear in different volumes. The present one is the first. In the introduction, the author gives a brief exposition of the Visistadvaita thought in easy clear language, contrasting it with the thought of Samkara. He then takes up the thesis of the "Satabhusani" and, employing for the most part non-technical language, points out to the reader the several fallacies of logic and outlook.

The work deserves a close and appreciative study and it is bound to be an important contribution to the polemical literature on philosophy.



श्रीः

॥ श्री लक्ष्मीहयवदनाय नमः ॥

## ॥ भू मि का ॥

सव्योत्सङ्गविराजत्तटिदाभाम्भोधिजाभुजाश्लिष्टम् ।
वन्दे सुधांशुनिलयं दिवानिशं हयमुखं देवम् ॥

समुल्लसन्ति च लोके वैदिकावैदिकभेदेन अनेकानि दर्शनानि । अत्र च जैनैरित्थं परिगणनं कृतम् । 'बौद्धं नैयायिकं सांख्यं जैनं वैशेषिकं तथा । जैमिनीयं च नामानि दर्शनानाममून्यहो' ॥ इति । (षड्दर्शनसमुच्चये) । एवमन्यत्रापि । 'जैनं सांख्यं जैमिनीयं योगं वैशेषिकं तथा । सौगतं दर्शनान्येवं नास्तिकं तु न दर्शनम्' ॥ इति ।

वैदिकानि च दर्शनानि 'पतञ्जलेर्जैमिनेश्च व्यासस्य कपिलस्य च । कणादस्याक्षपादस्य दर्शनानि षडेव हि' इति वैदिकैः परिगणितानि । अत्र दर्शनेषु नैरात्म्यवादः आत्मवादश्चेति वादद्वयम् । नैरात्म्यवादो बौद्धानाम् । आत्मवादश्चेतरेषाम् । एतेषु सर्वेष्वपि दर्शनेषु वेदान्त दर्शनस्य दर्शनसारत्वख्यापनाय भगवन्नारायणावतारभूतः भगवान् व्यासः ब्रम्हमीमांसासूत्रैः औपनिषदर्थकुसुमानि ग्रथयामास ।

तानि च ब्रम्हसूत्राणि बोधायनादि वृत्तिकारैर्विवृतानि । एवं परिमितगम्भीरभाषिणा भगवता द्रमिडभाष्यकृता च । तथा स्पष्टीकृतानि च गम्भीरन्यायसागरभाषिणा श्रीवत्साङ्कमिश्रेणापि । एवं टंकादिभिरपि । यथा चोक्तं वेदार्थसंग्रहे 'भगवद्बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदान्तव्याख्यानसुव्यक्तार्थश्रुति - निकरदर्शितोऽयं पन्थाः' इति । बोधायनादिवृत्तिकारप्रदर्शितानेवार्थान् श्रीभाष्यकाराः श्रीरामानुजमुनयः श्रीभाष्ये संचिक्षिपुः ।

शंकराचार्यादिभिरपि ब्रम्हसूत्राण्यधिकृत्य भाष्याण्यारचितानि। परं तु शंकरभाष्ये, समन्वयाधिकरण दहराधिकरणेन्द्रप्राणाधिकरणादिषु उपनिषद्भाष्ये च तत्र तत्र वृत्तिकारसंमतानामर्थानां श्रीभाष्यकारसिद्धान्त मूलभूतानां दूषणात् शांकरदर्शनादपि प्राचीनं विशिष्टाद्वैत दर्शनमित्यत्र न मनागपि संशयस्संभवेत्। अत एव च श्रीशंकराचार्याः अध्यासभाष्ये 'यथाचायमर्थः वेदान्तानां सर्वेषां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः'। इति वदन्तः 'वयं प्रदर्शयिष्यामः' इत्यनेन प्रथममसिद्धतां च सूचयन्तः, अध्यासप्रधानस्य अद्वैतसिद्धान्तस्य स्वकपोलकल्पिततां सम्यगेव सूचयन्ति।

श्रीभाष्यकारास्तु 'भगवद्बोधायनकृतां विस्तीर्णां ब्रम्हसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति प्रवदन्तः स्वसिद्धान्तस्य अनूचानप्राप्ततामावेदयन्ति। तत्र शंकराचार्यैः परिकल्पितः विवर्ताद्वैतसिद्धान्तः। भगवद्भाष्यकारैः प्रवर्तितश्च विशिष्टाद्वैतसिद्धांतः। एतत्सिद्धांतद्वयसिद्धार्थानां विशदनिरूपणपूर्वकं विवेचनं ग्रन्थारम्भ एव चत्वारिंशत्पुटपरिमितमकारि। तत्र विशदतया द्रष्टव्यम्। अत्रापि संग्रहेणावेदयिष्यते।

विवर्तनाद्वैतविशिष्टाद्वैतसिद्धान्तमवलम्ब्य अनेके ग्रन्थाः तत्तन्मतस्थापकाचार्यैः तदनुयायिभिश्च महनीयैः पण्डितवरेण्यैरारचितास्समुल्लसन्ति। तत्र श्री कवितार्किकसिंहैः सर्वतन्त्रस्वतन्त्रैः आचार्यसार्वभौमैः श्रीमन्निगमान्तमहादेशिकैः परशतं प्रबन्धाः श्री विशिष्टाद्वैतसिद्धान्तपोषकाः अक्रियन्त। तेषु च प्रधानतमं शतदूषणीनामकं प्रबन्धरत्नम्। यच्चेदं विशिष्टाद्वैतसिद्धान्तमकुटावतंसमपि विवर्ताद्वैतसिद्धान्तशिरश्शूलायते।

एतादृशशतदूषणीग्रन्थस्य खण्डनरूपतया नैतावता कालेन कश्चन ग्रन्थः दृष्टिपथमाजगाम। परंतु गतवत्सरे (१९५६) महामहोपाध्यायैः अनन्तकृष्णशास्त्रिवरेण्यैः आरचितः 'शतभूषणी' नामकः सप्तशत पुटपरिमितः शतदूषणीपरीक्षारूपः कश्चन ग्रन्थः अस्मन्नेत्रपदवी-माजगाम। तत्र चैते शास्त्रिणः शतदूषणीखण्डनार्थं स्वस्य प्रवृत्तिरिति वक्तुं स्वयमेव भीताः एवं लिखन्ति 'तत्र शतदूषणीदूषणे नास्माकं संरम्भः। किन्तु तत्रोद्भावितदूषणपरिहारेण अद्वैतभूषण एव यथाशक्ति संरम्भः' इति। तत्र स्वमतस्थापनं तदानुषङ्गिकतया परमतपर्यालोचनं च सर्वेषांस्वरूपप्राप्तमवश्यकर्तव्यं चेत्यत्र न कोऽपि संशयः। परं तु अन्यमतस्थापकानामाचार्याणां तदनुयायिनां गुरुवर्याणां अन्येषां च तदनुयायिनां दुरुक्तिभिर्निन्दनं स्वसिद्धान्तस्य स्वस्य च अपरिहार्यानेक दोषयुक्तत्वेपि तदपर्यालोच्य अनुष्ठानां दूषणमेव खेदावहं विस्मयावहं च।

शतभूषणीकाराश्च अनन्तकृष्णशास्त्रिणः स्वग्रन्थे 'इतरदूषणं नास्माभिरत्र क्रियते' इति प्रतिज्ञाय तद्व्याघातरूपतया शतशः श्री भाष्यकारश्रीनिगमान्तमहादेशिकाद्याचार्याणां, तत्प्रवर्तितसिद्धान्तस्य च दूषणेन हेळनेन च स्वग्रन्थं पूरयन्ति। तत्र च कानिचिदुदाहरणानि प्रदर्शयामः :

१) आत्माद्वैतभङ्गाय प्रयासः 'स्वभृङ्गभङ्गाय'।

२) सर्वं प्रकरणं श्रीभाष्यसिद्धान्तस्य मरणायते।

३) अतः अविरोधाध्यायः श्रीभाष्यस्य प्राणघातकः.

४) पशुपत्यधिकरणं च श्रीभाष्यस्य कृत्येव कथं न विघाताय.

५) सूत्राशयस्य अन्यथानयनं तु सूत्राण्येवान्यथयतां श्रीभाष्यकाराणां कृत्या। भगवत्पादानां तत्वोपदेशस्त्वतत्वोपदेशः' इति भ्रान्तानां वादः अकिञ्चित्करः.

६) श्रीभाष्यकाराः पितृहत्यया पैतृकधनजीविनः.

७) केवलं स्वगोष्ठ्यां मतान्तरनिरसनेन जयपताकासमारोपणमेव श्रीभाष्यानुयायिभिः यदि कर्तव्यं मन्यते, तर्हि कामं मन्यताम्.

८) 'कथमार्हतमतसागरावर्तपतितस्य श्रीभाष्यसिद्धान्तस्य ततो निस्सरणम्'

९) 'धर्मभूतज्ञानस्य स्वकपोलकल्पितस्य दर्शनान्तरासिद्धस्य स्वीकारो निष्प्रयोजनः श्रीभाष्यसिद्धान्तस्य श्रौतत्वेऽपि'.

१०) 'तत्र किं नाम वैषम्यमाश्रित्य पाञ्चरात्रं प्रमाणं, सौगताद्यागमाश्चाप्रमाणमिति श्रीभाष्यकारादिभिर्निष्कृष्यते — अतः सौगतागमपाञ्चरात्रयोर्न वैषम्यम्'.

११) इत्यर्धवैनाशिकपक्षं त्यक्त्वा पूर्णवैनाशिकमतप्रवेशः'.

१२) 'शतदूषणी अपथेनैव दूषयति' इति। 'शतदूषणी वञ्चनया' इति च। एवं अनेका निन्दोक्तीः पश्यतः कस्य वा मनो नोद्विजेत.

एवमेव शतभूषणीकारकृतग्रन्थान्तरे—

सांख्यसौगतचार्वाकसंकरादन्त्यजोदयः ।
दूषणान्यपि तान्येव भूयस्तदधिकानि च'॥ इति कश्चन श्लोकः उपलभ्यते। अत्र च श्रीभाष्यकाराणां अन्त्यजत्वेन (चण्डालत्वेन) निन्दैव परमं प्रयोजनं शतभूषणीकाराणाम्। पद्यं चेदं न्यायसिद्धाञ्जने आचार्यसार्वभौमैः श्रीमन्निगमान्तमहादेशिकैरनुगृहीतपद्यस्य

सांख्यसौगतचार्वाकसङ्कराच्छङ्करोदयः ।
दूषणान्यपि तान्येव भूयस्तदधिकानि च ॥ इत्यस्य प्रतिबन्दितया प्रवृत्तमिति प्रतिभाति। परं तु अद्वैतिनां यथा

सांख्यसौगतचार्वाकसाङ्कर्यमुपपद्यते न तथा मनागपि विशिष्टाद्वैतिनाम्। लेशतोऽपि तन्मतसाङ्कर्यस्य श्रीभाष्यकारसिद्धान्ते संभावनाया अप्यभावात्। विवर्ताद्वैतिनां मते तु एतत्साङ्कर्यं सम्यगेवोपपादयामः।

तथा हि गौडपादाचार्यैः माण्डूक्यकारिकासु—

स्वप्ने मयि यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु भविष्यति॥
स्वतो वा परतो वाऽपि न किञ्चिद्वस्तु जायते।
सदसत् सदसद्वाऽपि न किञ्चिद्वस्तु जायते॥ इत्यारभ्य
संवृत्त्या जायते सर्वं शाश्वतं नास्ति तेन वै॥ इत्युक्तम्।

बौद्धा अपि चैवमाहुः— यथा—

यथा माया यथा स्वप्नः गन्धर्वनगरं यथा।
तथोत्पादस्तथा नाशः स्थितिस्तद्वद्भविष्यति॥

(नागार्जुनकारिका)

न स्वतो नापि परतः न द्वाभ्यां नाप्यहेतुतः।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन॥
विद्यमानस्वभावस्य हेतुना किं प्रयोजनम्।
अथाविद्यमानोसौ हेतुना किं प्रयोजनम्।
अजातमनिरुद्धञ्च तस्मात्सर्वमिदं जगत्।
मायया निर्मितं यच्च हेतुना यच्च निर्मितम्।
आयाति तत् कुतः कुत्र याति चेति निरूप्यताम्। इति

(बोधिचर्यावतारपंचिका)

अतश्च प्रपञ्चसृष्टिविषये बौद्धविवर्ताद्वैतिनोः साङ्कर्यमपरिहरम्।
एवमीश्वरसद्भावविषयेऽपि बौद्धाः आहुः

ईश्वरो जगतो हेतुः वद कस्तावदीश्वरः ।
कस्मात्सदा न कुरुते न हि सोऽन्यमपेक्षते ॥
अपेक्षते चेत् सामग्रीं हेतुर्न पुनरीश्वरः । इति ।
(बोधिचर्यावतारपञ्चिका)

विवर्ताद्वैतिनोप्येवमेवह्याहुः ।

यथाचाहुः सुरेश्वराचार्याः—

अस्तीशो व्यतिरिक्तश्चेत् सोऽपि केन प्रवर्तितः । इत्यादिना
ईश्वरसद्भावपक्षं प्रदूष्य

जगदुत्पत्तिसंहाराः तद्वदात्मनि कल्पिताः ।
वस्तुवृत्तिं समालोच्य कुतः सृष्ट्यादिसंभवः ॥

उत्पत्तिस्थितिनाशाः स्युः जगतोऽस्य प्रतिक्षणम् ।
अविद्यामात्रहेतुत्वात् नामीषां विद्यते क्रमः ॥ इत्यादिना

सृष्टेराविद्यकत्वं स्फुटमिति । कथं वात्र बौद्धसाङ्कर्यं शक्यनिह्नवम् । अत एव च गौडपादाचार्याः माण्डूक्यकारिकान्ते—

क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः ।
सर्वे धर्मास्तथा ज्ञानं नैतत् बुद्धेन भाषितम् ॥ इत्यब्रुवन् ।

अत्र 'नैतत् बुद्धेन भाषित'मिति नित्यज्ञानानङ्गीकारात् बौद्धैः; अद्वैतिभिश्च तदङ्गीकाराच्च तावन्मात्रेण वैलक्षण्यमित्युक्तं भवति । अत एव चैतत्कारिकाभाष्ये शङ्कराचार्यैरेवमुक्तम्— 'यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना च अद्वयसामीप्यमुक्तम् । इदं तु परमार्थतत्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः' ॥ इति । अत्र च शंकराचार्यैरेव नित्यज्ञानव्यतिरिक्तांशेषु अद्वैते बौद्धसाङ्कर्यमुपपादितमिति न वयं तत्र दोषभाजः ।

श्लोकवार्तिके भट्टपादैश्च अद्वैतिसंमतः अविद्यावादः आत्मैक्य वादश्च संबन्धाक्षेपपरिहारवादे सुविशदं दूषितः ।

यथा—

'स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ।
विलक्षणोपपाते हि नश्येत् स्वाभाविकी क्वचित् ।
न त्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः ॥ (८६) इति

वार्तिककाराः प्रोचुः । अत्र च नायकरत्ने 'निरस्ताश्चायं पक्षः निरालंबन वादेन' इति पार्थसारथिमिश्राश्चाहुः । अतश्चाद्वैतिनां श्लोकवार्तिक कारः मुख्यवैरी भवति । अत एव ब्रम्हसिद्धिकारः कुमारिलभट्टोक्तीः दूषयति ।

खण्डनकारोऽपि 'एवं सति सौगतब्रम्हवादिनोरयं विशेषः । यदादिमः सर्वमेवानिर्वचनीयं ब्रवीति । विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रम्हवादिनस्संगिरन्ते इति साङ्कर्यमेव सम्यक्सूच-यामास । सत्यद्वयस्वीकरणं च विवर्ताद्वैतिबौद्धयोस्समानमेव । दृष्टि-सृष्टिपक्षे च (मुख्यवेदान्तपक्षे) न मात्रयाऽपि बौद्धवैलक्षण्यं शाङ्कराणाम् । अत एव च तत्वसंग्रहकारः 'तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः' इत्यादिना नित्यज्ञानाङ्गीकारमात्रेण विवर्ताद्वैतिनां अल्पापराधं प्रदर्शयन् इतरेष्वंशेषु स्वगोष्ठीप्रवेशं सम्यक्सूचयति ।

अत एव च निरालंबनवादान्ते भट्टपादैरुक्तम्—

युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् ।
आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राह्यं गतास्तत्र कथंचिदन्ये ॥ इति

अत्र अन्ये इत्यस्य अविद्यावादिन इत्यर्थः । वासनास्थाने अविद्यां स्वीकृत्य प्रपञ्च निराकरणं अद्वैतिनामिति परं विशेषः । वासनापदेना-विद्याग्रहणमित्येतत् आचार्यवाचस्पतिमिश्रवचनबलादपि ज्ञायते ।

यथा च भामत्यां(१-२-२१)
विवर्तस्तु प्रपञ्चोऽयं ब्रम्हणो अपरिणामिनः ।
अनादिवासनोद्भूतः न सारूप्यमपेक्षते ॥ इति ।

एतद्विस्तरस्तु एतत् ग्रन्थावतरणभागेऽवसेयः ।

एवमहमर्थस्य 'न चाहमर्थः व्यामोह इति शक्यते वक्तु' मिति शावरभाष्यानुसारेण भट्टपादप्राभाकराभ्यां परसंमतद्विरूपत्वासंभवः स्फुटमुपपादितः। इदं सर्वं मनसि निधाय पञ्चपादिकायां 'तदेवमहं कर्तुः सदैकरूपत्वावगमात् स्थायित्वेप्यर्थक्रियाऽसंभवात् न नीलस्य स्वगतापरोक्षमात्रेण माहायानिकः पक्षः समर्थ्यते। किन्तु ग्राहकस्याहं-कर्तुरात्मनः स्थायिनो अभावे।' इति प्रोक्तम्।

अत्र पं. पा. विवरणम्—महदेतत् सिद्धान्तवैलक्षण्यमस्तीत्युप-संहरति। 'तदेवमहंकर्तुः सदैकरूपत्वावगमादिति। इत्यादि। अत्र च बौद्धसाङ्कर्यमाशङ्क्य परिह्रियते। अत एव भास्करभाष्ये वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रे 'ये च बौद्धमतावलंबिनः मायावादिनः तेप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः। यदि बाह्यार्थो नाभिप्रेत-स्स्यात्, किमर्थमिदं यतते सूत्रकारः' इति। एवं प्रकृत्यधिकरण-भास्करभाष्येऽपि 'परिणामा'दिति सूत्रे 'विगीतं विच्छिन्नमूलं माहाया-निकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति' इत्युक्तम्। एतत्परिहारस्तु पं. पा. विवरणकृता केवलं निन्दामात्रेण क्रियते - यथा 'यस्तु कश्चित् क्षपणकपादावनतशिरोबिम्बः तत्वदर्शन-तन्निष्ठपरमहंसप्रद्वेषतीव्रवायुविक्षिप्तप्रविवेकविज्ञानलवः, स्वपरपक्षगुणदोष विज्ञानदूरीकृतविज्ञानः दुर्जनरमणीयां वाचं जल्पति सुगतविज्ञानवाद-समानोऽयं वेदान्तवादः इति स उपेक्षणीयः' इति। अत्र भास्करोप-पादितसौगतसाङ्कर्यापरिहारात् अवर्जनीयमेव हि तत्। एतदेव च आचार्यपादैरापादितम्।

एवं सांख्यसाङ्कर्यमपि विवर्ताद्वैतिनां निरूप्यते। तथा हि। योगभाष्यस्य साङ्ख्यप्रवचनमिति संज्ञा उपलभ्यते। योगिनां च सेश्वर-सांख्यत्वेन व्यवहारः शङ्करभाष्येऽपि वर्तते। योगभाष्ये च कूटस्थ-नित्यं, परिणामिनित्यं चेति नित्यद्वयप्रदर्शनं उपलभ्यते। शङ्कराचार्या-अपि समन्वयाधिकरणे 'किञ्चित्परिणामिनित्यं किञ्चित्कूटस्थनित्यमिति' नित्यद्वयस्वीकारेण स्वसिद्धान्तं प्रदर्शयन्ति। आत्मनः कौटस्थ्य विरोधेनैव परिणामाद्वैतं बहुत्र दूषयन्ति शंकराचार्याः। एतत्तात्पर्येणैव आत्मसिद्धौ यामुनमुनयः 'सांख्याः तदुपजीविनश्चे'ति तदुपजीवित्वेन विवर्ताद्वैतिनः निर्दिशन्ति। सौगतानां परमसहृदः खण्डनकाराः 'सर्वथा सदुपायानां' इति कुमारिलोक्तिदूषणार्थं प्रयतन्तः एवं वदन्ति 'यस्य प्रभावात् भगवता सुरगुरुणा लोकायतसूत्राणि न प्रणीतानि, तथागतेन वा मध्यमागमा नोपदिष्टा भवेयुः, भगवत्पादेन वा बादरा-यणीयेषु सूत्रेषु भाष्यं ना भाषि' इति। अत्र बौद्धचार्वाकयोः स्वसुहृत्वेन कीर्तनात् सांख्यस्थाने भगवत्पादस्य निवेशाच्च सांख्यसांकर्यं स्पष्टम्। आत्मनः निर्गुणत्वं, धर्मशून्यत्वरूपं कूटस्थत्वं, अन्तःकरणवृत्तिस्वीकारेण प्रमाणप्रमेयव्यवस्थास्वीकरणं च विवर्ताद्वैतिनां सांख्यसांकर्यं दृढी-करोति।

एवं चार्वाकसांकर्यमप्युपपादयामः—'परलोकिनो अभावात् परलोकाभावः' इति चार्वाकसूत्रम्। शंकराचार्याश्च आरंभणाधिकरणे 'परमार्थावस्थायां ईशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते' इति वदन्ति। एवं चार्वाकैः कार्यकारणभावः 'सत्वेऽसत्वेपि पूर्वं किमपि गगनवन्नैव साध्यं, हेतुप्राप्तिर्न पश्चाद्भवितुरघटितोत्पादनेऽतिप्रसङ्गः' (त. मु. क.) इत्यादिप्रकारेण दूष्यते। एवं खण्डनेऽपि—

अन्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः।
नान्तर्भावितसत्त्वं चेत् कारणं तदसत्ततः॥

इत्यादिना कार्यकारणभावः दूष्यते। अतश्च चार्वाकसाङ्कर्यमप्यप्रकम्प्यम्
एतद्विस्तरस्तु अस्मदाचार्यचरणानुगृहीतगूढार्थसंग्रहादाववसेयः।

एतत्सर्वं मनसि निधाय श्रीमदाचार्याः शतदूषणीकाराः 'साङ्ख्यसौगतचार्वाकसङ्कराच्छङ्करोदयः' इत्यवोचन्, न केवलं निन्दाकरणदृष्ट्या। शतभूषणीकारास्तु महामहोपाध्यायाः महामोहाक्रान्ताः 'अन्त्यजोदय' इति स्वमनसि विद्यमानं द्वेषविषमुद्गिरन्ति। साङ्ख्यसौगतचार्वाकसाङ्कर्यं श्रीभाष्यकाराणां मते कथमिति विचारे ब्रह्मवयोपरिमितावधिदानेऽपि मौनमेव हि आश्रीयेत। यदि शतदूषणीकाराणां मनस्यपि केवलं निन्दाकरणमेवाभिप्रेतं स्यात्, तर्हि 'अन्त्यरोदयः' इत्येव हि उक्तं स्यात्। येन शङ्कर, वानर, पामराद्यन्त्यरपदोपस्थित्या निन्दाया करणमपि सम्पद्यते। परंतु महनीयानां तादृशी नीचप्रवृत्तिः स्वप्नेऽपि न भवेत्। युज्यते च एतेषामेव महामहोपाध्यायानां एतत् यत् मतप्रवर्तकानां महतामाचार्याणां चण्डालत्वेन परिकीर्तनमिति। आस्तामिदम्। एतत्स्मरणमपि नरकावहम्॥ यदि हि म. म. अनन्तकृष्णशास्त्रिणामपि सौमनस्यं स्यात् तर्हि 'लक्ष्मणोदयः' इति निर्दिष्टं स्यात्। तदभावाच्च म. म. शास्त्रिणां मनोविकार एव हि सूचितो भवति।

वस्तुतस्तु परिशीलने अज्ञान, अन्यथाज्ञान, विपरीतज्ञानानामाकरभूतास्त्वेते म. म. शास्त्रिणः शतभूषणीकाराः सर्वथा शतदूषणीदर्शने स्पर्शने चानधिकारिण इति। शतदूषणीपरीक्षायां तु सर्वथा एतेत्वनधिकारिणः। कतिपयोदाहरणैः एतेषामज्ञानादिकं प्रकाशयामः—
तथापि प्राणपादे (द्वितीयाध्याय चतुर्थपादे) 'अणवश्च' 'श्रेष्ठश्चे'ति सूत्रद्वयं तावत् श्रूयते। तत्र श्रीभाष्यकारदृष्ट्या 'अणवश्चे'ति सूत्रं इन्द्रियाणामणुत्वस्थापनपरम्। श्रेष्ठश्चेति सूत्रं तु मुख्यप्राणस्य वायुविकारस्योत्पत्ति-

प्रतिपादनपरम् । परं तु म. म. शास्त्रिभिः लिख्यते, "श्रीभाष्यकारदृष्ट्या तत्र 'अणवश्चे'ति बहुवचनान्तेन कार्यात्मना निर्देशः, 'श्रेष्ठश्चे'ति कारणात्मनैकत्वमिति" इति । तदिदमतीव विस्मयावहम् । न ह्यहंकारिकाणामिन्द्रियाणां वायुविकारस्य च प्राणस्य कार्यकारणभावः मनसाऽपि शक्यशङ्कः । अतः अत्र अज्ञानम् । एवं श्रीभाष्यकारदृष्ट्या आकाशाधिकरणे भूतसूक्ष्मविषयकः पूर्वपक्षः इति शतभूषणीकारकथनमप्यज्ञानेनैव ।

एवं 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति सूत्रं सूत्रार्थश्च अन्यथा गृहीत्वा लिखितः शतभूषण्यां म. म. शास्त्रिभिः । 'ब्राह्मेण रूपेण जैमिनिरुपन्यासादिभ्यः' इति शतभूषण्यां वारं वारं रूपपदघटितमेव सूत्रं लिख्यते, इति सूत्रानुपूर्व्यामेवान्यथाज्ञानम् । तदर्थश्च एवं विवृतः शतभूषणीकृद्भिः 'मुक्तात्मस्वरूपं तु ब्राह्मेण' इत्यादिन्यायैः निर्विशेषब्रह्मस्वरूपं ५.लाध्याये व्यक्तम्' इति । परं तु शङ्कराचार्यैरेव 'ब्राह्मेणेति' सूत्रे प्रतिपाद्यमानं रूपं सविशेषस्वरूपमेवेति वर्णितमिति, सूत्रविषये अन्यथाज्ञानं, सूत्रार्थविषये च विपरीतज्ञानम् । स्वसिद्धान्तार्थे एव एतादृशविपरीतज्ञानं च बहुविस्मयावहम् ।

एवं "शाबरभाष्ये 'अथातो धर्मजिज्ञासे'त्यत्र अधर्मजिज्ञासेति पदच्छेदः कृतः" इति शतभूषणीकारकथनमप्यज्ञानादेव । कुत्राप्येतादृशभाष्यानुपलंभात् । एवं जैमिनिद्वयपरिकल्पनं, तत्साधनाय च "कर्मभेदं' इति जैमिनिसूत्रं 'कर्मभेदे' इति प्रविपरिणम्य तस्य स्वमतस्थापकत्वेनोपन्यासः इत्यादिकं सर्वमन्यथाज्ञानेनैव । स्पष्टीकृतं चैतत् तत्त्वाद्परीक्षासमालोचने । लक्ष्मीसहस्रम् श्रीमन्निगमान्तदेशिकैरेवारचितमित्येतत्तु भूषणीकाराज्ञानस्य समग्रमुदाहरणम् । एवं परश्शतमुदाहरणान्यत्रोपलभ्यते । असाधुशब्दाश्च बहवः उपलभ्यन्ते । तथा अव्ययानां सुबन्ततया प्रयोगः नियतलिङ्गानां विषयादिशब्दानां विशेष्यनिघ्नतया

ज्ञात्वा तत्तद्विशेष्यलिङ्गविशिष्टतया प्रयोगश्चेत्येवमादिदोषाश्चासंख्येयाः। एतादृशदोषपूर्णानामेतेषां महामहोपाध्यायानां श्री वेदान्तदेशिकानुगृहीतशतदूषणीखण्डनकरणार्थं प्रवृत्तिः महान्तं विस्मयं हि जनयति।

इतःपरं केवलाद्वैतविशिष्टाद्वैतयोः प्रक्रियाभेदाः भूमिकारूपेण किञ्चिदिव प्रथमं प्रस्तूयन्ते। एतद्ग्रन्थावतरणे च विस्तरतः ते प्रतिपादिताः। अत्र तु संग्रहेणावेदयामः।

तत्र विवर्ताद्वैतिनो हि मन्यन्ते सजातीयविजातीयस्वगतविशेष शून्यं ब्रह्मैकमेव तत्वम्। तत्र च 'तत्वमसि', 'अहं ब्रह्मास्मि' 'प्रज्ञानं ब्रह्म' 'अयमात्मा ब्रह्म' इतीमानि चत्वार्येव वाक्यानि प्रमाणानि तेषामेव च वेदत्वमपि। अन्येषां तु भेदप्रतिपादकवाक्यानां न मुख्यं वेदत्वं, अपि तु एतन्निकटवर्तित्वेन वेदत्वं प्रामाण्यं वा। विशेषप्रतिपादनस्य च निर्विशेषपदोपस्थापितविशेषाभावं प्रति प्रतियोगिसमर्पकविधयोपयोगः इति।

यथोक्तं संक्षेपशारीरके—

'उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्तः' इति।

'यतो महावाक्यत एव पुत्रः
विजिज्ञिवानस्य पितुस्सकाशात्।
इति श्रुतं तेन स एव वेदः
तथा च सैवोपनिषच्च सिद्धा'। इति।

'अतोऽन्यदत्र निकटं तेनात्र वेदादिगीः' इति च।

विशिष्टाद्वैतिनस्तु तदेतन्नानुमन्यन्ते-सर्वस्यापि वेदस्य एकविधमेव प्रामाण्यं युक्तम्। वेदवाक्येषु केषांचिदेव प्रामाण्यं, केषांचिच्चाप्रामाण्यमिति वर्णनस्यैवायोगात्। निरूपितं चैतत् श्लोकवार्तिककारैः तत्सिद्धि-

पेटिकायाम् । महावाक्यत्वेनाभिमतेषु चतुर्षु वाक्येष्वपि न निर्धर्मकवस्तु-सिद्धिः । तत्र 'प्रज्ञानं ब्रह्म' 'अयमात्मा ब्रम्ह' इति वाक्ययोः न विवर्ताद्वैतासाधारण्यम् । ब्रह्मण एव व्यापकत्वेन ज्ञानवत्वेन च आत्मत्व-प्रज्ञानत्वोपपत्तेः । अवशिष्यते 'तत्वमसि' 'अहं ब्रह्मास्मि' इति वाक्य-द्वयम् । तत्र 'तत्वमसी'ति छान्दोग्यवाक्यम् । तत्र च पूर्वं 'अनेन जीवेने'त्यादिवाक्यैः परमात्मनः सृष्टिहेतुत्वस्य, सृष्टवस्तुषु अन्तर्यामित्वेन प्रवेशस्य च प्रतिपादनेन, 'ऐतदात्म्यमिदं सर्वं' इति 'तत्वमसी'ति वाक्यतः पूर्वं विद्यमानेन एतद्वाक्यखण्डेन, सर्वप्रपञ्चस्य परमात्मात्मत्वा-भिधानेन च सकलप्रपञ्चान्तर्गतः श्वेतकेतुरपि तदात्मकत्वेनावगत इति ब्राम्हणादिशब्दवत् सर्वेषां शब्दानां आत्मपर्यन्ततायाः सिद्धौ परमात्मनः सर्वान्तरत्वेन शरीरात्मभाव एवेदं सामानाधिकरण्यम् नत्वभेदे । अन्यथा पूर्वं सृष्ट्यादिप्रतिपादकप्रकरणविरोधापत्तेः ।

एवमेव 'अहं ब्रम्हास्मी'ति बृहदारण्यकवाक्यमपि न अद्वैत-साधकम् । 'अहं ब्रम्हास्मी'त्यस्मात् पूर्वं 'तदात्मानमेवावैत्' इति श्रूयते । तत्र आत्मन् शब्दः अन्तःप्रविश्य नियन्तुर्वाचकः । अत्र च 'तदात्मानमेवावैदहं ब्रम्हासीत्यत्र 'आत्मानमित्यस्याभावेऽपि' 'अहं ब्रम्हासीत्यवैत्' इत्युक्तावपि वेदनाश्रयस्य ब्रम्हण एव अहमित्यनेन प्रतीत्या ब्रम्हविषयकवेदनलाभेन आत्मानमित्यस्य वैयर्थ्यप्रसङ्गेन अन्तर्यामिविषयकमेव वेदनमेव 'अहं ब्रम्हास्मी'त्यत्र विवक्षितम् । पूर्व-मस्मिन्नेव प्रकरणे 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यत्र चतुर्मुखादि सर्वशरीरेषु प्रवेशस्य 'नानेन किञ्चनानावृत' मित्यादिवाक्यपर्या-लोचनया चतुर्मुखादिजीवान्तर्बहिर्व्याप्तेरपि आत्मशब्दार्थतया विवक्षि-तत्वेन 'तदात्मानमेवावैदहं ब्रम्हास्मी'त्यत्र चतुर्मुखादिसर्वान्तर्यामि-वेदनमेव विवक्षितम् । सर्वान्तर्यामिवेदनस्यात्र विवक्षितत्वादेव 'तस्मात्

तत्सर्वमत्राभवत्' इत्यनन्तरवाक्यमत्रोपपद्यते। अत एव 'तद्यो देवानां प्रत्यबुध्यत, स एव तदभवत्'। यथर्षीणां तथा मनुष्याणां तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति तदिदमप्येतर्हि य एवं वेद अहं ब्रम्हास्मीति'। 'स इदं सर्वं भवति इत्यादि तदनंतर-श्रुतिरपि अन्तर्यामिवेदनाभिप्राया सङ्गच्छते। अतः 'अहं ब्रम्हास्मि' इति महावाक्यं जीवाभिन्ननिर्विशेषचिद्बोधकं न संभवति इति अद्वैतसंमत-निर्विशेषचितः अप्रामाणिकत्वमेव स्वसङ्केतमात्रसिद्धत्वमेवचेति सिद्धम्। श्रीभाष्यार्थाङ्गीकार एव 'एष पन्था एतत्कर्म, एतद्ब्रम्ह, एतत् सत्य' मिति वेदार्थभूतयोः कर्मब्रम्हणोरुभयोरपि एकविधसत्यताप्रतिपादक-श्रुतेरप्युपपत्तिः।

पूर्वनिर्दिष्टानि च महावाक्यानि 'सत्यं ज्ञान'मित्यादिवाक्यानि च संसर्गानवगाह्यखण्डचिन्मात्रविषयकं बोधं जनयन्ति। अत एव च तत्र अखण्डार्थे सामानाधिकरण्यम्। एतादृशाखण्डार्थप्रतिपादनं च सर्वपदलक्षणया। अभिहितान्वयवाद एव चेष्टः नत्वन्विताभिधानवादः वाक्यार्थज्ञानमात्रादेव च मुक्तिः, न तूपासनादीनां तत्रावश्यकता, इत्यादि च विवर्ताद्वैतिनां संमतम्।

विशिष्टाद्वैतिनस्तु — शब्दात् निस्संसर्गकवाक्यार्थबोधः कुत्रापि न दृष्टचरः, अन्विताभिधानवादिनां मते संसर्गे शक्तेरेवाङ्गीकारात् संसर्गविशेषस्य च वाक्यार्थमहिम्नैव बोधः। अभिहितान्वयवादिमते प्रकृतिप्रत्ययार्थसंसर्गे, केषांचिन्मते प्रवृत्तिनिमित्ततदाश्रयसंसर्गेऽपि शक्तेरेवानङ्गीकारात् वाक्यादिबलादेव तद्भानमिति पक्षद्वयेऽपि संसर्गा-विषयकबोधः अप्रामाणिक एव। यत्र तु एकविधादेव वाक्यात् विभिन्न-संसर्गकबोधः आनुभाविकः तत्र तात्पर्यबलादेव संसर्गविशेषबोध इति नैयायिकानां मतम्। पदतात्पर्यबलादेव पदार्थैः लक्षणया संसर्गा-

विषयकविशिष्टवाक्यार्थबोधः इति च भाट्टानां मतम्। न तु क्वापि शब्दात् संसर्गाविषयक शाब्दबोधः। अत एव मण्डनमिश्रेण ब्रम्हसिद्धौ "तथा च 'तत्तुसमन्वयात्' इति चोदनालक्षणाद्धर्मात्तु शब्देन ब्रम्ह समन्वयगम्यमित्युक्तम्। समन्वयो हि पदार्थानां संसर्गे विनियोगः। ततो ब्रम्ह गम्यते न चोदनातः॥" इत्युक्तम्। अत्र 'तत्वमसी'ति वाक्यं पूर्वमुपादाय 'सदसीति धारये'दित्युक्त्या महावाक्यानां संसर्गविषयकबोधजनकत्वमेवाङ्गीकृतम्। अतः 'तत्वमसी'त्यादौ स्मृतिप्रमाविलक्षणनिर्विकल्पकशब्दप्रमाणजन्यशाब्दबोधः अखण्डार्थनिर्विशेषविषयकः न कस्यचिद्दार्शनिकस्य शब्दप्रमाणगम्यत्वेन संप्रतिपन्न इति निर्विशेषचित इव अखण्डार्थबोधस्य अखण्डार्थसामानाधिकरण्यस्य शब्दानां संसर्गाविषयकबोधजनकत्वस्य च व्योमारविन्दतुल्यत्वमेव। विस्तृतं चैतत् अखण्डार्थसामानाधिकरण्यभङ्गवादपरीक्षासमालोचनादौ।

किंच 'सत्यं ज्ञान'मित्यादि (पदार्थसामानाधिकरण्यं) वाक्येषु यदि बहुभिरपि सत्यज्ञानादिपदैः एकं निर्विशेषमेव बोध्यं तर्हि एकमेव पदमर्थवत् अन्यत्सर्वं व्यर्थमेव स्यात्। न च सत्यादिपदानां न विधिरूपार्थपरत्वम्, किं तर्हि असत्याद्व्यावृत्तिबोधकत्वेन निषेधपरत्वमेव तदा च व्यावर्त्यभेदान्न वैयर्थ्यमिति वाच्यम्। तदापि अखण्डार्थत्वभङ्गः, व्यावृत्तिरूपैरेव विशेषणैः ब्रम्हणस्सखण्डत्वात्। नन्वस्तु तर्हि व्यावृत्तिर्ब्रम्हस्वरूपैव, तथा च व्यावृत्तिभेदेनार्थवत्त्वं, व्यावृत्तीनां स्वरूपत्वादैक्यं चोपपन्नमिति चेत्तदपि न, स्वरूपभूतायाः व्यावृत्तेः नित्यस्वयंप्रकाशत्वेन प्रपञ्चभ्रमो न स्यात्। कथं तर्हि शौक्ल्यादीनां स्वरूपमेव भेदः? इत्थम्—शौक्ल्यादीनां स्वरूपप्रतिभासे कार्ष्ण्याद्यध्यासाभावात्। शौक्ल्यादयो हि स्वपरनिर्वाहकाः। तेषां प्रतिभासे च न कार्ष्ण्याद्यध्यासः। अतो युक्तं स्वस्यैव भेदत्वं शुक्लादिषु। ब्रह्म तु न

धर्मः । नापि च ब्रम्हप्रतिभासे प्रपञ्चाध्यासनिवृत्तिः । अतः कथं व्यावृत्तिरूपत्वं ब्रह्मणः ? । अयमत्रार्थः — ब्रह्मस्वरूपस्यैव व्यावृत्तिरूपत्वे प्राभाकरशिष्यत्वापत्तिः । धर्मस्य कस्यचिद्व्यावृत्तिरूपत्वे कणभक्षाक्षपादादिमतप्रवेशापत्तिः, तथा च धर्मभेदवादखण्डनगर्वः निर्वापितः स्यादिति । अतः अखण्डवाक्यार्थपक्षोऽपि खण्डित एवेति तदर्थं अखण्डार्थे समानाधिकरण्यङ्गीकरणमपि दुर्वैतण्डिकतामेव द्योतयेत् ।

एतेन 'पुरुष एवेदं सर्वं' 'तत्वमसी'त्यादौ बाधायां सामानाधिकरण्याङ्गीकारान्न विशिष्टविषयत्वसिद्धिरिति पक्षोऽपि प्रतिक्षिप्त एव । लोके हि 'चोरः स्थाणुः'इत्यादौ बाधायां सामानाधिकरण्यमिति प्रसिद्धम् । तत्रापि एकश्शब्दः अध्यासयोग्याकृतिविशिष्टं वस्तु वदति यश्चोरत्वेन संप्रतिपन्न इति । अपरश्च शब्दः भेदयुक्तं वस्तु वदति स्थाणुरिति । तथा च यः एतावन्तं कालं चोरत्वेन संप्रतिपन्नः स स्थाणुरिति चोरप्रतीतिविषयत्वं स्थाणुत्वं चैकवस्तुनिष्ठमेव हि प्रतीयते । तथा च सविशेषविषयत्वमेव । चोरत्वस्थाणुत्वयोश्च परस्परं विरुद्धत्वात् चोरत्वबाधेन बाधार्थमित्युच्यते । यदि स्थाणुत्वमपि मिथ्या कथं चोरत्वं बाध्येत ? । अतः विरुद्धधर्मसद्भाव एव तद्विरोधिधर्मबाधाङ्गमिति यथा चोरत्वस्य स्थाणुत्वं बाधकम् , एवं तत्पदार्थगतासाधारणधर्मदर्शनमेव प्रपञ्चबाधहेतुर्भवति निर्धर्मकत्ववादिनां बाधायां सामानाधिकरण्यमप्युक्तमेव । विस्तृतं चैतत्-बाधायां सामानाधिकरण्य भङ्गवादपरीक्षासमालोचने ।

वेदान्तवाक्यानामज्ञातार्थज्ञापकत्वेन प्रामाण्याद्वाक्यजन्यज्ञानं प्रमात्मकं निर्विशेषविषयकमेव अविद्यानिवर्तकम् । न तु सविशेषविषयकस्मृतिरूपोपासनात्मकं ज्ञानम् । तस्य अप्रमात्वात् । तत्र च प्रमाणं तत्वौपनिषदं पुरुषं' 'आचार्यवान् पुरुषो वेद' 'तद्धास्य विजज्ञौ' इत्यादिवाक्यानि इति च वर्णयन्त्यद्वैतिनः

सिद्धान्तिनस्तु— न तावद्वाक्यजन्यज्ञानमात्रमविद्यानिवर्तकम्। तस्य विधानमन्तरेण वाक्यादेव सिद्धेः 'मामेवविजानीहि' 'स' म आत्मेति विद्यात्' मामायुरमृतमित्युपास्वेत्यादिविधिवाक्यानां वैफल्याच्च। वाक्य-जन्यापरोक्षज्ञानमेव अविद्यानिवर्तकमिति च न 'तंत्वोपनिषद' मित्या-दिना बोध्यते। 'तंत्वौपनिषद' मित्यत्र तद्धितप्रत्ययस्य प्रत्यक्षभिन्नोप निषज्जन्यप्रमात्मकशाब्दबुद्धिविषयत्वं यत् तत्परतया प्रत्यक्षपरत्वस्था-पनासंभवात्। 'तंत्वोपनिषदं' इति बृहदारण्यकश्रुतिः। अत्र पुरुष शब्दः 'स यत् पूर्वोऽस्मात् सर्वान् पाप्मान औषत्' स वा अयं सर्वासु पूर्षु पुरिशयः इति बृहदारण्यकवाक्यान्तरानुरोधेन तत्रोक्तनिरुक्त्यनु सारात् जगत्कारणत्वसर्वान्तर्यामित्वसर्वपापदाहकत्वरूपधर्मविशिष्टस विशेषस्यैवोपनिषत्तात्पर्य विषयत्वमावेदयतीति नात्रनिर्विशेषस्य सुतरामव काशः। एव 'आचार्यवान् पुरुषो वेद' (छा) 'तद्धास्य विजज्ञौ' (छा) इति श्रुतिद्वयमपि प्रमात्मकबुद्धिपरमेव, न तु वाक्यजन्यापरोक्षज्ञानपरम्। अतः न क्वापि वाक्यजन्यज्ञानस्याविद्यानिवर्तकत्वं प्रतिपादयितुमलमिति अद्वैतिनां पक्षः अयुक्त एवेति वदन्ति। यथा च मोक्षसाधनत्वमुपा सनात्मकज्ञानस्यैव न तु निर्विशेषज्ञानमात्रस्य, तंथास्पष्टं (८७-८८) पुटयोः।

'नेह नानास्ति किंचने'ति श्रुतिः सकलभेदनिषेधपरा। अतः सजातीयविजातीयस्वगतसर्वभेदाः निरस्ता इति निर्विशेषं ब्रम्हैकमेव तत्वमिति च विवर्ताद्वैतिनः।

सिद्धान्तिनस्तु—'नेह नानास्ति किंचने'ति श्रुतौ विनञ्भ्यां नानाञौ न सह' इति पाणिनिसूत्रे, 'असहवाचिभ्यां' इति महाभाष्ये च नानाशब्दस्य असहभूतार्थबोधकत्वेन ब्रम्हासहभूतार्थस्यैव निषेधः नत्वविनाभूतस्येति नानयाऽपि श्रुत्या सकलभेदनिषेधः संगच्छते इति

वदन्ति। एतदुक्तं भवति। 'एवं धर्मात् पृथक् पश्यन्' इति 'नेह नानास्ती'ति श्रुत्यनंतरश्रुतिः। तत्र ब्रम्हप्रपञ्चयोः पृथग्दर्शनस्यैव निषेधेन 'नेह नानास्ति' इत्यत्रापि विनाभूतार्थस्यैव निषेधः। तदैव च 'यथोदकं दुर्गे वृष्ट'मित्युत्तरश्रुत्यानुगुण्यमिति। अद्वैतिनां मते 'नेहास्ति किञ्चने'त्येतावतैवालमिति नानाशब्दस्य वैयर्थ्यम्।

विवर्ताद्वैतिनस्तु—'अहमर्थो नात्मा, अपि तु संविदेव। अहमर्थस्तु अन्तःकरणावच्छिन्नचिदेव। सचाहमर्थो अनित्यः, प्राणोपाधिकः मन उपाधिको वा। स एव चौपाधिकः प्रमाता। घटाद्यवच्छिन्नचित् प्रमेयम्। मध्यभागावच्छिन्नचित् प्रमाणम्। इति वृत्तेः एकलोलीभावमङ्गीकृत्य प्रतीत्युपपादनं क्रियते। धर्मभूतज्ञानस्वीकारः तस्य च नित्यतादिस्वीकारश्चायुक्तः। अपि तु वृत्तिज्ञानेनैव सर्वोपपत्तिः इति वदन्ति।

सिद्धान्तिनस्तु—अहमर्थस्य अस्थिरत्वं सुषुप्तौ लयः संविद आत्मत्वं च प्रत्यक्षश्रुतिप्रभृतिसर्वप्रमाणविरुद्धम्। अत एव च 'अनुस्मृतेश्चे'ति सूत्रभाष्ये शङ्कराचार्यैः प्रत्यभिज्ञानप्रत्यक्षेणाहमर्थस्य स्थिरत्वं साधितम्। एवं 'स एव तु कर्मानुस्मृतिविधिभ्यः' इति सूत्रभाष्येऽपि 'येनाहं नामृतास्यां किमहं तेन कुर्यां' 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादि श्रुतयोऽपि अहमर्थस्य मोक्षान्वयित्व एव श्रवणादौ प्रवृत्तिमुपपादयन्त्यः अहमर्थविनाशवादिनां पक्षं विनाशयति। परप्रदर्शित प्रमाणप्रमातृप्रमेयविभागोप्ययुक्तः। दीर्घदण्डवत् एकलोलीभावः इत्यस्यैवायोगात् दीर्घदण्डस्थले हि दण्डमूलभागस्य दण्डमध्यभागेन दण्डाग्रभागसंबन्धस्य च लोके क्वाप्यदर्शनात् प्रश्नोपनिषदि अहमर्थेन प्राणमनसोः सृष्टिप्रतिपादनात् अहमर्थस्य प्राणोपाधिकमनउपाधिकत्वं च परसंमतं न घटते। 'तन्मनः प्राण उत्तरात्' 'वाङ्मनसिदर्शनात्'

इति सूत्रयोः 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इतिश्रुतौ च प्राणमन उपाधिकत्वं जीवस्य न संभवति इति स्पष्टम् । पररीत्या च 'अहं जानामि' इत्यत्र अहमर्थे जानात्यर्थे चितः घटनमिति वक्तव्यम् । तच्च न संभवति तत्र चितः द्वेधा भानस्य कस्याप्यनुभवासिद्धत्वात् ।

यथा 'न चाहमर्थो व्यामोह इति शक्यते वक्तु' मित्यादिशावरभाष्यं तद्विवरणायप्रवृत्तश्लोकवार्तिकं च अहमर्थस्यैवात्मत्वं साधयत् परमतं निवारयति तथा अस्मिन्नेव ग्रन्थे स्फुटमुपपादितम् । 'ज्ञोऽत एव' विज्ञातारमरे केन विजानीयादित्यादिप्रमाणानि च परेषां प्रतिकूलानि । 'ज्ञ' इत्यत्र कर्तरिघञ् स्वीकृत्य ज्ञानकर्तृत्वरूपज्ञातृत्वबोधस्यैव प्रामाणिकत्वात् । अतः ज्ञाता कर्ता भोक्ता चाहमर्थः स एव च आत्मेति प्रामाणिकः पन्थाः इति । यथा च ज्ञातृत्वादिनां नाध्यस्तत्वं तथा ज्ञातृत्वाध्यासभङ्गवादपरीक्षासमालोचने प्रपञ्चितम् ।

## ॥ धर्मभूतज्ञानविचारः ॥

प्रभावतः दीपमण्यादित्यादेः पदार्थस्य प्रभेव, आत्मनः अपृथक् सिद्धं श्रुतिबलान्नित्यं आत्मनि ज्ञातृत्वव्यवहारप्रयोजकीभूतं आत्माश्रितत्वेन स्वयंप्रकाशत्वेन च धर्मभूतज्ञानमिति व्यवह्रियमाणं विषयप्रकाशकं संकोचविकासशीलं अत एव च स्वाश्रयस्य जीवस्य बद्धत्वमुक्तत्वावस्थयोः कारणं च धर्मभूतज्ञानं श्रुत्यादिप्रमाणवशादङ्गीक्रियते । तत्र च प्रमाणानि 'न विज्ञातुर्विज्ञातो विपरिलोपो वर्तते' अविनाशि वा अरे अयमात्मा अनुच्छित्तिधर्मा' इत्यादिश्रुतयः

'तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम्'

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।

दोषप्रहाणान्नज्ञानमात्मनः क्रियते तथा ॥' इत्यादि स्मृतयः

'ज्ञोऽत एव' 'गुणाद्वाऽऽलोकवत्' 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्' इत्यादीनि ब्रम्हसूत्राणि अनुभवश्चेति आकरे व्यक्तम्।

एवमेतादृशे श्रौतसिद्धान्ते विराजमानेऽपि दिवान्धमान्धालाद्यन्धकारवदपरिहार्यभ्रान्तियुक्ताः स्वसिद्धान्तस्य सर्वथा अपरिहार्यानेकदोषसहस्रसंकुलत्वेऽपि तत्र सर्वथा जात्यन्धास्सन्तः एवं ह्यत्राक्षिपन्ति 'धर्मभूतज्ञानस्य संकोचविकासशालित्वेऽपि यदि नित्यत्वं तर्हि आत्मसंकोचवादिना आर्हतेन किमपराद्धम्। विप्रतिषिद्धं हि नित्यत्वं संकोचविकासौचेति। उक्तं हि श्रीभाष्यकृतैव 'एवं चात्मा कार्त्स्न्यम्' 'न च पर्यायादप्यविरोधो विकारादिभ्यः' इत्यत्र आत्मनः शरीरपरिणामाभ्युपगमे गजपिपीलिकाशरीरयोः पर्यायेण प्रवेशे आत्मनोऽकृत्स्नत्वं पर्याय शब्दित संकोचविकासाभ्यामविरुद्धमित्याशंक्य तथा सत्यवयवोपचयापचाभ्यामनित्यत्वं घटवत् प्रसज्यते इत्युक्तम्। तथा च संकोचविकासयोर नित्यत्वनैयत्यस्य अन्यत्र श्रीभाष्यकृतैवोक्तत्वात् इह च ज्ञानस्य नित्यात्मधर्मतया नित्यस्यैव संकोचविकासाङ्गीकारो विरुद्ध इति।

तदिदं स्वोन्मादप्रदर्शनमेव। अवयवापचयोपचययोरेव अनित्यताव्याप्यतया पर्यायात्मकतया च जैनपरिभाषितयोः तत्राभिहिततया प्रसरणाप्रसरणयोः ज्ञाननिष्ठयोः कर्मकृतयोः संकोचविकासयोः अधिकानधिकविषयत्वरूपयोः अनित्यत्वाव्याप्यत्वेन तयोरत्यन्तविलक्षणत्वात्। ज्ञानं हि नाम निरवयवं द्रव्यम्। न हि तस्य संकोचविकासौ अवयवापचयोपचयौ भवतः। किं तर्हि? दीपप्रभाया इव विषयव्यापनाव्यापनरूपौ। ज्ञानस्य प्रसरणं हि स्वाभाविकं संकोचस्त्वौपाधिकः। स च बह्वल्पविषयकत्वरूपः। तत्रोपाधिस्तु प्राचीन कर्मैव। 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति स्मरणात्। तत्र अज्ञानं नाम अविद्यामायापरनामकं प्राचीनं कर्मैव।

अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ॥

इति विष्णुपुराणोक्तः । 'माययाऽपहृतज्ञानाः' इत्यत्र माया शब्दोप्येतदर्थक एव । मायाचाविद्याविर्भावः इति तत्रत्यभाष्ये व्यक्तम् ।

एतदुक्तं भवति—जीवस्तावदणुः
वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवस्य विज्ञेयः स चानन्त्याय कल्पते ।

'आराग्रमात्रोऽप्यवरोऽपि दृष्टः' इति श्रुतेः । न चाणुत्वं औपाधिकं, उपाधेरनुक्तेः । 'एषोणुरात्मा चेतसा वेदितव्यः' इति मुमुक्षूपास्यत्व-श्रवणात् । नह्यौपाधिकाकारमूलकशोकमोहादिमान् मुमुक्ष्वनुसंधेयो भवति । 'तेन प्रद्योतनैष आत्मा निष्क्रामति' इति केवलस्यात्मनः भूतसूक्ष्माणामिव निष्क्रमणं श्रूयते । न च विभोर्निष्क्रमणं शक्यशङ्कम् । तदाह सूत्रकारः 'उत्क्रान्तिगत्यागतीना'मिति । श्रुतिश्च 'तमुत्क्रा-मन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति । एवमणोर्जीवस्य आलोकादि-दीपस्येव सर्वदेहव्याप्तिसुखाद्युपलब्धिहेतुः तदन्यः तत्स्वाभाविको धर्मः कश्चित् ज्ञानाख्यः श्रुतिसिद्धः अवश्यमङ्गीकर्तव्यः । स च नित्यः नित्यात्मस्वाभाविकधर्मत्वात् । 'न विज्ञातुर्विज्ञातेर्विपरिलोपः' 'अवि-नाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा'

'यथा न क्रियते ज्यौत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा'
'यथोपादकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतः संभवः कुतः ।
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।

प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥ ' इत्यादिभ्यः। तच्च ज्ञानं स्वाश्रयात्मवत् अणु, तदपृथग्देशं च यदि स्यात् तदा तत्कल्पना व्यर्थैव। तथा च श्रुतिस्मृती 'स चानन्त्याय कल्पते। 'अङ्गुष्ठमात्रो रवितुल्यरूपः' 'ज्ञानेन च तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम्। ' इति।

अत्र 'रवितुल्यरूपः' 'आदित्यवत् प्रकाशयति' इत्यनेनेदं सूचितम्। यथा दिक्चक्रवालव्याप्तस्यापि रविप्रकाशस्य मेघकेतुग्रहादिभिरात्यन्तिकानात्यन्तिकसंकोचः, तथा स्वतो विसृमरस्यापि धर्मभूतज्ञानस्य कर्मणा आत्यन्तिकानात्यन्तिकसंकोचः, प्रतिबन्धनिवृत्तौ च प्रसरणमविरुद्धमिति 'प्रकाशयती'त्यनेन विषयाप्रकाशनमेव संकोचः नत्ववयवापचयः' इति दर्शितम्। एवं 'ज्ञानं उत्पन्नं, ज्ञानं विनष्ट'मिति प्रतीती च न ज्ञानस्वरूपोत्पत्तिविनाशं साधयतः, किंतर्हि? ज्ञानस्य तत्तद्विषयव्याप्तौ उत्पत्तिव्यवहारः, तद्विषयसंबन्धाभावे च विनष्टत्वेन व्यवहारः। अत एव, 'घटज्ञानं उत्पन्नम्, घटज्ञानं नष्ट'मिति तत्तद्विषयघटित एव उत्पत्तिव्यवहारौ परिदृश्येते। न तु विषयानुल्लीढतया। अतः ज्ञानोत्पत्तिनाशव्यवहारौ न ज्ञानानित्यतां साधयितुमलम्।

एतेन 'धर्मभूतज्ञानेऽपि ज्ञानमुत्पन्नम्। ज्ञानं नष्ट'मिति आब्रह्मस्तंबपर्यन्तानुभवात्'। 'ज्ञानं नष्ट'मिति हि सार्वलौकिको अनुभवः' 'अतः धर्मभूतज्ञानस्यानित्यत्वमेवे'त्यादिशतभूषणीकारोक्तिरपि नैवावकाशं लभते इति सिद्धम्।

तच्चेदं धर्मभूतज्ञानं व्यापनशीलं 'सचानन्त्याय कल्पते' इति श्रुतेः। न च 'सचानन्त्याय कल्पते' इति श्रुतिः न ज्ञानविकासपरा किंतु उपाधिना परिच्छिन्नस्य जीवस्यैव उपाधित्यागाज्जीवानन्त्यपरापि कुतो न

भवेदिति वाच्यम्। ज्ञानानन्त्यादिपरनिरुक्तगीतादिविरोधात्। जीवे अणुत्वमेव स्वाभाविकमित्युपपादितत्वाच्च। 'सचानन्त्याय कल्पते' इत्यत्र 'स'इत्यनेन प्रकृताणुत्वविशिष्टं परामृश्य तद्गततया विधीयमानस्य आनन्त्यस्य स्वरूपानन्त्यपरत्वायोगाच्च। न च वस्तुमात्रपरामर्शित्वमेव 'स' इत्यस्य न तु अणुत्वविशिष्टपरामर्शित्वमतो न दोष इति वाच्यम्। विशेषाकारविशिष्टतया वस्तुनि प्रस्तुते; सर्वनाम्ना सामान्याकारेण परामर्शायोगात्। न हि घटे प्रस्तुते 'स' इति मृण्मात्रं परामृश्यते।

ननु 'यो बालः स युवत्वाय कल्पते' इत्यादाविव विरोधि धर्मान्तरश्रवणे वस्तुमात्रपरत्वमपि युक्तमिति चेत्—नैतत्। युक्ता तत्र बालत्वयुवत्वत्वयोः शरीरगतावस्थात्वेन प्रतिपन्नयोः अनन्यथासिद्धेन अवस्थान्तरेण बाधात् तच्छब्दस्य वस्तुमात्रपरता। इह तु उदाहृतोप बृम्हणप्रतिपन्नज्ञानानन्त्येनान्यथासिद्धेन औपसंहारिकानन्त्येन औपक्रमिकविशिष्टपरतात्यागो नैवोचितः। जीवस्य स्वरूपतः आनन्त्यं तु दुर्निरूपितं। तथा हि — पूर्वमणोर्जीवस्य आनन्त्यापत्तिर्नाम अनन्तेन ब्रम्हणा ऐक्यापत्तिर्वा, उत स्वरूपशैथिल्येन मृत्पिण्डस्येव प्रसर्पणं वा, आहोस्वित् पटवद्वेष्टितस्य स्वरूपस्य प्रसारणं वा। नाद्यः अशाब्दत्वात्। 'न हि देवत्वाय कल्पते अरोगत्वाय कल्पते' इत्युक्ते देवैरन्यैरैक्यं वा स्वेतरनिरामयपुरुषैक्यं वा सिध्येत। अपि तु स्वस्य देवत्वादिजातियोगः, आरोग्यादिगुणयोगो वा। एवमानन्त्यशब्दोऽपि प्रकृत्यर्थभूतविशेषणान्वयं धर्मिणो अवगमयति। वस्त्वन्तरं, तेनैक्यापत्तिं, भेदनिवृत्तिं वा, प्रकृत्यंशस्य प्रत्ययांशस्य वा तद्वाचित्वाभावात्। नापि द्वितीयः कल्पः। 'संयुक्तमेतत् क्षरमक्षरं च' 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादिनित्यत्वाक्षरत्वश्रुतिविरोधात्। आत्मन्युपचयापचयविरहस्य प्रामाणिकत्वात्, नापि वेष्टितस्य प्रसरणमिति तृतीयः कल्पः।

एकस्मिन्नेव शरीरे कृत्स्नस्य ब्रम्हणो वेष्टितत्वेन शरीरान्तरस्य जीवशून्यत्वप्रसङ्गात्। ब्रम्हण एव उपाधिना जीवभावो ह्यभ्युपगम्यते। जीवब्रम्हत्वमिच्छतां अश्रुतवेषेन परिकल्पन गौरवं च। अतः स्वाभाविकाणुत्ववतो जीवस्य ज्ञानद्वारकमेव परिच्छिन्नत्वं अपरिच्छिन्नत्वं वा आश्रयणीयमित्यानन्त्यं ज्ञानवैपुल्यमेव। तथा च श्रुत्यनन्तरं 'सर्वं हि पश्यती'ति।

इदं त्विह तत्वम् — आदित्यादेः प्रसृमरप्रकाशस्य कादाचित्कस्संकोचः। जीवस्यौत्पत्तिकः मण्यादेरिव प्रकाशसंकोचः कर्मकृतः, शाणादिनेव ब्रम्हज्ञानेन च तन्निवृत्तिः। पुनश्चाप्रतिबन्धः अपुनरावृत्तिवचनात्। अतश्चाणोः नित्यस्य स्वाभाविकधर्मतया नित्यमेव ज्ञानमनादिकर्मणा विषयावच्छेदरूपसंकोचवदपि नैवानित्यं भवितुमर्हति। इति॥

इदमत्र पृच्छामः—अपरिच्छिन्नस्यैव चिन्मात्रस्यात्मनः अन्तःकरणाद्युपाधिपरिच्छेदात् परिच्छिन्नस्य जीवभावो ह्यद्वैतिभिरङ्गीक्रियते। तत्र कुतो अनित्यत्वं न प्रसज्यत इति। परिच्छेदो हि नाम संकोच एव।

यद्युच्येत प्राग्विकसितस्यैकदेशावच्छेद एव अनित्यतागमकः, ब्रह्मणस्त्वनाद्यविद्यान्तःकरणादिकृतोऽवच्छेदो अनादिरिति नानित्यता प्रसङ्ग इति। कुतस्तर्हि अनादिकर्मसंकुचितस्य धर्मभूतज्ञानस्य अनित्यत्वमापादयितुं महाप्रयत्नः। अतः प्रामाणिकधर्मभूतज्ञानतत्संकोचविकासाङ्गीकर्तॄणां श्रीभाष्यकाराणां मते नानित्यत्वादिदोषप्रसक्तिः। अद्वैतिनामेव हि अप्रामाणिकौपाधिकजीवमभ्युपगच्छतामयं दोष अपरिहार्यः। धर्मस्य आगमापायित्वेऽपि धर्मिणो नित्यत्वस्य न कापि क्षतिः। धर्मधर्मिणोर्भेदात्। उक्तं च वार्तिककारैः—

विक्रियामात्रमाचित्वे न ह्युच्छेदोऽस्य तावता।

स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ ।

न त्ववस्थान्तरप्राप्तौ लोके बालयुवादिवत् ॥ इति(श्लोकवार्तिकम्)
इत्यत्र आर्हतमत इव धर्मभूतज्ञानस्य आत्मनः परिणामरूपत्वाङ्गीकारेऽपि निरन्वयविनाशानङ्गीकारेण अनित्यत्वमापादयितुम् नैव युज्यते इत्युक्तम् । तेनैव न्यायेन सिद्धान्ते धर्मभूतज्ञानस्यात्मापरिणामित्वेऽपि अवस्थान्तरप्राप्तिमात्रेण नानित्यत्वप्रसक्तिरिति शक्यते वक्तुमिति न दोषः ' इष्यते च शंकराचार्यैरपि परिणामिनित्यम् कूटस्थनित्यमिति नित्यद्वयम् । अतः धर्मभूतज्ञानस्य कर्मबलात्संकोचविकासात्मकपरिणामवत्वेऽपि नानित्यत्वशंका युक्ता । एतच्च "स्वतो विकासशक्तियुक्तस्य धर्मभूतज्ञानस्य विकासप्रतिबन्धकं कर्माभ्युपगम्यते । न तु विकसितस्य एकदेशावच्छेदकमिति' श्रुतप्रकाशिकाग्रन्थस्वारस्यादपि व्यक्तम् ।

आर्हतैस्तु गजादिशरीरे विकसितस्यात्मनः अल्पपिपीलिकादिशरीरं प्रविशतः अवच्छेदः स्वीकृत इति तन्मते अनित्यत्वमापादितमिति वैधर्म्यं सुप्रसिद्धं बुद्धिमताम् । शतभूषणीकारादिभिस्तु तदज्ञानेनैवार्हतमततौल्यापादनं स्वोन्मादबलादेव ।

ननु नित्यत्वं संकोचविकासौ चेत्युभयं विप्रतिषिद्धमिति चेत् न उभयोरपि श्रुतत्वात् । न हि श्रुते अनुपपन्नं नाम । यदाह सूत्रकारः ' श्रुतेस्तु शब्दमूलत्वादि 'ति । द्रव्यमात्रस्य स्वरूपेण नित्यत्वं अवस्थारूपं च विकारं प्रत्यक्षेण पश्यतः शङ्काया एवाप्रसराच्च ।

ननु तर्हि नित्यानित्यविभागोच्छेदः स्यादिति चेन्न स्वरूपान्यथाभाववदनित्यम् । तद्रहितं नित्यमिति व्यवस्थोपपत्तेः ।

यथा चाहुर्महर्षयः—

' यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।

परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ।?' इति ।
'आविर्भावतिरोभावजन्मनाशविकल्पवदि 'ति च ।

अचिद्वस्तु च तथेत्यनित्यमित्युच्यते । चिद्वस्तुचातथाभूतमिति नित्यमित्युच्यते ।

ननु अवस्थान्तरापत्तिरेव हि कार्यत्वं, तथा च नित्यं च भवति कार्यं चेति विप्रतिषिद्धमिति चेन्नैतद्विप्रतिपिद्धम् । स्वरूपेण नित्यस्यापि द्रव्यस्य घटत्वाद्यवस्थाविशिष्टवेषेणानित्यतायाः प्रत्यक्षेणोपलंभात् । न हि दृष्टे अनुपपन्नं नाम । दर्शनानुगुण्येन हि सर्वं व्यवस्थाप्यम् ।

यत्तु एवमवस्थायाः अनित्यत्वे यदि तदवस्थं द्रव्यमप्यनित्यं तर्हि गतं ज्ञाननित्यत्वेन । यदि तस्या अनित्यत्वेऽपि तद्वत् द्रव्यं नित्यमेव जितं जैनेन । आत्मनः पर्यायशब्दितावस्थावत्वेऽपि नित्यत्वोपपत्तेरिति दूषणम्—तदप्यपष्ठु—नहि यादृशमात्मनो नित्यत्वं तादृशं नित्यत्वं तज्ज्ञानस्याप्यभ्युपगच्छामः । करणव्यापारवैयर्थ्यप्रसङ्गात् । किन्तु तार्किकाद्यभिमतं ज्ञानस्यागन्तुकधर्मत्वं निराकर्तुं मृदादेरिव स्वरूपतो नित्यत्वं आगन्तुकावस्थाश्रयत्वं च, तेन रूपेणानित्यत्वं तु घटत्वाद्यवस्थाविशिष्टवेषेण मृदादेरिवेष्टमेव । तदेव च प्रसरणाप्रसरणशालित्वमादायोदयास्तमयादिव्यपदेशः । करणव्यापारसार्थक्यं च । आह च, श्रुतप्रकाशिकाचार्यः 'ज्ञानं हि द्रव्यं तस्य स्वरूपातिरेकेण संकोचविकासाख्यमवस्थाद्वयमभ्युपेतम् । अतस्तिरोधानं कर्मणा तत्संकोचः । तन्निवृत्तिस्तु प्रसरः । स एव च विकासः । स चानित्यः । तस्यानित्यत्वेऽपि नित्यस्य ज्ञानद्रव्यस्य स्वप्रकाशत्ववादः स्वप्रकाशरूपप्रसरणार्हत्वनिबन्धनः । अतो अवस्थाद्वयस्यागमापायित्वेऽपि द्रव्यं नित्यमेवेति । मृद्द्रव्यस्य स्थिरत्वेऽपि घटत्वाद्यवस्थस्य तस्य अनित्यत्ववत् ज्ञानाख्यद्रव्यस्य नित्यत्वेऽपि स्मृतित्वानुभूतित्वाद्यवस्थज्ञानानित्यत्वं

युक्तमिति। द्रव्यत्वेऽपि ज्ञानस्य स्वाश्रयमन्तरा वर्तमानत्वायोगात् गुणत्वेन व्यवहारः, यथा प्रभायाः। प्रभायाश्च द्रव्यत्वं शंकराचार्यैरपि साधितम्।

एतेन 'यदि धर्मभूतज्ञानमपि एकत्ववन्नित्यात्मधर्मत्वान्नित्यमित्यभिप्रेयते तर्हि किमेकत्ववद्धर्मभूतज्ञानमपि गुणः, यद्येवं तर्हि श्रीभाष्यसिद्धान्तविरोधः' इत्यादिशतभूषणीकारोक्तिः अज्ञानमूलका सुतरां परास्ता। संख्यावत् गुणत्वानङ्गीकारात्। द्रव्यत्वेऽपि नित्यतदाश्रितत्वमात्रेण गुणत्वोपचारात्।

'किं नित्ये धर्मधर्मिणी अपृथक्सिद्धे दृष्टचरे श्रुतचरे वा श्रीभाष्यसिद्धान्तादन्यत्र कुत्रापि' इति शतभूषणीकारोक्तिरपि दर्शनशक्तिवैकल्यमेव द्योतयति— 'यस्यात्मा शरीरं' इत्यादिश्रुतिः नित्ययोर्जीवपरयोः शरीरात्मभावव्यपदेशात् अपृथक्सिद्धजीवपरमात्मात्मनोः धर्मधर्मिभावं च श्रावयतीति श्रुतचरत्वमेव। पार्थिवपरमाणौ परमाणु पृथिवीत्व जात्योः नैयायिकमते अपृथक्सिद्धित्वं धर्मधर्मिभावश्चेष्टः एवमाकाशद्रव्यत्वजात्योरपि तथा परमाणुतद्गतविशेषयोः, धर्मधर्मिभावः इष्ट एव हि नैयायिकानाम्। एवं मीमांसकमते शब्दानां नित्यद्रव्यत्वेऽपि नित्यदिग्वृत्तित्वात् नित्ययोरेव धर्मधर्मिभावः अपृथक्सिद्धिश्चेति शतभूषणीकारवचनं भ्रान्त्यैव। अतश्च धर्मभूतज्ञानस्य स्वरूपेण नित्यत्वं अवस्थावत्वेन कार्यत्वं चोपपन्नमेव।

अत एवात्मनः उदयास्तमयनिषेधः 'न जायते म्रियते वा विपश्चित्' इत्यादिषु श्रूयते। नैवं ज्ञानस्योदयास्तमयौ निषिध्येतेकस्यांचिदपि श्रुतौ।

ननु धर्मभूतज्ञानकल्पनैव माभूत्, धर्मिण एव जीवस्य कर्मकृतसंकोचविकासकल्पनोपपत्तेः। स्मर्यते हि जीवस्यैव कर्मणा संकोच-

'ययाक्षेतज्ञशक्तिस्सा वेष्टिता नृप सर्वगा' इति । कर्मविनिर्मुक्तस्य तस्यैव चानन्त्यमपि स्यात् ।निरवयवत्वादात्मनस्तदनङ्गीकारे वा तथैव निरवयवस्य तद्धर्मभूतज्ञानस्यापि तन्न स्यात् । बद्धमुक्तावस्थाभेदेनाणुत्व-विभुत्वे धर्मभूतज्ञाने त्वयापि वाच्ये। ते च क्लृप्ते आत्मन्येव स्ताम्। तथा च जितं जैनैरिति चेत् ।

न जीवस्य निर्विकारस्य संकोचविकासयोरसंभवात् । आत्मना हि निर्विकारत्वं प्रमाणप्रतिपन्नम् । न ह्येवं ज्ञानस्य निर्विकारत्वं क्वचिदपि श्रुतम् । प्रत्युत संकोचविकासबोधकश्रुतिपुराणेतिहासवचनान्येव भूयांस्युपलभ्यन्ते । अतः आत्मतिरोधानवचनं घनपटलेन तिरोहितो धर्मरश्मिरितिवत् धर्मभूतप्रकाशद्वारा ह्युपपद्यते । अत एवानन्त्य-वचनमपि तत्परिमितिपूर्वमुक्तम् । ननु ज्ञानस्येव जीवस्यापि संकोच-विकासौ श्रूयेते—यदेकां शाखां जहात्यथ सा शुष्यति । सर्वं जहाति सर्वं शुष्यति इत्यादौ । अतः श्रुतानुगुण्यात् जीवस्यैव तौ किं न स्याताम्। मैवं निरवयवत्व निर्विकारत्ववादि बहुश्रुतिविरोधेन तस्याः श्रुतेः जीवसंकोचपरत्वायोगेन तच्छाखासु भोगाश्रयत्वोपपादकपुण्यपापोप-रतिमात्रपरत्वात् ।

एवं च 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'अविनाशी वा अरे अयमात्मा अनुच्छित्ति धर्मा' 'अवरोधाद्योगुणाः' 'प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनोहिते' 'गुणाद्वाऽऽलोकवत्' 'प्रदीपवदावेशस्तथा हि दर्शयति' इत्यादि स्मृतिसूत्रैः जीवस्यनरूपाति-रिक्तं धर्मभूतज्ञानं स्वरूपतो नित्यमित्यङ्गीकर्तव्यम् ।

एतेन 'न विज्ञातुर्विज्ञातेः' इति श्रुतिः स्वरूपज्ञानाविनाशये प्रतिपादयति । 'संभवति सामानाधिकरण्येनान्वये वैयधिकरण्येनान्वयो

न योग्यः ' इति न्यायेन उभयोष्षष्ट्योः सामानाधिकरण्येन ज्ञानस्वरूपस्य ज्ञातुः विपरिलोपाभावबोधनात्। अत एव निषादस्थपतिन्यायानुग्रहश्च ' इति शतभूषणीकारोक्तिरपि परास्ता ।

किमियं श्रुतिः आत्मनः ज्ञानस्वरूपत्वं प्रतिपादयति, उत ज्ञानस्वरूपस्य आत्मनो नित्यत्वं विपरिलोपाभावरूपं। उतोभयम्। नाद्यः परमते परमात्माभिन्नस्य जीवस्य 'सत्यं ज्ञान' मित्यादिवाक्यैरेव ज्ञानस्वरूपत्वस्यावगतत्वात्। नापि द्वितीयः 'न जायते म्रियते वा' 'नित्यो नित्यानां' इत्यादिवाक्यैः नित्यत्वस्यावगतत्वाच्च। अत एव न तृतीयः कल्पः। वाक्यभेदाच्च। 'विज्ञातुः' इति शब्दस्य वैयर्थ्याच्च। किञ्च अद्वैतिनां दृष्ट्या 'विज्ञातुः' इति निर्देश एव अनुपपन्नः। विज्ञातृत्वस्य जीवात्मन्यनङ्गीकारात्। 'न आत्मनो ज्ञानस्य लोपः' इत्येतावन्मात्रेणाप्युपपत्तेः तृच्प्रत्ययस्य वि-परि-इत्यनयोश्च न सुतरां वैयर्थ्यम्।

सिद्धान्ते तु आत्मनि ज्ञातृत्वस्य सत्यस्याङ्गीकारादेव न तृच्प्रत्ययानुपपत्तिः। न विपरिलोपः 'विशेषेण परितः—सर्वत्र अदर्शनं अनवस्थितिर्वा नास्तीत्यर्थः। तेन च किञ्चिद्देशे दर्शनं स्थितिश्च वर्तते इत्युक्तं भवति। लोकेऽपि घटादेः कपालरूपावस्थितिदशायां कपालरूपाधिकरणदेशे घटो नास्ति घटो नष्टः इति च यथा व्यवह्रियते न तथा पटादिराकुञ्चनदशायां आकुञ्चित पटदेशे, दीपादेः प्रकाशन्यूनतादशायां न्यूनप्रकाशदेशे च पटः दीपप्रकाशो वा नष्टः नास्तीति वा नैव व्यवह्रियते। एवमेव ज्ञानस्य विषयसंबन्धविगमदशायां विकासप्रतिकोटिसंकोचात्मकावस्थासत्वेपि ज्ञानं नष्टं नास्तीति च न व्यवह्रियते। अतः 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतिर्धर्मभूतज्ञाननित्यत्वबोधिकैव। एवं 'अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा' इत्यपि।

आत्मनो धर्मभूतज्ञानस्य च नित्यत्वबोधकम्। अत्र च अविनाशि पद-भिन्नानुच्छित्तिपदप्रयोगेण धर्मनित्यत्वं आश्रयनित्यत्वविलक्षणमिति बोधितम्। कथमितिचेत् 'उच्छित्तिः, उत्कृष्टद्वैधीभावः, कियदप्यवयवासंयोगेन अत्यन्तावयवविश्लेषः, स न विद्यते यत्रेत्यनुच्छित्तिः, अनुच्छित्तिः धर्मः यस्येत्यनुच्छित्तिधर्मा इति विग्रहः। काष्ठच्छेदे काष्ठावयवानां अत्यन्तविश्लेषेण यथा देशान्तरसंबन्धः, न तद्वत् पटदीपादेः प्रसारणेन देशान्तरसंबन्धः, किंतु अत्यन्तावयवाविश्लेषेण। पटादेः प्रसारणदशायां अधिकदेशे परिदृश्यमानस्य आकुञ्चनदशायां अधिकदेशे अनवस्थितिः यथा तद्वत् धर्मभूतज्ञानस्य इन्द्रियद्वारकविषयसंबन्धविरह दशायां विषयदेशे अनवस्थितिः, जीवदेशे स्थितिश्च एतेन बोधिता। अतश्च विषयसंबन्धाभावदशायामपि न ज्ञाननित्यत्वहानिरिति स्थितिः। एतद्विस्तरस्तु अस्मद्गुरुचरणानुगृहीत गूढार्थसंग्रह, भावप्रकाशादिग्रन्थेषु द्रष्टव्यः। अतः धर्मभूतज्ञानानङ्गीकारः, तदनित्यत्ववर्णनं वा श्रुति विरुद्धमिति सिद्धम्।

एवं युक्तिविरुद्धमपि धर्मभूतज्ञानानित्यत्वकल्पनम्। —एक कालावच्छेदेनैव अनेक विषयकज्ञानानां दर्शनेन तावतामुत्पत्तिस्तावतां नाशश्च परिकल्प्येत तर्हि महद्गौरवम्।

'न विज्ञातुर्विज्ञाते'रित्यत्र निषादस्थपत्यधिकरणन्यायेन सामानाधिकरण्येनान्वयः, इति शतभूषणीकारोक्तिस्तु डिम्भप्रलोभनमेव। नह्येकविभक्तिश्रवणमात्रेण निषादस्थपत्यधिकरणन्यायप्रवृत्तिः,सामानाधिकरण्येनान्वयो वा। समस्तपदस्थले समासस्सन्देह एव निषादस्थपत्यधिकरणन्यायप्रवृत्तिः न तु व्यस्तपदस्थलेऽपि। 'श्रूयमाणवाक्ये लक्षणाङ्गीकारा अयुक्तः' इत्येव हि निषादस्थपत्यधिकरणन्यायनिर्गलितार्थः। अत एव निषादस्थपतिशब्दे लक्षणापादकतत्पुरुषसमासं त्यक्त्वा

तदनापदककर्मधारयसमासाङ्गीकरणम् । 'प्रयाजशेषेण हवींषि अभिघारयती 'त्यत्र च नवीनैः श्रूयमाण तृतीयाद्वितीयाविभक्त्योः कर्मत्वाधिकरणत्वयोः लक्षणामनङ्गीकृत्यैव वाक्यार्थं स्वीकृत्य कल्पितवाक्येन प्रतिपत्तिबोधः स्वीक्रियते । न तु प्राचीनमीमांसकैरिव 'प्रयाजशेषं हविष्षु अभिघारयेत् ' इति लक्षणायाः स्वीकारेण श्रूयमाण वाक्येनैव प्रतिपत्तिबोध इति । तथा चेत् निषादस्थपत्यधिकरण विरोधापत्तेः । अतश्च लक्षणास्वीकाराभाव एव निषादस्थपत्यधिकरणन्यायप्रवृत्तिः । अद्वैतिनां मते 'न विज्ञातुर्विज्ञाते ' रित्यत्र विज्ञानकर्तृत्वरूपज्ञातृत्वस्य आत्मनि वस्तुतः अनभ्युपगमात् तृजन्तविज्ञातृपदस्य ज्ञानपरत्वं लक्षणयैव वाच्यमिति निषादस्थपतिन्यायः तन्मतमेवोन्मूलयति । न तु पूर्वोक्तश्रुतौ कुत्राऽपि पदे लक्षणां अनभ्युपगऽछतां श्रीभाष्यकाराणां मतम् । अतः 'न विज्ञातु ' रित्यत्र निषादस्थपतिनयोपन्यासः शतभूषणीकाराणां स्वसिद्धान्तविध्वंसनायैव । यदि च प्रमाणान्तरेण ज्ञातुः ज्ञानस्य च भेदे अविचाल्यतया ज्ञातेऽपि समानविभक्तिकत्वमात्रेण अप्रामाणिकार्थस्वीकरणं—तर्हि 'अग्नीधे ददाति' होत्रे उद्गात्रे इत्यादिषु आग्नीहोतृद्गातृणां 'आत्मने यजमानाय वा ' इत्यत्र ऋत्विग्यजमानयोः 'आद्या अष्टौ रथन्तरेण अन्त्या नव बृहता ' इत्यत्र रथन्तरबृहत्साम्नोश्चाभेद इत्यपि शतभूषणीकारैः महामहोपाध्यायैरुच्यते । एकविभक्तिकत्वात् । अतः शतभूषणीकारवचनं सर्वथा उपहास्यम् ।

किं बहुना धर्मभूतज्ञानस्य चैतन्यपदवाच्यस्य नित्यस्य आत्मन्यनङ्गीकारे अद्वैतिनां चेतनत्वमेव न स्यात् इति जडत्वापत्तिरनिवार्यैरेव । चैतन्यगुणयोगेन हि चेतनत्वम् । तद्विद्वेषिणां विवर्ताद्वैतिनां कथं वा चेतनत्वं संभावयामः । अतः शतभूषणीकारप्रदर्शितानां दोषाणां मात्रयाऽपि नावकाशः श्रीभाष्यकारसिद्धान्ते । संकोचविकासशालिधर्मभूतज्ञानद्वारैव नित्यस्यापि जीवस्य कार्यत्वं ज्ञाधिकरणादिषु

सम्यक्स्थापितं सूत्रकारैः । सिद्धस्यापि हि वस्तुनो धर्मान्तरविशिष्टवेषेण कार्यता विद्भिरङ्गीकृतैव, यथा— 'व्रीहीन् अवहन्ति ' व्रीहीन् प्रोक्षति इत्यादौ । तत्र हि सिद्धस्यैव व्रीह्यादेः दृष्टादृष्टविशिष्टवेषेण अवहननादि साध्यतेति किल मीमांसकानां सिद्धान्तः । तद्वन्नित्यस्यापि जीवस्य ज्ञान-विशिष्टवेषेणोत्पत्तिरविरुद्धा । ज्ञानं हि करणकलेवराद्यधीनप्रसरणम् । प्राक्सृष्टेश्च तदभावात् तत्सृष्ट्यधीनं प्रवृत्तज्ञानवैशिष्ट्यमिति भवति तद्रूपेण जनिर्जीवस्य । एतदेव हि दर्शयितुम् 'विज्ञानं चाविज्ञानं च' इत्युक्तम् । 'एको वशी निष्क्रियाणां बहूनां एकं बीजं बहुधा यः करोति' इति प्राक्सृष्टेः जीवानां निष्क्रियत्वोक्त्या चेदमेव प्रदर्शितम् । अधिकं त्वन्यत्र । अतश्च आत्मनित्यत्वं श्रुतिसिद्धमिति यथा अङ्गीकार्यं भवति तथैव धर्मभूतज्ञानमपि श्रौतत्वादेव नित्यमित्यङ्गीक्रियते श्रुतयश्च पूर्वमेव प्रदर्शिताः तस्य च धर्मभूतज्ञानस्य कर्मणा संकोचः तन्निवृत्त्या विकासश्च श्रुत्यादिसिद्धोऽभ्युपगम्यते । न च तदा ज्ञानस्य अकार्त्स्न्यं शङ्क्यं तस्य विभुत्वात् कर्मणा तत्संकोचेऽपि कृत्स्नशरीरव्याप्तेरव्यतिरेकात् आत्मातिरिक्तज्ञानं प्रकाशरूपमनङ्गीकुर्वतः जैनस्य मते पिपीलिका परिमाणशरीरस्यात्मनो गजशरीरप्रवेशे ह्यपरिपूर्णत्वरूपमकार्त्स्न्यं दोषतया उपन्यस्तं सूत्रकारैः दीपादित्यादेरिव प्रभाद्वारा, ज्ञानद्वारा सर्वशरीरं व्याप्नुवतः आत्मनः अस्मिन्मते कथं अकार्त्स्न्यम् ।

तथा च द्युरत्नचिरत्न प्रभादीनां आवारकेण प्रतिबद्धानां तदपगमादाविर्भाववत् कर्मसंचयसंकुचितस्यापि जीवधर्मभूतज्ञानस्य ब्रह्मध्यानेन संकोचनिवृत्तौ आविर्भावः श्रुतिसिद्धः । स च विकासः स्वाभाविकावस्थाविशेषरूपत्वान्नानित्य इति तद्युक्तं ज्ञानमपि नित्यमेव । जैनेन हि शरीरात्मपरिणामात्मवादिना न प्रशिथिलावयवपटादिवत्

परिवर्तनेन संकोचः व्याकोचेन विकासः अङ्गीक्रियते। न च निरवयवस्य तथात्वं संभवति। अतः वृद्धिह्रासावेव वक्तव्यौ। तौ च वृक्षादावयवोपचयापचयात्मकौ दृष्टौ। तौ च तदवस्थद्रव्योत्पत्तिविनाशरूपौ। अतस्तथाविधस्यात्मनः अनित्यत्वं दुर्वारमिति। प्रभाया अपि विशीर्णावयवरूपत्वमेवेत्यादि दुर्वादाः आकरे विशदं निरस्ताः। धर्मभूतज्ञानगतौ तु संकोचविकासौ अल्पानल्पविषयसंयोगरूपौ श्रुत्यादिप्रमाणावगतौ दुरपह्नवौ। तौ च नावयवापचयोपचयरूपौ। अत एव न वा अनित्यतागमकौ। तयोश्च संकोचविकासयोः अप्रामाणिकतां धर्मभूतज्ञानस्यानित्यतां च प्रमाणानादरेण केवलं कुयुक्तिमात्रेण वदन्तः पशुप्राणवियोजनफलकतया हिंसात्वादग्नीषोमीयादिपशुसंज्ञपनमपि 'न हिंस्यात्' इति निषेधविषय इति च ब्रूयुः। तथा च हिंसात्वाद्यागादिवैदिकधर्मं निराकुर्वतां बौद्धानामिव प्रच्छन्नबौद्धानामेतेषामप्यज्ञानैकपक्षपातिनां विवर्ताद्वैतिनां वादोऽप्यवैदिकत्वादनादरणीय एव। अनवयवस्यापि ब्रह्मणः अविद्याऽन्तःकरणाद्युपाधिपरिच्छेदः विवर्ताद्वैतिभिरप्यङ्गीक्रियत एव। स्थितेचैवं नित्यस्य ज्ञानस्य विषयसंयोगरूपसंकोचविकासरूपावस्थास्वीकारे कुतो वा विद्वेष इति न जानीमः।

श्लोकवार्तिककारा अपि शब्दनित्यत्वाधिकरणे 'बुद्धिकर्मणी अपि प्रत्यभिज्ञायेते। ते अपि नित्ये प्राप्नुतः। नैष दोषः। न हि ते प्रत्यक्षे। अथ प्रत्यक्षे नित्य एव। इति भाष्य (शाबर) विवरणावसरे धर्मभूतज्ञाननित्यत्वं सम्यक्प्रकटीचक्रुः यथा—

'बुद्धीनामपि चैतन्यस्वाभाव्यात् पुरुषस्य नः।
नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रयः॥ (४०४)

तथैव नित्यचैतन्यपुमांसो देहवृत्तयः।
गृह्णन्ति करणानीतान् रूपादीन् धीरसौ मता॥ (४०७)

तेनोपनेतृसंबन्धभङ्गित्वाद्भङ्गिनी मतिः ।
न नित्यं दाहको वह्निर्दाह्यासन्निधिना यथा ॥ (४०८)

तत्र बोधात्मकत्वेन प्रत्यभिज्ञायते मतिः ।
घटहस्त्यादिबुद्धित्वं तद्भेदाल्लोकसंमतम् ॥ (४०९)
सैवेति नोच्यते बुद्धिः अर्थभेदानुसारिभिः ।
न चास्य प्रत्यभिज्ञानमर्थभेदेऽनुपाश्रिते ॥' (४१०) इति

अत्र च धर्मभूतज्ञानस्य स्वतो नित्यत्वं विषयभेदनिबन्धनभेदः स्फुटमुपपादित इति धर्मभूतज्ञाननित्यत्वपक्ष एव दार्शनिकसंमतः । यथा चात्मापरिणामभूतज्ञानाङ्गीकरणमेव भट्टपादसंमतं तथा अस्मदीये श्लोकवार्तिकभूषणे द्रष्टव्यम् । धर्मभूतज्ञानविचारश्च विशदं तत्रैव कृतः । विस्तरभयात्त्वत्रोपरम्यते । एवमात्मवादवार्तिके—

सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम ।
चैतन्यद्रव्यसत्तादिरूपं नैव विमुञ्चति ।
न चावस्थान्तरोत्पादे पूर्वात्यन्तं विनश्यति ।
उत्तरानुगुणत्वात्तु सामान्यात्मनि लीयते ' ॥

इति वदन्ति । अत्र चैतन्यं धर्मः, तस्यैव सुखाद्यवस्था इति स्फुटम् । अतश्चोदाहृतवार्तिकोक्तरीत्या धर्मभूतज्ञाननित्यत्वमेव वार्तिककारसंमतम् । अत एव प्रत्यक्षस्थले

अतीते अनागतेचार्थे सूक्ष्मे व्यवहितेऽपि च ।
प्रत्यक्षं योगिनां दृष्टं कैश्चिन्मुक्तात्मनामपि ॥

इत्यत्र वेदान्तिनां मते मुक्तात्मनां अतीतानागतादि सर्वपदार्थविषयक प्रत्यक्षाङ्गीकारोक्तिः संगच्छते ।

अयमेवार्थः जैमिनिसंमतः श्रौतश्च । अत एव एतच्छ्लोकव्या ख्याने पार्थसारथिमिश्रेभ्योपि प्राचीनाः काशिकाख्यव्याख्याकर्तारः सुचरितमिश्राः 'अत्र केचिद्वेदान्तिनः' इति व्याकुर्वन्तो वृत्तिकारा एव तादृशवेदान्तिनः इति स्फुटं विदुषामवगमयन्ति ।

अवयविद्रव्यगतसंकोचविकासावस्थयोरेव अनित्यतापादकत्वमिति लोके दृष्टत्वात् धर्मभूतज्ञानस्य च सावयव द्रव्यत्वाभावात् न्यूनाधिक विषयसंबन्धरूपसंकोचविकासस्वीकारेऽपि श्रौतनित्यत्वस्य न काऽपि क्षतिः ।

यत्तु शतभूषणीकृदुपवर्णनम्—' इदमत्र विविच्यताम् परिणा मिनी सूक्ष्माचित्प्रकृतिः कथं नित्येति । न केवलं धर्मभूतज्ञानस्य संकोचविकासशालिनो नित्यत्वे आर्हतमतनिराकरणायोगः किन्तु परिणामिन्याः प्रकृतेः नित्यत्ववादोऽपि । अद्वैतमते तु प्रकृत्यन्तसर्व परिणाम्यनित्यत्ववादस्यैव स्वीकारात् न काऽपि शङ्का उन्मिषति ' इति ।

तदपीदं अविचाररमणीयम् । परिणामिनित्यं कूटस्थनित्यमिति नित्यद्वयस्य शंकराचार्यैरपि सांख्यवासनया स्वीकृतत्वात् शांकराणां कथं आर्हतमतनिराकरणार्थं प्रवृत्तिः इत्येव प्रथमं विविच्यताम्। सिद्धान्तेतु ' विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता '— इति आत्मवादे भट्टपादोक्तरीत्या विकारवत्वेऽपि प्रकृतेर्नात्यन्तोच्छेदः । श्रुतिश्चामु मेवार्थमुपोद्बलयति-यथा-' अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जन यन्तीं सरूपा 'मिति । एवं स्मृतिरपि—' अचेतना परार्था च नित्या सततविक्रिया । त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते ' इत्यादिका । अतः प्रमाणप्रतिपन्ने श्रीभाष्यकारसिद्धान्ते न काप्यनुपपत्तिः । सर्व प्रमाणत्यागेन स्वेच्छया यत्किञ्चित् प्रलपतां विवर्ताद्वैतिनां तु न केनाऽपि विरोधः न काऽपि शङ्का इति तु युक्तमेव । प्रमाणाभ्युपगमे

हि विरोधप्रसक्तिस्तद्वारणं वा । अतः धर्मभूतज्ञानविषये शतभूषणीकारापादिता दोषाः केवलं अज्ञानात् भ्रान्त्यावेति तावत् सिद्धम् । विस्तरेण धर्मभूतज्ञानविषयकविचारस्तु अस्मदीये श्लोकवार्तिकभूषणे (आत्मवादे-शब्दनित्यत्वाधिकरणे च कृतस्तत्रैव द्रष्टव्यः ।

## ब्रह्मणः उपादानत्वं

भगवान् सूत्रकारो बादरायणः 'अथातो ब्रह्मजिज्ञासे 'ति ब्रह्म विचारं प्रतिज्ञाय 'जन्माद्यस्य यतः' इत्यादि लक्षणादिकथनमुखेन ब्रह्म सम्यग्विचारयतीति तु सर्वसंमतम् । तत्र आदिमसूत्रघटकीभूतः ब्रह्मशब्दएव हि निर्विशेषब्रह्मवादमुच्छिनत्ति । ब्रह्मशब्देनाभिधीयमानं निरवग्रहमहत्त्वं च, दोषशून्यत्वगुणभूयिष्ठत्वाभ्यामेव निर्वहणीयम्। अत एव चाहुद्वयमपि पञ्चपादिकाविवरणं 'गुणहीनं दोषभूयिष्ठं च वस्तु अल्पं अविद्यमानसमं मन्यन्ते । गुणभूयिष्ठं च दोषहीनं च महान्तं कथयन्ति' इत्यादि । श्रुतावपि 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां ब्रह्मविद्या 'मित्यादौ पुरुषब्रह्मशब्दयोरेकार्थता स्पष्टमवगम्यते । पुरुषशब्दस्य च 'स वा अयं सर्वासु पूर्षु पुरिशयः' स यस्मात् पूर्वोऽस्मात् सर्वान् पाप्मन औषत् इत्यादि बृहदारण्यकवाक्येषु सर्वान्तर्यामित्वं जगदुपादानत्वं, सर्वपापदाहकत्वमित्यादयो ह्यनेके अर्थाः प्रतीयन्ते । तदिदं सर्वं विवर्ताद्वैतवादिनां शिरसि शिलाप्रक्षेप एव। विवर्ताद्वैतिनां मते ब्रह्मणो जगदुपादानत्वमित्येतत् केवलं लोकवञ्चनार्थं उपन्यासः । ब्रह्मणि कस्यापि धर्मस्याभावात् । अत एव जन्माद्यधिकरणादिषु तत्र 'नात्र पारमार्थिकं कारणत्वं विवक्षित' मित्यादिना स्वाद्वैतवादऽस्य अश्रौतत्वं सम्यगेवावेदयन्ति । जीवानां ब्रह्मभिन्नानामनङ्गीकारादेव अन्तर्यामित्वमप्यन्तकायते अद्वैतवादस्य। पापदाहकत्वादेः ब्रह्मण्यनङ्गीकारादेव अद्वैतिनां पापदाहः कदाऽपि न भवेदिति 'तानहं द्विषतः

क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥ इति गीताचार्यप्रतिपादितं फलमक्षतमेव स्यादिति।

एतेन 'मायाब्रह्मोभयोपादानत्वं अद्वैतमते, विशिष्टाद्वैते तु मायामात्रोपादानत्वं, ब्रह्मणस्तूपादानत्वं उपचारेण'—इत्यादिः 'इदं तु विशिष्टाद्वैते निरर्थकं, असंगतं चे त्यन्तं शतभूषणीभूमिकालेखनमपि असंगतमित्यावेदितम्।

यथा 'सौम्येकेन मृत्पिण्डेनेत्यादि श्रुतिवाक्यैः ब्रह्मणि परिणामोपादानत्वस्य सदृष्टान्तं बोधनवत् केन वाक्येन विवर्तोपादानत्वं बोधितमिति प्रश्ने मौनमेवह्युत्तरं भवति। एवं सूत्रकारः 'परिणामात्' उपसंहार दर्शनान्नेति चेन्न क्षीरवद्धि इत्यादिसूत्रैः ब्रह्मणि यथा परिणाम्युपादानत्वं सूत्रयामास, तथा कस्मिन् सूत्रे विवर्तोपादानत्वमसूत्रयदिति पर्यनुयोगे ब्रह्मसूत्रत्याग एव ह्यापतति। अतः श्रुतिसूत्रविदूराणां विवर्ताद्वैतिनां तदनुगुण श्रीभाष्यकारादि निरसनार्थं प्रवृत्तिः स्वशिरसि स्वेनैव शिला प्रक्षेप एव। उक्तंचाचार्य सार्वभौमैः—

श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमते
स्वपक्षस्थान् दोषान् वितथमतिरारोपयति यः।
स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलं
गलद्भिर्जम्बालैर्गगनतलमालिंपति जडः॥

इति। तस्य परिपूर्णमुदाहरणं 'शतभूषणी' इति, अस्मद्ग्रन्थपठितॄणां महाशयानां व्यक्तं भवेत्।

भगवान् सूत्रकारोऽपि अथातो ब्रह्मजिज्ञासेति आदिमसूत्रे स विशेषं ब्रह्मैव जिज्ञास्यं प्रतिज्ञाय उपसंहारे 'जगद्व्यापारवर्जं' मित्यादि

सूत्रेषु सविशेषैश्वर्यमेव प्रतिपाद्य स्वशास्त्रं निगमयति। संमतं चैतद्विवर्ताद्वैतिनामपि । आद्यसूत्रे निर्विशेषं ब्रह्मापि जिज्ञास्यतया विवक्षितमिति विवर्ताद्वैतिनां कल्पना तु स्वोत्प्रेक्षामात्रमूलिका कुकल्पनैव। एवं सगुणस्यैवाभ्यासः तत्र तत्र 'विवक्षितगुणोपपत्तेश्च' सर्वधर्मोपपत्तेश्च' सर्वोपेता च तद्दर्शनात् इत्यादिसूत्रेषु । अतः सूत्रेष्वपि उपक्रमादि षड्विधतात्पर्य लिङ्गानां सविशेष ब्रह्मण्येव सद्भावात् निर्विशेष ब्रह्माभ्युपगन्तारः ब्रह्मसूत्रपरिपन्थिन एवेति स्पष्टं विदुषाम् ।

यथा च सद्विद्यायां उत्क्रान्त्यादेः प्रतिपादनात् सद्विद्याऽपि सविशेषब्रह्मप्राप्तिविषयिण्येवेति तथा व्यक्तं उत्तरत्र सगुणनिर्गुण श्रुति-व्यवस्थाभङ्गवादपरीक्षासमालोचने । किञ्च सद्विद्यायाः आरम्भवाक्यमेव अद्वैतिनां प्रतिकूलम् । 'स देव सोम्येदमग्र आसीदि'त्यत्र अग्रे इदं सदासीत् इति तदानीं सत्वेनावगतस्य पूर्वकालेऽपि सत्तायाः प्रतिपादनात् सर्वकाल सत्वमेव हि प्रपञ्चस्य प्रतिपादितम् । सत् पदेन ब्रह्मोपस्थापनेऽपि वा कथं तदभेदोक्तिः ' किंच छान्दोग्ये स खल्वेवं वर्तयन् यावदायुष ' इति श्रूयमाणं वाक्यं आप्रयाणमनुवर्तमानस्य उपासनस्यैव मोक्षहेतुत्वं प्रतिपादयन्ती ब्रह्मोपासनाविद्वेषिणां विवर्ताद्वैतिनां वादं अश्रौतमावेदयति । पूर्वोक्तछान्दोग्य विषयकं चान्तिमं सूत्रं ' अनावृत्तिः शब्दात्' इति सविशेषब्रह्मोपासकानां अनावृत्तिं मुक्तिं प्रतिपादयत् अर्थात् उपासना दूषकानां वेदनमात्रेण मुक्तिरितिवादिनां श्रुतिमार्ग विदूषकानां च संसारावृत्तिमेव हि स्फुटमावेदयति ।

' मुक्तः प्रतिज्ञानात् ' इति चतुर्थचतुर्थे मुक्तत्वं जीवस्य स्पष्टं सूच्यते सूत्रकृता । तदिदं द्वितीयपादोक्तमरणानन्तरं तृतीयपादोक्तगत्यनन्तरं चेति सूत्रकारतात्पर्यम् । तदिदं इहैव मुक्तिं वदतां अगतिकानां शतभूषणीकारादीनां कथं घटेतेति ? ।

यदप्युच्यते शतभूषणीकृता 'श्रीभाष्यमते तु 'मृद्घटः' इत्यादौ कार्यकारणभावनिबन्धनं तादात्म्यं अपृथक्सिद्धत्वापरपर्यायं स्वीक्रियते शरीरशरीरिणोस्तु तादात्म्यं शरीरशरीरिभावमात्रनिबन्धनं, तत्र शरीरत्वं च यदि नियाम्यत्वमात्रेण तर्हि राजप्रजयोरपि शरीरशरीरिभावापत्तिः। यस्य पृथिवी शरीरं' इत्यादौ शरीरशरीरिणोः वैयधिकरण्यनिर्देशात् पृथक्सिद्धत्वं दुरपोहमित्यादि।

तदिदं अयुक्तम्—यस्य चेतनस्य यदवस्थमपृथक्सिद्धविशेषणं द्रव्यं, तत् तस्य शरीरम् इति शरीरलक्षणस्याचार्यप्रदर्शितस्य सर्वदोषनिवारकत्वात् अत्र यावत्सत्तमसंबन्धानर्हत्वमेवापृथक्सिद्धत्वम्। तेन राज्ञः प्रजानां च न यावत्सत्तमसंबन्धानर्हत्वमिति अपृथक्सिद्धत्वाभावात् न शरीरशरीरिभावः इति न भूषणीकारदोषस्य मनागप्यवकाशः। एवं तत्तद्वादेषु विशिष्टाद्वैतसिद्धान्तोपरि शतभूषणीकारप्रदर्शितानामनुपपत्तीनां परिहारपूर्वकं विवर्ताद्वैतसिद्धान्ते शतदूषण्यामाचार्यपादैरापादितानां दोषाणां परिहारो नैव भवतीत्यपि तत्तद्वादपरीक्षसमालोचने व्यक्तं निर्मत्सराणां विदुषाम्।

यद्यपि म-म-अ-शास्त्रिवत्—'न मम शतदूषणीदूषणे प्रवृत्तिः, न वा वेदान्तदेशिकनिन्दा मया क्रियते' इति प्रतिज्ञाय सपद्येव स्वोक्तिव्याघाततया वाचामप्यगोचरीणां निन्दोक्तीनां प्रयोगवत् वञ्चनाप्रदर्शनं नैव कर्तुं शक्यते। तथापि 'शतभूषणी' ग्रन्थदर्शनानन्तरं अवशात् तत्समालोचनाय प्रवृत्तिरुद्भात्। तत्र निदानं 'येनापि केनाऽपि हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि' इति न्याय एव 'शतभूषणी' समालोचनाव्याजेन विशिष्टाद्वैतसिद्धान्ततत्वरूपः परमात्मा श्रीमन्नारायणः परमं तुष्यतीति तु निश्चप्रचम्।

प्रबन्धश्चायं सहस्रपुटपरिमितः मातृकारूपेण सिद्धश्चकास्ति।

तत्राऽयमादिमो भागः पाठकमहाशयानां नयनगोचरतां प्रापितः। अवशिष्यते च भागत्रयम्। एकैकोऽपि भागः पञ्चाशदधिकशतद्वयपुटात्मकोभवति। तत्र मुद्रणे द्रव्यसाहाय्यमवर्जनीयं कारणं भवती तु स्पष्टं विदितम्। तादृशसहायसामग्रया अपुष्कलत्वादेव च संप्रति भागचतुष्टयस्याप्यमुद्रणमासीत्। महनीयानां च केषांचित् उदारसाहाय्यादयं भागः प्रकाशं प्रापितः। मन्ये चाचिरादेव सर्वोऽपि भागः बहिः प्रकाशितो भविष्यतीति।

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्ताचार्याः, परमहंस परिव्राजकाचार्याः, सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्याः, श्रीभगवद्रामानुज सिद्धान्तनिर्धारणसार्वभौमाः, श्रीमदनन्ताण्डकोटिब्रह्माण्डनायक श्री लक्ष्मीहयवदनचरणारविन्दार्चनसंपादितसमस्तजगन्मंगलाः, अमन्दानन्दसंदोहसंपादकानुपमानेकग्रन्थरत्ननिर्माणपवित्रीकृत कृत्स्नप्रपञ्चाः, श्रीमत्कविकथककण्ठीरवचरणनलिनयुगळसेवैकतत्पराः, श्रीभाष्यगूढतमार्थप्रकाशन, सर्वार्थसिद्धिकरभावप्रकाशनाद्यनुपमाचार्यकैङ्कर्येण सकलं कालमपि भद्रंनयन्तः श्रीमन्महीशूरसंस्थानमहाराजकुलगुरवः। संप्रति श्रीब्रह्मतन्त्रपरकालमठास्थानपीठं भूषयन्तः प्रातःस्मरणीयसुगृहीनेनामधेयाः संयमिवरेण्याः अस्मदाचार्यसार्वभौमाः श्री श्रीलक्ष्मीहयग्रीवदिव्य पादुकासेवकश्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकाः अकिञ्चन मज्ञमचेतनप्रायं च मां निरवग्रहस्वानुग्रहविषयं स्वीकृत्य वस्तुत्वमापादयन्। तेषां कृपैव हि मां सर्वकालेषु शरणम्।

तेषां च महनीयमहोपदेशः, एवं भावप्रकाश श्री हयशिरोरत्न भूषण-दीधिति-गूढार्थसंग्रह तय्यन्तसारामृताद्यनुपममहाग्रन्था एव च मम एतद्ग्रन्थनिर्माणे परमं निदानम्। यदि च मदीये अस्मिन् ग्रन्थे कियन्तो वा गुणास्समुपलभ्येरन् ते च सर्वे अस्मद्गुरुचरणानुग्रहादेव दोषाश्च ये ये संभाविताश्ते सर्वे मदीया एव।

ते च महान्तः, अनन्तकृष्णशास्त्रिकृतग्रन्थपरिशीलनाय प्रवृत्तिरित्येतत् सर्वथा अस्माकं अस्थाने, अतोमाभूत् ते तदर्थं प्रयत्नः। अविचारितसावद्यन्याहतानेकार्थप्रचुरानन्तकृष्णशास्त्रिग्रन्थस्य सर्वथा हेयत्वात् तत्खण्डनार्थप्रवृत्तेरपि सुतरां हेयत्वमिति पुनः पुनर्मां न्यवारयन्। परन्तु अस्मत्सुहृदां केषांचित् प्रेरणया, महनीयाचार्यनिन्दोक्तिदर्शनेन च दूयमानमनस्कतया च ग्रन्थमिमं व्यलिखम्। तत्र शतभूषणीखण्डनरूपत्वात् शतभूषण्याः असकृद्दर्शनेन कुत्रचित् शतभूषणीवत् निन्दोक्तयोऽपि कामं स्युः तथाऽपि ता अबुद्धिपूर्वकाः। नास्माकं शतभूषणीकारस्येव दूषण एव दृष्टिः। औपाधिक्यस्तु तादृश्य उक्तयः। महत्तमाचार्यदूषणोक्तौ तु शतभूषणीकारपाण्डित्यं नास्त्येव मनेति तु अवश्यमभ्युपगन्तव्यमेव।

यद्यपि च ग्रन्थस्याऽस्य खण्डनं सपद्येव कामं भवेत्। तथाऽपि नास्माकं हानिः। सिद्धा एव वर्तामहे सपद्येव प्रत्यस्त्रं प्रयोक्तुम्। परंतु पाठकानां सन्निधौ इदमेवाभ्यर्थ्यते, यत् शतभूषणीं, अस्मद् ग्रन्थं च समानकाले करे धृत्वा पठन्तु विवेचयन्तु, मध्यस्थेन मनसा स्वनिश्चयं प्रदर्शयन्तु चेति।

इदमत्रातीव विचित्रतमं विलेखनं शतभूषणीकृतो यत् वर्तमान कामकोठिपीठाधिपतयः श्री शङ्कराचार्या एव एतादृश(दूषणप्रचुर) ग्रन्थ निर्मापणाय प्रेरकाः, अत एव च त एव कर्तारः अहं तु निमित्तमात्र मेवेति।

तदिदं न विश्वासयोग्यं भवति। शान्तेरपरावतारभूताः निष्पक्ष पातिनः जगन्मङ्गलार्थमेव सततं प्रवर्तमानाः सर्वसिद्धान्ताभिज्ञाः सामरस्य प्रियाश्च सांप्रतिक कामकोटिपीठाधिपाः श्री चन्द्रशेखरसरस्वतीनामकाश्च महान्तः कथमेतादृशद्वेषविषोत्पादकं ग्रन्थार्थमनुमतिमदुः इति संभाव

नाऽपि घटेतेति। यदि वस्तुतस्तथा समभवत् तर्हि कलेस्सामर्थ्यमप्रकम्प्य मित्येव सिध्येत् इत्यास्तामिदम् ।

ग्रन्थमुद्रणादौ इदंप्रथमप्रवृत्तिकोऽहं तन्मार्गमजानानः शोधन कर्मादौ सहायविधुरश्चाभवम् । अतः अवर्जनीयानेकदोषाः कामं स्युः । ते च यथामति समीकृताः । तथापि विद्यमानदोषार्थं च पाठकान् क्षमां याचे । क्षिप्रमेव चावशिष्टभागोप्यायास्यति बहिः । अविद्याविषये च यद्यत् वक्तव्यं तत्सर्वं तत्तद्वादेषु विस्तरेण प्रपञ्चितमिति नात्र पुनः पृथक्प्रयत्नः स्वीकृतः ।

एतद्भागमुद्रणाय विशेषरूपेण धनसाहाय्यमाचरितॄणां श्री श्री अहोबिलमठाधीशानां श्री वेदान्तदेशिकशठकोपयतीन्द्रमहादेशिकानां कृपा वर्णयितुमशक्येति त्रिकरणपूर्वकं प्रणामानेव महद्भ्यस्तेभ्यस्समर्पयामः ॥ इति सर्वं शम् ।

इति ब्रह्मवित्पदपरागः
ई. श. वरदाचार्यः

श्रीकान्त पवर् प्रेस्, मैसूरु



॥ श्रीः ॥

॥ श्रीमते लक्ष्मीहयवदनाय नमः ॥

# ॥ तत्वसुधा ॥

## (शतभूषणीसमालोचनम्)



श्रियाऽध्युषितवक्षसं श्रितजनार्तिविद्रावकं
सतां शुभकरं सदा सकलदेहिनामास्पदम् ।
त्रयीहरणदुःखिते सरसिजासनेऽनुग्रहात्
उपात्तहयकन्धरं किमपि तन्महः संस्तुमः ॥ १ ॥

पितामहादिपितरं पितृशून्यं परात्परम् ।
माधवं तमहं वन्दे स्कन्धादुपरि सैन्धवम् ॥ २ ॥

नौम्यहं नव्यरङ्गेन्द्रपरकालयतीश्वरान् ।
यदीयकरुणालेशादुपयातोऽस्मि वस्तुताम् ॥ ३ ॥

लोके हि धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयप्रतिपादनाय शास्त्राणां प्रवृत्तिः । तेषु च प्रथमं शास्त्रं वेद एवेति तस्यैव च मुख्यं शास्त्रत्वम् । आह च भगवान् व्यासः 'वेदाच्छास्त्रं परं नास्ती' ति । वेदस्य च तस्य दुरवबोधार्थतां मत्वा महर्षयः अनेकानि गौणानि शास्त्राणि रचयामासुः । वेदश्चायं मीमांसाशास्त्रेण निर्णीतार्थ एव फलाय भवेदिति, महर्षिर्जैमिनिः, तदाचार्यो व्यासश्च मीमांसाशास्त्रं निबबन्धतुः । मीमांसाशास्त्रस्य वेदार्थविचाररूपत्वादेवच महती

श्रेष्ठता । अत एव चाभियुक्तानां शबर, कुमारिल, शङ्कर, भगवद्भाष्यकारादीनां मीमांसाशास्त्र एव विशेषेणाभिरुचिः । उक्तं च वार्तिककृता ॥

मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते ॥ इति ॥

मीमांसाशास्त्रं चेदं एकमेव, नत्वत्र पूर्वोत्तरमीमांसयोर्भेदः युक्तः, प्रामाणिको वा । तदेतदुत्तरत्र ऐकशास्त्र्यभङ्गवादपरीक्षासमालोचने स्फुटीभविष्यतीति नात्र विस्तरः । वेदपूर्वभागविचारपराणि सूत्राणि भगवान् जैमिनिः प्रणिनाय । उत्तरभागविचारपर सूत्रप्रणेता च महर्षिर्व्यासः इति स्पष्टमिदम् ॥

जैमिनिव्यासकर्तृकानामेतेषां पूर्वोत्तरभागविचारसूत्राणां — "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः" । 'मीमांसान्यायविस्तरः' इत्यादिषु प्रमाणेषु एकेनैव मीमांसापदेन ग्रहणात् एकविद्यास्थानत्वं उभयोरैकशास्त्र्यापरपर्यायं सूचितं भवति । अङ्गभूतकर्मविचारपरसूत्राणि शिष्यः जैमिनिः, प्रधानभूतब्रह्मविचारपराणि सूत्राणि च आचार्यो व्यासश्च चक्रतुः । अङ्गिभूतब्रह्मविचारपरत्वात् व्याससूत्राणां सर्वापेक्षया प्राधान्यं तेषामेवेति तद्विवरण एव बोधायनादीनां वृत्तिकारादीनां, अनेकेषां भाष्यकारादीनां च प्रवृत्तिः परिदृश्यते ॥

तत्र वृत्तिकारास्तावत् 'एष पन्था एतत् कर्म एतद्ब्रह्म एतद् सत्यम्' इति ऐतरेयोपनिषदुपक्रम वाक्यानुरोधेन कर्मब्रह्मणोरुभयोरपि पुरुषार्थहेतुत्वं, एकविधसत्यत्वं, कर्मब्रह्मविद्ययोरुभयोरपि अविरुद्धत्वात् परस्परसङ्गतिमत्वंचाभिप्रयन्ति । अस्यां च श्रुतौ 'एतद्

सत्यं ' इत्यस्यायमर्थः ' एतत्—कर्मब्रह्मोभयं, (पुरुषार्थं प्रतिहेतुभूतं) सत्यं, एकविधप्रमाविषयः, इति ॥

एतेन कर्मणां व्यावहारिकसत्यत्वं ब्रह्मणः पारमार्थिकसत्यत्वमिति येषां वर्णनम्, तन्न श्रुत्यनुगुणमिति सिद्धम्। अत्र ' एष पन्थाः एतत्कर्म एतद्ब्रह्म सत्यम् ' इति वा ' एतद्ब्रह्म सत्यं ' इत्येतावन्मात्रं वा अनभिधाय ' एष पन्था एतत्कर्म, एतद्ब्रह्म एतत्सत्यं इति श्रुतिनिर्देशेन कर्मब्रह्मणोरुभयोः एकविधप्रमाविषयत्वरूपं सत्यत्वमेव युक्तमिति सिध्यति। यदि ब्रह्ममात्रस्य सत्यत्वमत्राभिप्रेतं स्यात् तर्हि ' एतद्ब्रह्मसत्यमित्येवालमासीत् इति चतुर्थैतच्छब्दः व्यर्थ एव भवेत्। कार्यकारणभावस्य अनिर्वचनीयत्ववादिनां मते हि सेयं श्रुतिः नितरां विरुध्यते। अत्र पन्था इत्यनेन सुखहेतुत्वाभिधानात् ॥

अतश्च वेदपूर्वोत्तरभागयोरेकविधप्रामाण्ये सिद्धे वेदपूर्वभागः उपनिषत्प्रतिपाद्यपरमपुरुषसमाराधनरूपकर्मप्रतिपादकः। उत्तरभागस्तु—निरस्तनिखिलदोषः निखिलकल्याणगुणाकारः औपनिषदः सर्वशरीरी पुरुषः परं ब्रह्म। ब्रह्मविद्याद्वारैव परमं फलम्। सा च विद्या औपनिषदस्य पुरुषस्य (परब्रह्मणः) सविशेषतया सविशेषब्रह्मविषयिण्येव। मोक्षसाधनीभूतब्रह्मविद्या च नज्ञानमात्रम्, किं–तर्हि–उपासनध्यान भक्त्यादिरूपैव। उपासनादिना प्रीतश्च परमपुरुषः आर्चिरादिगतिद्वारा आवृत्तिरहितं मोक्षं ददाति। इत्यमुमर्थं प्रतिपादयति। इति च अभिप्रयन्ति।

तथा च वृत्तिकारसिद्धान्तसिद्धाश्चार्था मुख्यतया एते। वेदस्य सर्वस्यापि एकविधमेव प्रामाण्यम्। प्रमाणं च तत्र—' एष पन्था ' इति पूर्वोदाहृतैतरेयश्रुतिः ॥

वेदपूर्वभागप्रतिपाद्यं च कर्म ब्रह्मविद्योपयोगि—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन,' 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । (ब्र. सू. ३-४-१६) 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् (४-१-१६) सहकारित्वेन च (३-४-३३) इत्यादि श्रुतिसूत्रानुसारात् ॥

वेदान्तप्रतिपाद्यं ब्रह्म च सगुणमेव 'ज्ञः कालकालो गुणी सर्वविद्यः। 'प्रधानक्षेत्रज्ञपतिर्गुणेशः'। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । 'एष आत्मा अपहतपाप्मा विजरोविमृत्युर्विशोकोविजिघित्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः ॥ 'अन्तस्तद्धर्मोपदेशात् ' विवक्षितगुणोपपत्तेश्च 'सर्वधर्मोपपत्तेश्च । आत्मनिचैवं विचित्राश्च हि । इत्याद्यसंख्येयश्रुतिसूत्रादिप्रमाणैस्तथा अवगमात् ॥

जीवानां ब्रह्मणश्चात्यन्तं भेदएव—'पृथगात्मानं प्रेरितारं च मत्वा । 'ज्ञाज्ञौद्वयजावीशनीशौ' 'नित्यो नित्यानां चेतनश्चेतनानाम् । 'तमीश्वराणां परमं महेश्वरं' 'अधिकं तु भेदनिर्देशात्'। भेदव्यपदेशात् ' भेदव्यपदेशाच्चान्यः' नेतरोऽनुपपत्तेः । उभयेऽपि हि भेदेनैनमधीयते । कर्मकर्तृव्यपदेशाच्च । इत्यादि प्रमाणैः भेदस्याविचाल्यतया प्रतीतेः ॥

ब्रह्म च सगुणं जगदुपादानम् । अत्रोपादानत्वं च छान्दोग्ये 'यथा सोम्ये' ति मृत्तत्कार्यदृष्टान्तानुरोधेन परिणाम्युपदानत्वमेव विवक्षितम् । न तु शाङ्करप्रक्रियानुरोधेन विवर्तोपादानत्वम् । विवर्तोपादानत्वनिरासश्चानुपदमेव स्फुटीभविष्यति । ब्रह्मणः उपादानत्वस्वीकारे च 'यद्भूतयोनिं परिपश्यन्ति धीराः' । 'तथा-

क्षरात्संभवतीह विश्वम् ’। ‘प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ’। ‘परिणामात् ’ इत्यादिश्रुतिसूत्राणि प्रमाणम् ।

मोक्षकारणं च, न ज्ञानमात्रं, किं तर्हि ध्यानोपासनादिकमेव । यथाहुः श्रुतयः ‘ ओमित्येवात्मानं ध्यायथ । निचाय्य तं मृत्युमुखात्प्रमुच्यते । ‘ आत्मानमेव लोकमुपासीत । ‘ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ’। इत्याद्याः ॥ सूत्रं च ‘ आवृत्तिरसकृदुपदेशात् ’ (ब्र. ४-१-१) इत्यादिकम् ।

ब्रह्म ज्ञेयमेव न तु ध्येयम् । ज्ञानमेव मोक्षसाधनम् । न तु ध्यानमिति वादश्चोत्तरत्र यथाऽवसरमनूद्य निरसिष्यते । मोक्षश्च न ब्रह्मैक्यम् । किं तु ब्रह्मसायुज्यम् । तत्र च प्रमाणानि—।निरञ्जनः परमं साम्यमुपैति । ‘मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथान्ति च । ’ भोगमात्रसाम्यलिङ्गाच्च । ‘अविभागेन दृष्टत्वा’ दित्यादि श्रुतिसूत्रादीनि ॥

मोक्षश्चायं गतिद्वारैव प्राप्यते । प्राप्तिश्च देशान्तर एव । ‘अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ’। इति श्रुतौ उत्क्रान्त्यनन्तरमेव परब्रह्मप्राप्तेः अपहतपाप्मात्वादिस्वरूपाविर्भावस्य च प्रतिपादनात् । तेन गतिद्वारकब्रह्मप्राप्तिमन्तरा अपहतपाप्मत्वादिविशिष्टस्वरूपाविर्भावो न घटते इति तावत्सिद्धम् । अयमर्थस्सर्वोऽपि वृत्तिकारैस्सिद्धान्तितः तदनुयायिवाक्याकारादिभिश्च पोषितः भगवद्यामुनमुनिभाष्यकारादिगुरूत्तमैः स्वग्रन्थरत्नैर्विशदीकृतश्चेत्यविचाल्योऽयं श्रौतस्सिद्धान्तः ॥

इमं च श्रौतं, सूत्रकारादीनामभिमतं च वृत्तिकारसिद्धान्तं दूषयन्त विवर्तवादप्रदर्शकाः श्रीशङ्कराचार्याः स्वरसतस्तादृशार्थ

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



सिद्धिः सूत्रैर्नभवतीति मत्वा अध्यासभाष्यं प्रथममारचय्य स्वाभिप्रेतं परिकल्पितंचार्थं श्रुतौ सूत्रेषु च आरोपयन्ति । वृत्तिकारसंमतार्थस्य शङ्कराचार्यैरनूद्य दूषणात् वृत्तिकारसिद्धान्तस्तावत् (योऽयं पूर्वं संग्रहेणावेदितः,) नितरां प्राचीन इति सर्वस्वसंवेद्यमिदम् ॥

श्रुतिमार्गविदूरं सूत्रकारासंमतं च विवर्तवादं प्रदूष्य श्रौतं सिद्धान्तं, भगवद्भाष्यकारनिगमान्तमहादेशिकप्रभृतयः महाचार्याः ररक्षुः। परं तु आधुनिकाः केचित् सर्वथा अचाल्ये अस्मिन् वृत्तिकारसिद्धान्ते आचार्यरूचिपरिगृहीते च दोषारोपं कुर्वन्त इव दरीदृश्यन्ते । तन्निरासायचायं प्रघट्टकः प्रारभ्यते ॥

तथा हि अद्वैतिनस्तावत् द्विविधाः, परिणामाद्वैतिनः विवर्ताद्वैतिनश्चेति । भास्कर, भर्तृप्रपञ्चयादवप्रकाशादयः परिणामाद्वैतिनः । तेषु भास्करः उपाधिपरिणामस्वीकर्ता । बृहदारण्यकव्याख्याता भर्तृप्रपञ्चः, ब्रह्मसूत्रभाष्यरचयिता यादवप्रकाशश्च स्वरूपपरिणामवादमेव स्वीचक्रतुः । विवर्ताद्वैतवादस्तु शङ्कराचार्यसंमतः । तत्र परिणामो नाम उपादानसमसत्ताकान्यथाभावः । विवर्तस्तु उपादानविषमसत्ताकोऽन्यथाभावः इति परिणामविवर्तयोर्भेदः ।

पूर्वनिर्दिष्टपरिणामाद्वैतिनां मते ब्रह्म सविशेषमेव । विजातीय विशेषाणां स्वगतविशेषाणांच ब्रह्मण्यभ्युपगमात् । परं तु एतेषां मते वस्तुतः जीवब्रह्मणोर्भेदानभ्युपगमात् स्वाभाविकाभेदस्वीकाराच्च सजातीया विशेषाः परं न स्वीक्रियन्ते । एतेषां मते च उपादानोपादेययोः भेदाभेदः, तन्निबन्धनं च सामानाधिकरण्यम् ॥

सिद्धान्तेऽपि परिणामाद्वैतमित्येतदिष्टमेव । ब्रह्मणोप्युपादानत्वं परिणामनिबन्धनमेव स्वीक्रियते । अन्तर्यामित्वस्यैव परि

णामरूपत्वात् । एतच्चोपरिष्टात् सुष्टु निरूपयिष्यते । नन्वेवं कस्तर्हि पूर्वनिर्दिष्टपरिणामाद्वैतपक्षापेक्षया विशेषइति चेत् — ब्रूमः — सिद्धान्ते हि जीवब्रह्मणोः स्वाभाविकाभेदानभ्युपगमात् भेदस्य सुस्थिरत्वेन सजातीयविशेषाऽपि स्वीक्रियन्त इति सजातीयविजातीयस्वगतविशेषरूपविशेषत्रयाविशिष्टं ब्रह्म इति मुख्यं वैलक्षण्यम्, एवं अन्येऽपि विशेषाः यथाऽवसरं निरूपयिष्यन्ते । पूर्वनिर्दिष्टपरिणामाद्वैतवादिमतत्रयेऽपि ब्रह्मान्यमिथ्यात्वास्वीकारात् वेदवाक्यानां न विवर्तवादिमत इव प्रामाण्यहानिः ॥

सिद्धान्तिसंमतपरिणामाद्वैतव्यतिरिक्तपरिणामाद्वैतस्य वेदार्थसंग्रहादिषु विस्तरेणाचार्यैरेव निरस्तत्वात् नाद्य तस्मिन् विषये निराकारणाय प्रवृत्तिः । विवर्तवादस्तु निरस्तोऽपि पुनःपुनराधुनिकैस्तत्स्थापनार्थं व्याप्रियमाणत्वात् सजीव इव भवतीति तन्निरास द्वारा वैदिकमार्गरक्षणार्थं प्राचीनसंमतवृत्तिकारीसद्धान्तपरिपोषणार्थं तद्विरुद्धार्थनिरसनार्थं च अयं प्रबन्धः प्रारभ्यते ॥

विवर्ताद्वैतिनो हि मन्यन्ते—अशेषविशेषप्रत्यनीकं प्रत्यक् स्वयंज्योतिः चिन्मात्रं ब्रह्मैव परमार्थः । तद्व्यतिरिक्तं सर्वं मिथ्या । 'एतद्वै सत्यकाम परं च अपरं च ब्रह्म । (प्र. उ.) 'द्वे विद्ये वेदितव्ये' (मु) इत्यादि श्रुत्यनुसारेण ब्रह्म परं अपरं चेति द्विविधम् । तत्र परविद्याविषयः परं ब्रह्म निर्विशेषम् । तज्ज्ञानं च नित्यमोक्षकारणम् । अपरविद्याविषयः अपरं ब्रह्म सविशेषम् । तदुपासनं च गतिद्वारकतरतमभावापन्नफलसाधनं क्रममुक्तिहेतुश्च । 'तं यथा यथोपासते तदेव भवति' इति वचनेन उपासनानुगुणस्यैव फलस्य निर्णयात् ॥

ब्रह्म च विवर्तोपादानमेव । तत्र विवर्तोनाम उपादानविषम-सत्ताकोऽन्यथाभावः । ब्रह्मणः पारमार्थिकसत्तावत्वात् प्रपञ्चस्य च व्यावहारिकासत्तावत्वात् उपादानापेक्षया विषमसत्ताकत्वम् ॥

जगदादौ च आत्मैक एवासीत् । स च व्योमादिसर्वप्रपञ्चरूपेण परिणमति । यथा वा वीजं वृक्षरूपेण । ननु च कथं चिन्मात्रं ब्रह्म जडरूपेण परिणामं लभेतेति चेत्, नहि परमार्थतः परिणामो नामास्ति कश्चित्, किं तर्हि ? वस्तुतोऽपरिणतमेव परिणामविशिष्टमिव, एकमेव सदनेकधेव च अविद्यावशात् विवर्तमानं आत्मैवात्मानं चिद्रूपं जडरूपमिव अद्वितीयं सद्वितीयमिति च जानाति । तथा चाविद्योपादाना स्वप्नादिप्रपञ्चवत् महदादिप्रपञ्चसृष्टिः । अत एव च 'सर्वं खल्विदं ब्रह्म' आत्मैवेदंसर्वं । 'नेह नानाऽस्ति किञ्चन' इत्यादयः वहवो अद्वैतवादाः । एवं इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादयश्च श्रुतयः स्फुटतयैव भेदज्ञानस्य मायानिबन्धनत्वं प्रतिपादयन्ति । एवं श्रुत्यन्तरे भेददर्शननिन्दाच स्पष्टा । यथा 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति । ततश्चाद्वितीयं ब्रह्मैव पारमार्थिकं, भेदज्ञानंचाविद्योपाधिकमेवेति निश्चेतव्यम् ॥

ब्रह्मणि च न कोऽपि धर्मस्समस्ति । कूटस्थताहानेः । अत एव सगुणात्मवादिनां वृत्तिकाराणां मतं च न युक्तम् । आहुश्च शङ्कराचार्याः 'न च निरवयवं विक्रियमाणं दृष्टं क्वचित् । अनित्यगुणाश्रयं वा नित्यम् (शं. उ. भा. वृ. ३-४-७) इति । न च निरवयवस्य (अनौपाधिक) अनेकधर्मवत्वे दृष्टान्तोऽस्ति । (६-३-२४) इति च ॥

सुरेश्वराचार्याश्च वृहदारण्यकवार्तिककाराः स्वीये वार्तिके 'स्वयं ज्योतिषः प्रत्यग्वस्तुनः एकबुद्ध्यनधिगम्यपराग्बुद्धिगम्यधर्मवत्वं नैव घटते' (वृ. वा. ६-४-४७२-४७३-४७९) इति च निरूपयामासुः ॥

नन्वेवं 'परिणामस्तु स्यात् दध्यादिवत्' इति वदन् वाक्यकारः परिणामवादमेवोपोद्बलयति, न तु विवर्तवादमिति चेन्नैवं, तस्यापि विवर्तवादस्यैव संमतत्वात्। अत एव च संक्षेपशारीरके सर्वज्ञात्ममुनिः 'आत्रेयवाक्यमपि संव्यवहारमात्र' (सं. शा. २१७-२१८-२२०) मित्यादिना सर्वस्यापि प्रपञ्चस्य व्यावहारिकत्वमेव 'संव्यवहारमात्र' मित्यादिना वाक्यकाराभिप्रेतमिति निरूपयति। एवं तत्रैव 'विवर्तवादस्य हि पूर्वभूमिः वेदान्तवादे परिणामवादः। व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः' इति परिणामवादोऽपि विवर्तवादौपायिक एवेति विशदीकृतम्॥

अमुमेव सिद्धान्तं पुरस्कृत्य कल्पतरुकारः एवमाह—वाक्यकारो हि 'नासतोऽनिष्पाद्यत्वात्'। 'प्रवृत्त्यानर्थक्यं तु सत्वाविशेषात्' इति प्रपञ्चस्य सदसत्पक्षनिरसनेन पूर्वपक्षं प्रदर्श्य 'संव्यवहारमात्रत्वात्' इति प्रपञ्चस्यानिर्वचनीयतां सिद्धान्तयति' इति। संक्षेपशारीरकेऽपि 'अद्वैतमेव परिरक्षति वाक्यकारः' इत्यभ्यधायि। अतश्च वाक्यकारसिद्धान्तोऽपि विवर्तवादानुकूल एवेति निर्णयस्सुलभ एव॥

एवं समन्वयाधिकरणे वृत्तिकारसंमतार्थदूषणावसरे शङ्करभाष्ये 'किञ्चित् परिणामिनित्यम्' किञ्चित् कूटस्थनित्यम्। इदं तु पारमार्थिकं कूटस्थनित्यं व्योमवत् सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं स्वयंज्योतिःस्वभावम्' इत्यभिहितम्। एतद्भाष्यविवरणाय प्रवृत्ताः वाचस्पति मिश्राः परिणामतद्वतोर्भेदाभेदविकल्पेन अनिर्वचनीयत्वमेवेति प्रकटीचक्रुः॥

किञ्च सर्वैरपि वादिभिः मोक्षस्य नित्यत्वं तावदङ्गीक्रियते। तच्चेदं पारमार्थिक कूटस्थनित्यत्वस्वीकर्तॄणामेव स्वरसतस्संगच्छते।

सगुणात्मवादे कूटस्थानङ्गीकारे नित्यफलमेव नोपपादयितुं शक्यते इति अनन्तस्थिरफलत्वमपि नैवोपपादयितुं शक्येत । अतः ब्रह्मणः परिणाम्युपादानत्वं नैव युक्तम् ॥

अतश्च 'अथातो ब्रह्मजिज्ञासे' ति सूत्रोपज्ञानां निखिलानामपि ब्रह्मसूत्राणां ज्ञेय, निर्गुण परब्रह्मपरत्वमेव युक्तम् । न तु उपास्यसगुणब्रह्मणि मुख्यं तात्पर्यमिति । एतादृशशुद्धब्रह्मप्रतिपादकानां तत्वमसि' 'अहं ब्रह्मासी' त्यादि वाक्यानामेव वेदत्वमुपनिषत्वं च । अत एव चैतेषां महावाक्यत्वेन समाख्या चोपपन्ना । तदितरवेदवाक्यानां च सर्वेषां न स्वारसिकं प्रामाण्यम् । किं तर्हि ? महावाक्यशेषत्वेनैव । आह च सर्वज्ञात्ममुनिः । 'उपनिषदिति वेदरत्यपोदं समभिवदन्ति महावचो महान्तः । फलवदगतिः स्यादन्तरेणैतदेकं वचनमिति न शक्यं वक्तुमित्यादरोऽस्मिन् । (सं. शा. ३-२४७) ॥ इति ।

यतो महावाक्यत एव पुत्रः विजिज्ञिवानस्य पितुस्सकाशात् । इति श्रुतं तेन स एव वेदः तथा च सैवोपनिषच्च सिद्धा (सं. शा. ६०२) इति च ॥

'तत्वमसी' त्यादिमहावाक्यार्थे ब्रह्मैक्ये षड्विधतात्पर्यलिङ्गानां उपक्रमादीनां सद्भावात् तेषामेव मुख्यं प्रामाण्यम् । न च तर्हि भेदग्राहिप्रत्यक्षविरोधः, इति तु न शङ्कनीयम् । मण्डनमिश्रैः ब्रह्मसिद्धौ तर्ककाण्डे प्रत्यक्षस्यापि सन्मात्रग्राहित्वस्थापनेन तत्परिहारात् । यथोक्तम्—'नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते' इति ॥

एवं सुरेश्वराचार्या अपि स्वीये वार्तिके भेदस्य दुर्निरूपत्वं सर्वप्रमाणानां च सन्मात्रग्राहित्वं च विशदीचक्रुः । यथा—

'वस्तुस्वरूपसंस्पर्शि चक्षुरादिभ्य उत्थितम् ।
भेदस्पृक् नाक्षजाद्येवं न तेनैकात्म्य बाधनम् ॥
भेदग्राहि न नो मानं कृत्स्नेऽपि जगतीक्ष्यते ।
वस्तुस्वरूपमुज्झित्वा मेयं नास्त्यपरं मितेः ॥
भेदग्राहि न नो मानं वैदिकं लौकिकं च यत् ।
अविचारितसंसिद्धिः तस्माद्भेदोऽवसीयताम् ॥'

इत्यादिना ।

एवं च श्रुतेः षड्विधतात्पर्यलिङ्गानां च अद्वये ब्रह्मणि सत्वात् तत्रैव महातात्पर्यस्य निर्णयात् अपच्छेदन्यायेन न भेदपरत्वं वेदान्तानाम् । कामं स्यात् भेदे अवान्तरतात्पर्यम् । श्रुतेः प्रत्यक्षादीनां च व्यावहारिकप्रामाण्यमेव । तात्त्विकप्रामाण्यं तु महावाक्यानामेव । 'नेह नानास्ति' इत्यादयःभेदनिषेधकश्रुतयस्सर्वा अपि ब्रह्मात्मैक्यरूपमहावाक्यार्थस्य अबाधितत्वख्यापपत्तिर्या तात्पर्यलिङ्गरूपा तन्निश्चायका एव ॥

भेदश्रुतयस्सर्वा अपि व्यावहारिकभेदपरा एव । तात्त्विकभेदस्यैवाभावात् । ननु तर्हि सृष्टिप्रतिपादिकानां श्रुतीनां का वा गतिरिति चेत्, ता अपि न तात्त्विकसृष्टिप्रतिपादिकाः किं तु आत्मैक्यप्रतिपादनपरा एव । जगत्सृष्टेराम्नानमात्रेण सृष्टेस्सत्यत्वमेवेति न निर्बन्धः । स्वप्नेऽपि सृष्टेः कथनात् ॥

आहुश्च शङ्कराचार्याः—'नह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः । न हि तत्प्रतिबद्धः कश्चित् पुरुषार्थः दृश्यते श्रूयते वा । न च कथयितुं शक्यते । उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैः वाक्यैस्समं एकवाक्यतायाः गम्यमानत्वात् । दर्शयति च सृष्ट्यादि

प्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थत्वं–' अन्नेन सोम्य शुङ्गेन अपोमूलमन्विच्छ। अद्भिस्सोम्य शुङ्गेन तेजोमूलमन्विच्छ। तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ '—(छा. ६–८–४) इति ॥

किञ्च श्रुतौ मृदादिदृष्टान्तश्रवणेनेदं प्रतीयते कार्यस्य कारणेन साकमभेदं बोधयितुं सृष्ट्यादि प्रपञ्चः श्राव्यते इति। यथाहुः गौडपादाचार्याः—

मृल्लोहविष्फुलिङ्गाद्यैः सृष्टिर्याचोदिताऽन्यथा।
उपायस्सोऽवताराय नास्तिभेदः कथंचन ॥
(माण्डूक्यकारिका—३–१५) इति ॥

सृष्ट्यादिनिरूपणे फलं नेत्येव न, किं तु ब्रह्मज्ञानप्रतिबद्धफलमपि श्रूयते–-यथा—' ब्रह्मविदाप्नोति ' ॥ (तै. २–६) तरति शोकमात्मवित् (छा. ७–१–३) तमेव विदित्वा अति मृत्युमेति (श्वे. ३–८) इत्यादिना। अतश्च ब्रह्मप्रकरणे निर्विशेषब्रह्मप्रतिपत्तेरेव फल (आत्मैक्य) सिद्धौ सत्यां यत्तत्र सृष्ट्यादि निष्फलं श्रूयते तस्य ब्रह्मदर्शनोपायत्वेनैव विनियोगः स्वीकर्तव्यः। ' फलवत्सन्निधौ अफलं तदङ्गम् ' इति न्यायात् ॥

उक्तं हि जैमिनिना—' तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वम्, तत्सन्निधौचासंयुक्तं तदङ्गं स्यात् ' (४–३–३४) इति ॥

अयमर्थः दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' त्यधिकारवाक्ये दर्शपूर्णमासपदस्याप्रसिद्धार्थकत्वेनाख्यातपरतन्त्रत्वात् राजसूयन्यायेन प्रकरणपठिताः यजतिनोत्पन्नाश्च ये ये यागाः तेषां सर्वेषां (प्रयाजादिसाधारण्येन) फलसाधनत्वमिति प्राप्ते ॥

अन्वारंभणीयावाक्यशेषे दर्शपदस्य अमावास्यापर्यायत्वेन

प्रसिद्धत्वात्, पूर्णमासपदस्य च पौर्णमासीपर्यायत्वेन लोकत एव प्रसिद्धत्वात्, द्विवचनस्यापि च 'य एवं विद्वान्' इत्येवंसंयुक्तानुवादद्वयपरिकल्पितसमुदायद्वयाभिप्रायेण प्रसिद्धार्थकत्वात्, दर्शपूर्णमासाभ्यां इति पदं प्रसिद्धार्थकमेवेति नाम्नैव सर्वसाधारणयजतेस्संकोच इति नात्र राजसूयान्यायः, अपि तु प्रसिद्धार्थकनामपदानुरोधेन यजतेरेव संकोचः ज्योतिष्टोमवाक्यवत् । अतश्चाग्नेयादीनां षण्णां यागानामेव स्वर्गफल संबन्ध इति तत्सन्निधौ अफलं श्रूयमाणं प्रयाजानुयाजादि फलवद्दर्शपूर्णमासाङ्गमेवेति ॥

एवं प्रकृतेऽपि सृष्ट्यादिनिरूपणस्य स्वतः फलवत्त्वाभावेन फलवद्ब्रह्मदर्शनोपायत्वेनैव उपयोगः स्वीकर्तव्य इति । अतः न तात्विकं सृष्ट्यादि इति सिद्धम् । यथा चाहुः सुरेश्वराचार्याः—

'नासतो जन्मना योगः सतस्सत्वाच्चनेष्यते । कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः । इति ॥

अनेन कार्यकारणभावस्य सांवृतत्वं प्रदर्शितं भवति ॥

एतेषां मते च अविद्यैव परिणाम्युपादानम् । ब्रह्म च विवर्तोपादानम् । अतश्च 'एषपन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यम्' । इति पूर्वोदाहृतैतरेयश्रुतिरपि ब्रह्मैव सत्यमन्यदसत्यमित्यमुमेवार्थं बोधयति । अत एव चैतरेयोपनिषदि उत्तरत्र 'आत्मावा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्' इत्यादिना आत्मान्यासत्वप्रतिपादनं संगच्छते । यदि च जगत् सत्यं भवेत्, तर्हि अनिर्मोक्षप्रसङ्गश्च ॥

ननु 'तं त्वौपनिषदं पुरुषम् । 'येनाक्षरं पुरुषं वेदसत्यम्' इत्यादि श्रुतिषु पुरुषशब्देनान्तर्यामित्वस्य प्रतीतेः, जगति कार्ये परब्रह्मणः अन्तर्यामित्वरूपपरिणामोऽप्यङ्गीकार्य एवेति चेत् ॥

ब्रूमः, उपदेशसाहस्र्यां शङ्कराचार्यैः—

मच्चैतन्यावभास्यत्वात् सर्वप्राणिधियां सदा ।
पूर्मम प्राणिनस्सर्वे सर्वज्ञस्य विपाप्मनः ॥ (उ. सू. ३).
जनिमज्ज्ञानविज्ञेयं स्वप्नज्ञानवदिष्यते ।
नित्यं निर्विषयं ज्ञानं द्वैतं तेन न विद्यते ॥

इत्यादिना ब्रह्मात्मैक्याविरोधेनैव पुरुषशब्दार्थनिर्वचनात् । अतश्च वेदपूर्वकाण्डस्य व्यवहारिकप्रामाण्यमिव औपनिषद सगुणपरवाक्यानां सृष्ट्यादिप्रतिपादिकवाक्यानां च व्यवहारिकमेव प्रामाण्यम् । महावाक्यानामेव तु तात्विकं प्रामाण्यमिति तु स्वरूपपरवाक्यपर्यालोचनाया निश्चितं भवति ॥

तथा च विवर्तवादिसंमताश्चार्थास्संग्रहणैते—परं ब्रह्म निर्विशेषम्, अपरब्रह्मैव सविशेषम् । जगत्कारणत्वं च ब्रह्मणः कल्पितम्, परिणामज्ञानस्य फलाभावात् । कौटस्थ्यविरोधाच्च । भक्तिश्च द्विविधा प्रेमरूपा, ज्ञानरूपाचेति । अपरब्रह्माणि भक्तिरूपा, या च वृत्तिकारानुयायिनां मोक्षकारणत्वेनेष्टा । परब्रह्मणि च ज्ञानरूपा । ज्ञानमेव प्रमा । उपासनं अपरविद्यारूपं स्मृतिरूपं च न प्रमा । स्मृतेः ज्ञानत्वस्य सर्वदार्शनिकसंमतत्वेऽपि, प्रमात्वमित्येतत् न कस्यापि संमतम् । प्रमाणत्वस्य अनुभवत्वाज्ञातज्ञापकत्वघटितत्वात् स्मृतौ च तदसंभवात् । अतश्चापरोक्षज्ञानभिन्नस्य ध्यानस्य उपासनापदवाच्यस्य भ्रमत्वमेव । सगुणब्रह्मविद्या धर्म एव, अत एव च अनित्यफलहेतुभूता च । अपरब्रह्मणि सूत्राणां वेदान्तानां च अवान्तरतात्पर्यमेव, मुख्यं तु तात्पर्यं परब्रह्मणि निर्विशेषे । अपरविद्याफलदातृत्वमेवेश्वरस्य । अविद्यानिवृत्तिरूपं परममुक्तिफलं तु निर्विशेषज्ञानस्यैव । तद्दातृत्वं तु न कस्यापि । इत्यादयः । इति ॥

पूर्वोक्तेषु चार्थेषु प्रमाणानि चैवम्— 'एतद्वै सत्यकाम परं चापरं च ब्रह्म (प्र. ३) द्वे रूपे ब्रह्मणस्तस्य 'परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इत्यादीनि श्रुतिसूत्रात्मकानि परापरात्मकब्रह्मद्वयाङ्गीकारे प्रमाणानि ॥

'भक्त्या मां अभिजानाति यावान् यश्चास्मि तत्वतः'. ततो मां तत्वतो ज्ञात्वा विशते तदनन्तरम् ॥' इत्यत्र भगवद्गीतायां पूर्वार्धे भक्तिं प्रतिपाद्य तावन्मात्रस्य फलहेतुत्वमप्रदर्श्य 'ततो मां तत्वतो ज्ञात्वा विशते। इत्युत्तरार्धे ज्ञानस्यैव मोक्षहेतुत्वप्रतिपादनेन न भक्तिरूपापन्नस्य ध्यानस्य मोक्षहेतुत्वं वृत्तिकारसंमतं युक्तम्। अपि तु ज्ञानस्यैवेति गीताचार्योऽप्यभिप्रैति। अतश्च साक्षाद्भक्तेः मोक्षसाधनत्वप्रतिपादनस्थलेऽपि ज्ञानरूपभक्तेरेव मोक्षहेतुत्वाङ्गीकारो युक्तः। अत एव च 'ब्रह्मविदाप्नोति परम्। ज्ञात्वा देवं मुच्यते सर्वपापैः' इत्यादीनां ज्ञानादेव मुक्तिप्रतिपादिकानां बह्वीनां श्रुतीनामुपपत्तिश्च भविष्यति। अतश्च भक्तेः ज्ञानरूपत्वं प्रेमरूपत्वं चेति द्वैविध्यकल्पनाऽपि न निष्प्रमाणिकी ॥

उपासनं च न नित्यफलसाधनम्। नास्त्यकृतः कृतेने (मु-१-२-१२) ति श्रुतौ कृतशब्देन उपासनस्यापि ग्रहणसंभवात्। एवं 'नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' इति कठश्रुतिरपि ध्रुवमोक्षस्य अध्रुवोपासनासाध्यत्वं निवारयतीति अयमप्यर्थः सप्रमाणक एव। अतस्सगुणब्रह्मविद्या धर्म एव ॥

'यस्मात् परं नापरमस्ति किंचित्' 'ततो यदुत्तरतरं तदरूपमनामयम्। 'तथाऽन्यप्रतिषेधात्। अन्यभावव्यावृत्तेश्च। इत्यादि श्रुतिसूत्रादयः अन्यनिषेधमुखेन निर्विशेषे एव वेदान्तानां मुख्य तात्पर्यम्,' अवान्तरतात्पर्यं तु सविशेषे अन्यत्र वा स्यात् इत्यमुमर्थ आवे-

दयान्ति। अतश्च निर्विशेषप्रकरणे यत्र सगुणप्रतिपादकवाक्यश्रवणं तस्य पूषाणुमन्त्रणमन्त्रन्यायेन उत्कर्षस्य वा, उत 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इत्यत्र द्वादशोपसत्तावाक्यस्य ज्योतिष्टोमस्तावकत्ववत् निर्गुणस्तावकत्वस्य वा संभवात् न सगुणे तात्पर्य वर्णनं युक्तम्। यथाचाहुः अद्वैतसिद्धौ मधुसूदनसरस्वतयः 'पूषानुमन्त्रणमन्त्रवत् उत्कृष्टत्वस्य द्वादशोपसत्तावाक्यवत् स्तावकत्वस्य वा संभवात्' (अ. सि. ७३२-पृ.) इति। अयमर्थः–पूषादिमन्त्रस्य प्रकृतकर्मासंबन्धिदेवताप्रकाशकस्य दर्शपूर्णमासादौ विनियोगासंभवेन यथा पूषदेवताकयागादौ समाख्यासहकृतलिङ्गेन विनियोगस्वीकारः, तद्वत् सत्यकामत्वादेः ज्ञेयनिर्गुणब्रह्मप्रकरणपठितस्य ज्ञानान्वयासंभवेन ध्यानेऽन्वयः। यदि चोत्कर्षाङ्गीकारे प्रकरणबाधः स्यात् इति शङ्का, तर्हि प्रतीतैक्यवाक्यताऽभङ्गार्थं एवं वा स्यात्, 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' ति वाक्ये अहर्गणरूपाहीनगतोपसदां द्वादशत्वेनानुष्ठानक्लेशद्वारा निन्दया ज्योतिष्टोमगतस्य उपसत्त्रयस्य विधेयस्य यथा तदभावेन स्तुतिः, तद्वत् अत्रापि निर्गुणात्मस्तावकत्वमेवास्य वाक्यस्येति अतः सगुणे ब्रह्मणि न मुख्यं तात्पर्यं वेदान्तानाम्॥

एतन्मतरीत्या च निर्विशेषचिदेव आत्मा। न तदतिरिक्तः जीवो नाम कश्चिदस्ति। अहं जानामि, अहं करोमि, इत्यादि ज्ञातृत्वकर्तृत्वादिप्रतीतयोऽपि भ्रान्त्यात्मका एव। चित्स्वभाव एव आत्मा तत्तत्प्रमेयभेदेनोपधीयमानः अनुभवसंज्ञां भजते। अविवक्षितोपाधिस्तु आत्मादिशब्दैरभिधीयते। उक्तं च पंचपादिकायाम्– 'तस्माच्चित्स्वभाव एवाऽत्मा तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते। अविवक्षितोपाधिरेवात्मादिपदैरभिधीयते।'

इति । एवं वार्तिकेऽपि,

'अनात्मनि प्रमेयेऽर्थे या फलत्वेन संमता ।
प्रमेया सैव वेदान्तेष्वनुभूतिरिहात्मनः ॥' इति ॥

'अहं घटं जानामी' त्यादिस्थले चेत्थं प्रक्रिया, शरीरमध्यवर्ती सर्वशरीरव्यापकः सूक्ष्मपञ्चभूतारब्धः अन्तःकरणाख्यः अविद्याविवर्तः दर्पणादिवदतीव स्वच्छः चक्षुर्द्वारा निर्गत्य योग्यान् घटादीन् विषयान् व्याप्य तत्तदाकारो भवति द्रुततरताम्रादिवत् । तस्य च सौरालोकादिवत् झटित्येव संकोचविकासावुपपद्येते । स च सावयवत्वात् परिणममानः देहान्तः घटादौ च सम्यक् व्याप्य देहघटयोर्मध्येऽपि चक्षुर्यदवच्छिन्नोऽप्यवतिष्ठते । तत्र देहे अन्तःकरणभागः अहंकाराख्यः कर्ता इत्युच्यते । देहघटमध्यवर्ती दण्डायमानः तद्भागः वृत्तिज्ञानाख्यः क्रियेत्युच्यते । विषयव्यापकतद्भागः विषयस्य ज्ञानकर्मत्वसंपादकं अभिव्यक्तियोग्यत्वमित्युच्यते । तस्य च त्रिभागस्याप्यन्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते । तस्य चाभिव्यक्तचैतन्यस्यैकत्वेऽपि अभिव्यञ्जकानां अन्तःकरणभागानां भिन्नत्वात् त्रिधाव्यपदेशो भवति । कर्तृभागावच्छिन्नः चिदंशः प्रमाता । क्रियाभागावच्छिन्नः चिदंशः प्रमाणम् । विषयगतोऽभिव्यक्तियोग्यत्वभागावच्छिन्नचिदंशश्च प्रमितिरिति । प्रमेयन्तु विषयचैतन्यमेव अज्ञातम् । तदेव च ज्ञातं सत् फलम् । इति ॥

एतावता उपहितताया एव चितः अनुभूतित्व, ज्ञातृत्व, कर्तृत्व, प्रमाणत्वादिकमिति सर्वमौपाधिकमेव, उपाधेश्च मायिकत्वात् तन्निबन्धनं सर्वमिदं मिथ्यैवेत्यपि स्वत एव सिध्यति । एतन्मायाचित्रभित्तिस्तु निर्विशेषचिदेव । यदाहेष्टसिद्धिकारः ॥

'याऽनुभूतिरजाऽमेयाऽनन्तात्माऽऽनन्दविग्रहा ।
महदादिजगन्मायाचित्रभित्तिं नमामि ताम् ॥' इति ॥

एवं च निर्विशेषचिद्व्यतिरिक्तस्य सर्वस्यापि प्रपञ्चस्य मिथ्यात्वात् प्रपञ्चसत्यत्वं ब्रह्मणः सगुणत्वं, प्रपञ्चस्य ब्रह्मणो तात्त्विकं भेदादिकं च स्वीकुर्वतां वृत्तिकाराणां तदनुयायिनां श्रीभाष्यकारदीनां च मतं न युक्तमेव ॥

यद्यपि 'विवर्तवादिमते बहवस्सन्ति पक्षभेदाः, यथा दृष्टिसृष्टिवादः, स एव एकजीववादाख्यो मुख्यवेदान्तसिद्धान्तः। (बृ. उ. भा. सं. शा.) तत्रापि पक्षद्वयम् । एवं बहुजीववादः-सृष्टिदृष्टिवादः । जीवाज्ञानवादः (अयं च भामतीसंमतः, ब्रह्मसिद्धिकारसंमतश्च) ॥

अविद्याशबलब्रह्मणः ईश्वरस्योपादानत्वम् (अयं तु विवरणकारसंमतः पक्षः) अविद्यायाः द्वारकारणत्वमेव, ब्रह्मणस्तूपादानत्वम् । (सर्वज्ञात्ममुनेरभिमतः पक्षः) ॥

एवं जीवेश्वरविभागविषयेऽपि — अवच्छेदवादः (वाचस्पति संमतः) । प्रतिबिम्बवादः । प्रतिबिम्बस्य स्वरूपेणासत्यत्वमिति आभासवादः (सुरेश्वराचार्यसंमतः) प्रतिबिम्बस्य बिम्बेन स्वरूपतः ऐक्यम्, सत्यत्वं च, प्रतिबिम्बत्वं तु कल्पितम् । (पं. पा. वि.) अविद्यायां बिम्बभूतो ईश्वरः, प्रतिबिम्बभूतो जीवः । (सर्वज्ञात्म मुनिः) अविद्याप्रतिबिम्बः ईश्वरः । अन्तःकरणप्रतिबिम्बः जीवः - (विवरणे) इत्यादि वादाः ॥

एवं — तत्वमस्यादिमहावाक्यजन्यज्ञानं संसर्गविषयकम् । मानसं तु संसर्गाविषयकम् । (ब्रह्मसिद्धौ) तदेव च मुक्तिहेतुः । महावाक्यजन्यज्ञानसामान्यं संसर्गाविषयकम् । तद्धि प्रत्यक्षम् । (विवरणे) परोक्षमिति च भामती । इत्यादि वादाः, । अविद्यानिवृत्तिरात्मस्वरूपैव (इष्टसिद्धौ । अविद्यानिवृत्तिः पञ्चमप्रकारा (न्यायमकरन्दः, वेदान्तकल्पलतिका च) अविद्यानिवृत्तिः चरमवृत्त्युपलक्षितात्मस्वरू-

वैव [तत्वप्रदीपे] अविद्यानिवृत्तिः चरमवृत्तिरूपैव [ब्रह्मसिद्धि, अद्वैतसिद्धि, बृहदारण्यकवार्तिककारसंमतः पक्षः] तत्र च महावाक्योत्थज्ञानस्य हेतुत्वमपिनैव वर्तते [लघुचन्द्रिकायाम्] इत्यादि वादाः तत्तद्दूषणप्रकाराश्च नितरां समुल्लसन्ति, तथाऽपि मुख्याद्वैते विवादाभावात्

'यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैवप्रक्रियेह स्यात् साध्वी सा चानवस्थिता ॥'

इति सुरेश्वराचार्योक्तादिशा सर्वासामपि प्रक्रियाणामेकत्रैव 'सकलविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैव परमार्थः' इत्यत्र तात्पर्यात् न विरोधो मनागपीति विवर्ताद्वैतवाद एव युक्तः इति ॥

॥ इति पूर्वपक्षसंग्रहः ॥

सिद्धान्तः ।

इदं त्विह वक्तव्यम् । वेदमार्गविदूषकाः बौद्धाः,

'बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरेवासौ प्रमातेति न युज्यते ॥' इति ।
(बौद्धदिङ्नागकारिका) ।

सगुणात्मवादं निर्गुणात्मवादं चादूदुषन् । आत्मनि ज्ञानवत्वेन विकृतित्वे आत्मनो अनित्यत्वापत्तिः । तत्परिहाराय च यदि ज्ञानरूपविकारो आत्मनि नाङ्गीक्रियेत तर्हि आत्मनः प्रमातृत्वं न स्यात् । इति कारिकार्थः । तत्र श्लोकवार्तिककाराः भट्टपादाः आत्मनः सगुणत्वमेवोररीकृत्य 'विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता'। (श्लोकवार्तिकं आत्मवादः) इत्यादिना आत्मनोऽनित्यत्वं निराचक्रुः ॥

निर्गुणात्मवादिनस्तु विवर्ताद्वैतिनः 'प्रमातृत्वं न युज्यते' इति बौद्धदूषणं कल्पितप्रमातृत्वाङ्गीकारेण परिहरन्ति। तथा च वास्त-

विकं ज्ञातृत्वमात्मनो न संभवतीति निरूपणेन त्रियतांढैतिनां बौद्धसिद्धान्त एव अभिमत इति स्पष्टमिदम् ॥

एवं अहमर्थविपर्येऽपि 'अहमेव न किञ्चिच्चेत् भयं कस्य भविष्यति' (नागार्जुनकारिका) इति बौद्धोक्तार्थः अहमर्थस्य चिद्चिद्ग्रन्थिरूपतामङ्गीकृत्य विवर्तवादिभिः परिष्कृतः ॥

एवं विज्ञानवादिना शान्तिरक्षितेन तत्त्वसंग्रहे—

तदत्र परलोकोऽयं नान्यः कश्चन विद्यते ।
उपादानतदादेय भूतज्ञानादिसंततेः ॥ (१८७२)

इत्यारभ्य—

सन्ततेर्नन्यवस्तुत्वात् नावस्थान्तरसंभवः ।
तत्रावस्थापितो लोको परो वा तात्विकः कथम् ॥ (१८७६)
नैव सन्ततिशब्देन क्षणास्सन्तानिनां हि ते ।
सामस्त्येन प्रकाशन्ते लाघवाय वनादिवत् ॥ (१८७७)
एकत्वेनावक्लृप्तत्वात् निस्स्वभावतया मता ।
तत्त्वान्यत्वाद्यनिर्देश्या वियत्कमलपङ्क्तिवत् ॥ ' इत्युक्तम ॥ [१८७८]

शङ्कराचार्योऽपि छान्दोग्योपनिषद्भाष्ये 'सेयं देवता' इति श्रुत्यर्थविवरणावसरे बौद्धोक्तयुक्तिमेवावलम्ब्य एवं लिखन्ति । यथा 'जीवो नाम देवताया आभासमात्रं, बुद्ध्यादिभूतमात्रासंसर्गजनितः आदर्शे इव प्रविष्टः पुरुषः प्रतिबिम्बः ॥ इत्यादि ।

ननु वाचारंभणमात्रश्चेज्जीवः मृषैव प्राप्तः । तथा परलोकेहलोकादि च कथं तस्य ? नैष दोषः, सदात्मना सत्यत्वाभ्युपगमात् । सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातम् । स्वतस्त्वनृतमेव । 'वाचारंभणं विकारो नामधेय' मित्युक्तत्वात् । तथा

जीवोऽपीति । यक्षानुरूपो बलिरिति हि न्यायप्रसिद्धिः । अतस्सदात्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वम् । सतोऽन्यत्वेनानृतत्वमिति न कश्चिद्दोषस्तार्किकैरिहानुवक्तुं शक्यः । यद्येतरेतरद्वैतवादाः स्वबुद्धिविकल्पनामात्रा अतत्वनिष्ठा इति शक्यं वक्तुम् ।' इत्युक्तम् ॥

एवमारंभणाधिकरणशाङ्करभाष्येऽपि — सर्वज्ञस्येश्वरस्य आत्मभूत इव अविद्याकल्पिते नामरूपे तत्वान्यत्वाभ्यामनिर्वचनीये' इत्युपक्रम्य 'स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापितनामरूपकृतकार्यकारणसंघातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रतीष्टे व्यवहारविषये । तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येशितृत्वं सर्वज्ञत्वं सर्वशक्तित्वं च, न परमार्थतो विद्यया अपास्त सर्वोपाधिस्वरूप आत्मनि ईशित्रीशितव्यसर्वज्ञत्वादि व्यवहारः उपपद्यते इत्युक्तम् ॥

तथा चोदाहृत तत्वसंग्रह शाङ्करग्रन्थपर्यालोचनायां, बौद्धशाङ्करमतयोः अत्यन्तैक्यं विदुषां नोपपादनसापेक्षम् । मात्रया अपि बौद्धमतापेक्षया न शाङ्करमते वैलक्षण्यम् । तत्र पूर्वमते [बौद्धमते] क्षणिकविज्ञानान्येव सत्यानि । सन्ततिः परलोकः इत्यादिकं सर्वं तत्वान्यत्वाभ्यामनिर्वचनीयं मिथ्या । उत्तरमते तु [शाङ्करे] एकं सत् विज्ञानमेव सत्यम् । विभिन्नं नानावस्तु, परलोकः, ईशः, ईशितव्यः इत्यादि अनिर्वचनीयत्वात् मिथ्येति ॥

सत्यद्वयाश्रयणेन सिद्धान्तनिर्वाहश्च बुद्धानां शाङ्कराणां च समानतया बौद्धसाम्यमेवावेदयति—यथा बौद्धमते,

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।  
लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥ इति ।

सत्यद्वयस्वीकरणम्। एवं विवर्ताद्वैतिनोऽपि—ब्रह्मणः पारमार्थिकसत्यत्वं प्रपञ्चस्य च व्यावहारिकसत्यत्वंचाभ्युपगम्य महावाक्यव्यरिक्तस्य वेदभागस्य वेदत्वमेव नास्तीति [संक्षेपशारीरकादौ] उद्घोषयन्तः महावाक्यानामपि तात्त्विकप्रामाण्यमनङ्गीकुर्वन्ति इति कथं ते बौद्धवैलक्षण्यमुपपादयितुं शक्नुयुः॥

तथा च श्लोकवार्तिके भट्टपादैः निरालंबनवादे सत्यद्वयाङ्गीकर्तृबौद्धमते यानिदूषणानि—

'तस्मात् यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः।
तत् सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना॥ इत्यादिना॥

दत्तानि तान्येतेषामपि विवर्ताद्वैतिनां वज्रलेपायन्ते॥

एवं असत्यात् सत्यसिद्धिः बौद्धानां विवर्तातिनां च तुल्या विवर्ताद्वैतिनां बौद्धप्रियत्वमेवावेदयति॥

अत एव च—

'सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते' इत्यादिना ग्रन्थेन भट्टपादाः विस्तरेण असत्यात् सत्यसिद्धिं निराचक्रुरितियत्, तत् अद्वैतिसंमतार्थनिरासायापि भवत्येवेति। विस्तरस्तु असत्यात्सत्य सिद्धिभङ्गवादपरीक्षासमालोचने भविष्यति॥

अत एव—

युक्त्याऽनुपेतामसतीं प्रकल्प्य
यद्वासनामर्थनिराक्रियेयम्।
आस्थानिवृत्यर्थं अवादि बौद्धैः
ग्राह्यं गतास्तत्र कथंचिदन्ये॥

इति श्लोकवार्तिक निरालंबनवादान्तिमे श्लोके 'अन्ये' इत्यनेन पदेन विवर्ताद्वैतिनां ग्रहणमित्येतत् वार्तिककृतां संमतमेवेत्यप्रकम्प्यम्। अत्रच—अन्ये अविद्यावादिनः इत्यर्थः॥

श्लोकवार्तिके संबन्धाक्षेपपरिहारे—

स्वाभाविकीमविद्यां च नोच्छेत्तुं कश्चिदर्हति ।
विलक्षणोपपत्ते हि नश्येत् स्वाभाविकी क्वचित् ।
नत्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः ॥ [८६]

इति परसंमताविद्यानिराकरणप्रकरणे—'निरस्तश्चायं पक्षः निरालंबनवादेन' इति वदन्तः पार्थसारथिमिश्राः अमुमर्थमुपोद्बलयन्ति । बौद्धाः वासनां स्वीकृत्य तद्बलात् प्रपञ्च निराक्रियां कुर्वन्ति । विवर्ताद्वैतिनस्तु अनाद्यविद्यांस्वीकृत्य इति तु भेदः । वासनापदेनाविद्यायाः ग्रहण भवतीति आचार्यवाचस्पतिमिश्रवचनबलात् ज्ञायते । यथा भामत्यां, [१-२-२१]

विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतः न सारूप्यमपेक्षते ॥

इति । अत्र वचने अनादिवासनापदेन अविद्याया एव ग्रहणमिति स्पष्टम् । अतश्च भट्टपादोक्तं—'युक्त्या अनुदितां असतीं वासनां परिकल्प्य इयं अर्थनिराक्रिया' इत्येतत् बौद्धानां विवर्ताद्वैतिनां च तुल्यमेव ॥

अविद्यावादस्यास्थानिवृत्त्यर्थत्वम् — नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः,' इति भाष्यविवरणभामत्यां 'नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु—तद्धर्मः । नित्यानित्ययोर्धर्मिणोः, तद्धर्माणां च विवेकः नित्यत्वं सत्यत्वं, तद्यस्यास्ति तन्नित्यम् । [तथा च आस्थागोचरः] । अनित्यत्वं असत्यत्वं तद्यस्यास्ति तदनित्यं अनृतं—[तथा चानास्थागोचरः] । ततोऽस्यैतादृशात् नित्यानित्यवस्तु विवेकलक्षणात् प्रसंख्यानात् इहामुत्र फलभोगविरागो भवति' इत्युक्तम् । तथा च 'आस्था निवृत्यर्थं अवादि' इति भट्टपादोक्तार्थः

विवर्ताद्वैतिषु पुष्कल एवेति, वेदप्रामाण्यपरिरक्षणार्थं नित्योद्यताः श्रीकुमारिल भट्टपादाः वेदमार्गविदूषकबौद्धसाम्यं शाङ्कराणां प्रकटयन्तः बौद्धनिराकरणमार्गेण एतेषामपि निराकरणं स्पष्टमेवावेदयन्ति ॥

(स्थितेचैवं शतभूषणीकारः रामानुजीयानां नित्यधर्मभूतज्ञाने अवस्थास्वीकारात् जैनसाम्यं ब्रह्मणि वस्तुतो उपादानत्वास्वीकारात् सांख्यतौल्यंचेति भगद्रामानुजसिद्धान्ताज्ञानात् यत्प्रवदति, तस्य समीचीनः परिहारः तत्तत्प्रकरणे व्यक्तीभविष्यति) ॥

एवं नैरात्म्यवादिभिः वैभाषिकैः बौद्धैः धर्मधर्मिभावापलापिभिः शब्दादिपदार्थमात्रवादिभिः सगुणात्मवादे आत्मनः प्रत्यक्षेण सिद्धिर्न संभवति । तद्गतनित्यत्वस्याप्रत्यक्षेण प्रतिपत्त्यसंभवात् । धर्मधर्मिणोरुभयोः एकप्रमाणगम्यत्वस्यैवावश्यमपेक्षितव्यत्वात् । इति दूषणमुच्यते, अद्वैतिभिः तद्वदेव अनुभूतेः स्वप्रकाशधर्मो न संभवतीति व्यवस्थाप्यते । एवं भासकस्य भास्यधर्मत्वं न संभवतीत्याद्यपि । अतश्च बौद्धाभिमता एव युक्तीस्संप्रार्थ्य वेदमार्गदूषणार्थं विवर्ताद्वैतिनां प्रवृत्तिः परिदृश्यते । यथा चाहुः बौद्धः सृष्टिविषये—

'न स्वतो नापि परतः न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥
विद्यमानस्वभावस्य हेतुना किं प्रयोजनम् ।
अथाप्यविद्यमानोऽसौ हेतुना किं प्रयोजनम् ॥
अजातमनिरुद्धं च तस्मात् सर्वमिदं जगत् ।
मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितम् ॥
आयाति तत् कुतः कुत्र याति चेति निरूप्यताम् ।
ईश्वरो जगतो हेतुः वद कस्तावदीश्वरः ॥

कस्मात् सदा न कुरुते न हि सोऽन्यमपेक्षते ।
अपेक्षते चेत् सामग्रीं हेतुर्न पुनरीश्वरः ॥

इति (बोधिचर्यावतारपञ्जिकायां) ॥

यथा माया यथा स्वप्नः गन्धर्वनगरं यथा ।
तथोत्पादस्तथा नाशः स्थितिस्तद्वद्भविष्यति ॥

इति (नागार्जुनकारिका) ॥

अत्रोक्ता एव युक्तीर्मूलतया स्वीकृत्य शङ्कराचार्येभ्योऽपि प्राचीनाः गौडपादाचार्याः सृष्टिविषये एवमाहुः—

स्वप्ने मयि यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु भविष्यति ॥
स्वतो वा परतो वाऽपि न किञ्चिद्वस्तु जायते ।
सदसत् सदसद्वाऽपि न किञ्चिद्वस्तु जायते ॥
उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ।
न च भूतादभूतस्य उत्पादोऽस्ति कथंचन ॥
नास्त्यसद्धेतुकमसत् सदसद्धेतुकं तथा ।
सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ।
संवृत्या जायते सर्वं शाश्वतं नास्ति तेन वै ॥

इति । अत्र च माध्यमिकप्रक्रियामवलंब्यैव उत्पादादेः सांवृतत्वं साधितम् ॥

सुरेश्वराचार्यैरपि—

'नासतो जन्मना योगः सतस्सत्वान्न चेष्यते ।
कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ॥
अस्तीशो व्यतिरिक्तश्चेत् सोऽपि केन प्रवर्तितः ॥'

इत्यादिना बोधिचर्यावतारपञ्जिकोक्तदिशैव प्रपञ्चसृष्टिं दूषयित्वा

एवमुपसंह्रियते—

'जगदुत्पत्तिसंहाराः तद्वदात्मनि कल्पिताः ।
वस्तुवृत्तं समालोच्य कुतस्सृष्ट्यादिसंभवः ॥
उत्पत्तिस्थितिनाशाः स्युः जगतोऽस्य प्रतिक्षणम् ।
अविद्यामात्रहेतुत्वान्नामीषां विद्यते क्रमः ॥'

इति । अतश्च प्रपञ्चोत्पत्तिस्थित्यादिविषये न बौद्धानां विवर्ताद्वैतिना शाङ्कराणां च मात्रयापि वैलक्षण्यं पश्यामः । एवं मतद्वयेऽपि प्रत्यक्षस्य न तात्त्विकं प्रामाण्यम् । व्यवहारसत्यमेव विषयः; यथोक्तं शङ्कराचार्यैः आरंभणाधिकरणे —

'परमार्थावस्थायां ईशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते । व्यवहारावस्थायां तूक्तः श्रुतावपीश्वरादिव्यवहारः ।' इति ।

'सर्वव्यवहाराणामेव प्राक् ब्रह्मात्मत्वाविज्ञानात् सत्यत्वोपपत्तेः, स्वप्नव्यवहारस्येव प्राक् प्रबोधात् । यावद्धि न सत्यात्मैकत्व प्रतिपत्तिः तावत् प्रमाणप्रमेयफललक्षणेषु विकारेषु नानृतत्वबुद्धिः कस्यचिदुत्पद्यते ।' इति च । एतद्भाष्यद्वयपर्यालोचनायां सौगतवत् व्यावहारिकपारमार्थिक सत्यद्वयाङ्गीकारेण निर्वाहः शङ्कराचार्यसंमतः इति स्पष्टं विदुषाम् ॥

माध्यमिकैरपि व्यावहारिकसत्यमङ्गीकृतमेव । उक्तं च बोधिचर्यावतारपञ्जिकायाम्—

'संवृतिः परमार्थश्च सत्यद्वयमिदं मतम्' इत्येतद्विवरणे—'तस्मात् व्यवहारसत्य एव स्थित्वा परमार्थो देश्यते । परमार्थदेशनावगमाच्च परमार्थाधिगमो भवति । तस्यास्तदुपायत्वात् । तदुक्तं शास्त्रे 'व्यवहारमनाश्रित्य परमार्थो न देश्यते । परमार्थमनागम्य

निर्वाणं नाधिगम्यते ॥' इति। अतश्शङ्कराचार्यादिस्वीकृता स्सर्वे- प्यर्थाः बौद्धप्रदर्शिता एवेति च स्पष्टं विदुषाम् ॥

एवं माध्यमिकपरमसुहृदः तदुक्तयुक्तिभिरेव वैदिकमार्गविदूषकाः खण्डनकाराश्च—

'सर्वथा सदुपायानां वादमार्गः प्रवर्तते।
अधिकारोऽनुपायत्वान्नवादे शून्यवादिनः ॥'

इति निरालंबनवादे भट्टपादसिद्धान्तमेव पूर्वपक्षीकृत्य 'तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेः वाग्विस्तराणां प्रतीयमानत्वात् तस्यैव वा अनिष्पत्तौ भवतस्तन्निरासानुपपत्तेः, सोऽयमपूर्वः प्रमाणादिसत्वानभ्युपगमात्मा वाक्स्तंभनमन्त्रः भवता अभ्यूहितः। नूनं यस्य प्रभावाद्भगवता सुरगुरुणा लोकायतसूत्राणि न प्रणीतानि। तथागतेन वा मध्यमागमाः नोपदिष्टाः, भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि' इत्यादिना, माध्यमिकमतं परिष्कुर्वन्तः स्वमतं माध्यमिकमततौल्यमेवं परिहरन्ति—'एवं सति सौगतब्रह्मवादिनोरयं विशेषः—यदादिमः सर्वमेवानिर्वचनीयं वर्णयति। तदुक्तं भगवता लङ्कावतारसूत्रे ॥

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः ॥

इति। विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनस्सङ्गिरन्ते। इति। 'तदेवं भेदप्रपञ्चो अनिर्वचनीयः। ब्रह्मैव तु परमार्थसदद्वयम् ॥' इति च। अत्र च निर्विशेषब्रह्मव्यतिरिक्तप्रपञ्चसामान्यस्य मिथ्यात्वं इति अद्वैतिनां सिद्धान्तः। तेषां मार्गप्रदर्शकाः बौद्धास्तु सर्वं शून्यं इति सङ्गिरन्ते इति भेदः प्रतीयते। अद्वैतिनां मते हि स्वप्रकाशचितः अङ्गीकारेण तदवसान

एव प्रपञ्चप्रतिषेधः । बौद्धमते तु निषेधप्रतियोगितुल्यसत्ताकमेवाधिष्ठानमिति बोध्यम् । अतश्च निर्विशेषचिन्मात्राङ्गीकारेण बौद्धवैलक्षण्यं अद्वैतिनां इति खण्डनकाराणामाशयः। अन्यत्सर्वं बौद्धानां अद्वैतिनां च तुल्यमेव । अतएव तत्वसंग्रहकारः 'तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः'। इत्यादिना नित्यज्ञानाङ्गीकारमात्रेण विवर्ताद्वैतिनां अल्पापराधं प्रदर्शयन् इतरेष्वंशेषु स्वगोष्ठीप्रवेशं परमकृपया सम्यक् सूचयति ॥

वस्तुतस्तु पर्यालोचने विवर्ताद्वैतिनां नित्यज्ञानाङ्गीकरणमित्येतत् प्रतिज्ञामात्रेणैव निर्धर्मकत्वात् ज्ञानस्य (ब्रह्मणः) बौद्धभेद प्रयोजकस्य नित्यत्ववैशिष्ट्यस्य निरूपयितुमशक्यत्वात् । अतश्च धर्माभावे 'नित्यं ज्ञानं' इत्युक्तौ वस्तुस्वरूपमित्युक्तं भवति । बौद्धैरपि क्षणिकत्वादिधर्माणामनङ्गीकारेण तन्मतेऽपि क्षणिकमित्युक्तौ वस्तुस्वरूपमेवार्थः इति कथं वा भेदः उपपादितो भवति । देशकालादेश्च वस्तुत अनङ्गीकारेण स्थैर्यहेतुप्रत्यभिज्ञाऽपि न प्रभवत्येव। मुख्यवेदान्तपक्षे (दृष्टिसृष्टिपक्षे) सर्वस्यापि प्रातिभासिकत्वेन बौद्धाभेदः अप्रकम्प्य एव । विस्तरस्त्वन्यत्र । एवमुक्तौ च मूलं—

मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिता पुरा ।
उपायस्सोवताराय नास्ति भेदः कथंचन ॥

इत्यादिना प्रपञ्चस्यानिर्वचनीयतां माध्यमिकयुक्तिभिरेव प्रदर्श्य—

क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः ।
सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥

इति बौद्धसाम्यं परिहरतां गौडपादाचार्याणां वचनमेव ॥

वस्तुतस्तु बौद्धभेदप्रयोजकं यन्निर्विशेषचिदङ्गीकरणं तदपि अद्वैतिनां न घटते । निर्विशेषचिद्रूपब्रह्मावगमकप्रमाणस्य कस्यापि

तात्त्विकस्यानभ्युपगमात् । विना हि प्रमाणं न कस्यापि वस्तुनस्सिद्धिः । स्वानुभवमात्रात् सिद्धिरित्येतत्तु स्वगोष्ठीनिष्ठस्समय एव ॥

किञ्च शाङ्करैः अन्त्यत्वात् आत्मैकत्वावगमकप्रमाणस्य तेन सर्वं बाध्यते, अतः आत्मैकत्वमेव तत्वमित्यङ्गीक्रियते । यथा चोक्तं शङ्कराचार्यैः आरंभणाधिकरणे ॥

'अपिचान्त्यमिदं प्रमाणमात्मैकत्वप्रतिपादकं, नातःपरं किञ्चिदाकाङ्क्ष्यमस्ति । यथा हि लोके 'यजेत' इत्युक्ते किम्, केन, कथम्, इत्यपेक्ष्यते, नैवं 'तत्वमसि' 'अहं ब्रह्मास्मि' इत्युक्ते किञ्चिदन्यमपेक्षणीयमस्ति । इति । अस्मिन्नेवाधिकरणे 'तस्मादन्त्येन प्रमाणेन प्रतिपादिते आत्मैकत्वे समस्तस्य प्राचीनव्यवहारस्य बाधितत्वात् नानेकात्मकब्रह्मकल्पनाऽवकाशोऽस्ति' इत्युक्तम् । एवंचान्त्यप्रमाणस्यानपेक्षत्वेन प्राबल्यम् । तस्य सर्वोत्तरत्वेन तदनन्तरं न कोऽपि व्यवहारः इति च निष्पन्नम् ॥

माध्यमिका अपि शून्यमेव तत्वमिति वदन्ति । निस्वभावत्वं च शून्यत्वं । तत्र सर्वदार्शनिकपरिकल्पितस्वभावशून्यत्वमेव माध्यमिकसंमतम् ॥

इत्थं च शून्यमेव तत्वमित्यवगतिः अन्त्या भवति । तया चावगत्या ब्रह्मणोऽपि बाधसंभवो दुष्परिहरः । 'लब्धरूपे क्वचित् किञ्चित्तादृगेव निषिध्यते' इति अधिष्ठानसत्यत्वमपि नापेक्षितम् । यथा दोषादीनामयथार्थत्वेऽपि भ्रमोपपत्तिः, तथा अधिष्ठानासत्यत्वेऽपि भ्रमोपपत्तिसंभवात् । असत्यात् सत्यसिद्धेश्च अद्वैतिमाध्यमिकोभयसंमतत्वात् । व्यवहारदशापरमार्थदशाभेदेन दशाद्वयस्वीकार इत्येतदप्युभयसंमतम् । तत्र 'तत्वमसी' त्यादिवाक्यजन्य-

चरमवृत्तेरुत्तरकाल एव व्यवहाराभावः । न तु 'शून्यमेव तत्व' मिति माध्यमिकनिर्णयानन्तरं इत्यत्र च न किञ्चिद्विनिगमकं पश्यामः॥

आत्मान्यस्य सर्वस्यापि परमार्थसत्यत्वं नास्तीति शाङ्करसंमतत्वेन असत्याच्छास्त्रादेव 'तत्वमसी' त्यादिरूपात् चरमवृत्तेरङ्गीकारेण शास्त्रस्याविद्यामूलकत्वेन न निर्दोषत्वमिति, 'तत्वमसी' ति वाक्यजन्यचरमवृत्तेनिर्दोषवाक्यजन्यत्वमिति विनिगमकमपि नैव शक्यशङ्कम् ॥

अतश्च स्वप्रकाशवस्तुनो निवृत्तिः शून्यमेव तत्वमित्यवगत्या भवति । माध्यमिकसिद्धार्थस्य तु न परसंमतचरमवृत्त्या निवृत्तिः । इति माध्यमिकसंमतानां भेदापह्नवतर्काणामादरे अद्वैतिसंमतस्वप्रकाशस्यापि निवृत्तिरेव भवेत् । अतः प्रत्यक्षादीनां प्रमाणानां व्यावहारिकप्रामाण्यमित्यादि बौद्धप्रक्रियापरित्यागमन्तरा वेदप्रामाण्यमेव नोपपादयितुं शक्येत । अतश्च बौद्धोक्तयुक्तिजातमवलम्ब्य सिद्धान्तस्थापनाय प्रवर्तमानैः विवर्ताद्वैतिभिः शारीरकशास्त्रद्वितीयपादे सुगतसमयनिराकरणं कथं युज्येत ?

वस्तुतस्तु भगवान् सूत्रकारः तर्कपादे 'वैधर्म्याच्च न स्वप्नादिवत् (ब्र. सू. २-२-२८) न भावोऽनुपलब्धेः (२९) सर्वथाऽनुपपत्तेश्च' (३०) इत्यादिभिस्सूत्रैः वासनादिस्वीकारेण सर्वशून्यतास्वीकर्तॄणां सौगतानां मतमिव अविद्यास्वीकारेण प्रपञ्चापलापं कुर्वतां, प्रपञ्चस्य 'स्वप्ने मयि यथा दृष्टे,' (गौडपादः) 'स्वप्नव्यवहारस्येव प्राक् प्रबोधात्' (शं-भा.) इत्यादिना स्वप्नतुल्यत्वं च वदतां विवर्ताद्वैतिनां मतमपि निवारयतीति विवर्ताद्वैतवादः सूत्रानारूढः श्रुतिविरुद्धश्चेति हेय एव ॥

यदि आत्मनः निर्गुणत्वं, धर्मशून्यत्वरूपं कूटस्थत्वं, अन्तःकरण वृत्त्यैव च प्रमाणप्रमेयव्यवस्थादिकं चाङ्गीक्रियेत, तर्हि सांख्यनिरासः कुतो वा करणीयः, विवर्ताद्वैतिसंमतानामेवत्वं आत्मनिर्गुणत्व कूटस्थवृत्तिज्ञानादीनां तेनाप्यङ्गीकारात् । अतश्च सांख्यसांकर्यमपि दुष्परिहरमेव शाङ्कराणाम् । एतद्विस्तरस्तु ज्ञातृत्वाध्यासभङ्गवादपरीक्षासमालोचने द्रष्टव्यः ॥

किंच ईशेशितव्यादेरभावात् परलोकादीनां मिथ्यात्वस्वीकर्तृभिः विवर्ताद्वैतिभिः ' परलोकिनोऽभावात् परलोकाभावः ' (चार्वाकसूत्रम्) इत्यादिना परलोकनिराकरणं कुर्वद्भ्यः चार्वाकेभ्यः स्ववैलक्षण्यं कथमुपपाद्येत । तैर्वा किमपराद्धम् ॥

अतः विवर्ताद्वैतिनां वैदिकत्वं चेत् सिसंपादयिषितं, मोक्षश्च यदि वाञ्छितः तर्हि, सगुणात्मवादिवृत्तिकारासिद्धान्तशरणमन्तरा नान्या काऽपि गतिरित्यास्तामयं विस्तरः । इति ॥

यदुच्यते–ब्रह्म द्विविधं परमपरंचेति, ज्ञेयं च परं ब्रह्म । ध्येयं तु अपरं ब्रह्मेति । तदिदं श्रुतिपथविपरीतम् । पराभिमतपरापर ब्रह्मद्वैविध्यप्रतिपादकं च ' एतद्वै सत्यकाम परं चापरं च ब्रह्म ' इत्यादि वाक्यं प्रश्नोपनिषत्स्थम् । तस्यामेव चोपनिषदि उत्तरत्र ' यः पुनरेतं त्रिमात्रेणोमित्यनेन परं पुरुषमभिध्यायीत, स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ' इति श्रूयते । एतद्विवरणाय प्रवृत्ताः शङ्कराचार्याः सूत्रभाष्ये (१-३-१३) ' तत्राभिध्यायतेः अतथाभूतमपि कर्म भवति । मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वात् । ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टम् ' इति निरूपयन्ति । एतेन ध्यानस्य मोक्षसाधनत्वेन वृत्तिकारसंमतस्य अप्रमात्वम् ।

वेदनस्य तु ईक्षणादिपदवाच्यस्य प्रमात्वम् । इति सिध्यति ; इति तद्भाष्यानुयायिनां केषांचित् परिकल्पनं च दृश्यते ॥

परंतु पूर्वोदाहृतप्रश्नोपनिषद्वाक्ये 'परं पुरुषमभिध्यायीत' 'परात्परं पुरिशयं पुरुषमीक्षते,' इत्युभयत्र (ध्यानेक्षणकर्मविषये) परशब्दप्रयोगेण परंचापरं च ब्रह्मेति कोटिद्वये पूर्वप्रतिपादिते ध्यानेक्षणयोः परब्रह्मविषयकत्वं श्रुतौ विवक्षितमिति स्फुटम् । अतश्च ध्यानस्यापि परविषयकत्वमेवेति वृत्तिकारसिद्धान्त एव श्रुत्यनुसारी भवति । ध्यानस्यापरविषयकत्वमिति सिद्धान्तश्चावैदिकः इति च सिध्यति ॥

किञ्चेक्षणस्य कर्मतया पुरुषः श्रूयते 'पुरुषमीक्षते' इति । पुरुषशब्दार्थः ब्रह्मशब्दार्थश्च एक एवेति श्रुतिपर्यालोचनावतां स्फुटम् । तथा हि—बृहदारण्यके 'तं त्वौपनिषदं पुरुषं' (५-९-२६) इत्यत्रोक्तौपनिषदपुरुषस्य 'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् । तिष्ठमानस्य तद्विदः (५-९-२८) इत्युत्तरत्र ब्रह्मत्वाभिधानात् । एवं मुण्डकोपनिषद्यपि निर्गुणविद्यात्वेन परैः परिकल्पितायां 'येनाक्षरं पुरुषं वेद सत्यं, प्रोवाच तां तत्वतो ब्रह्मविद्याम्' इति पुरुषब्रह्मशब्दयोरेकार्थत्वस्य स्फुटत्वात् । तत्र पुरुषशब्दार्थश्च 'स यत्पूर्वोऽस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुषः' (ऐ. उ. ३-४-१) इति सर्वजगत्कारणभूतः, आश्रितानां सर्वपापदाहकश्च यस्स एवेति श्रुत्यैव ज्ञायते । 'स यत्पूर्वोऽस्मात्' इत्यनेन ब्रह्मादिसकलकार्यजातपूर्ववृत्तित्वस्य पुरुषे प्रतिपादनात् । 'सर्वान्पाप्मन औषत्' इति ब्रह्मादिसर्वजीवपापदाहकत्वस्य प्रतीतेश्च । एतादृशपुरुषशब्दार्थश्च, न विवर्ताद्वैतिनामनुगुणः । तन्मते हि वस्तुतः जगत्का-

रणत्वस्य ब्रह्मण्यनभ्युपगमेन जगत्कारणत्वस्य, जीवानामेवाभावाच्च तत्पापदाहकत्वस्य चाभावात् ॥

ननु वयमपि ब्रह्मणः विवर्तोपादानत्वमङ्गीकुर्म एव। अतश्च ब्रह्मणः कुतो न जगत्कारणत्वमिति चेत्, ब्रूमः, । श्रुतौ हि, 'यथा सौम्यैकेन मृत्पिण्डेन' इत्यादिवाक्यैः मृत्तत्कार्याणामेव दृष्टान्ततया उपादानात् परिणाम्युपादानत्वमेव श्रुतौ विवक्षितमिति स्फुटं निर्मत्सराणां विदुषाम्। यदि च विवर्तोपादानत्वं श्रुत्यभिमतं स्यात्, तर्हि शुक्तिरूप्यदृष्टान्तः प्रदर्शितः स्यात्। न चैवं कुत्रापि श्रुतौ तादृशदृष्टान्तः उपन्यस्तः। अतः विवर्तोपादानत्ववर्णनं शाङ्कराणां श्रुत्यर्थाज्ञानेनैवेति सिद्धम् ॥

किंच सूत्रकारो हि भगवान् बादरायणः 'परिणामात्' (ब्र. सू. १-४-२७) इति स्पष्टमेव परिणामवादमेव श्रौतं सूत्रयामास। एवं द्वितीयाध्याये 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र. सू. २-१-२४) इति सूत्रे 'क्षीरवद्धि' इत्यनेन दृष्टान्तेन क्षीरस्य दध्यात्मना परिणामवत् ब्रह्मणोऽपि विशिष्टस्य परिणामः उपपाद्यते' इति वदन् सूत्रकारः परिणामवादमेव श्रुत्यनुकूलं स्वाभिप्रेतं सूचयति ॥

एवं कृत्स्नप्रसक्त्यधिकरणे परिणामवाद एव पूर्वपक्षमुद्भाव्य समाधानकरणादपि परिणामवाद एव सूत्रकारसंमतः। एतेन 'आरंभणाधिकरणे विवर्तवादः तत्पूर्वाधिकरणे व्यवहारदृष्ट्या परिणामवादस्संमतः' इति परेषां कल्पनं चानुचितमिति सिद्धम्। आरंभणाधिकरणोत्तरमपि 'क्षीरवद्धि' इति सूत्रखण्डेन परिणामवादस्यैव सूचनात्। तदुत्तरं कृत्स्नप्रसक्त्यधिकरणे तत्प्रतिष्ठापनाच्च। जगदुपादानकारणत्वं ब्रह्मलक्षणं 'जन्माद्यस्य यतः' इत्यत्राभिधाय समन्व-

याभ्याये लक्षणे संभावितान् दोषान् दूरीकृत्य प्रकृत्यधिकरणमारभ्य— कृत्स्नप्रसक्त्यधिकरणपर्यन्ताधिकरणजातेन परिणामवादमेवोपद्रढ्लयन् भगवान् सूत्रकारः, वृत्तिकारतदनुयायिश्रीभाष्यकारादिसंमतश्च यः परिणामवादः स एव वैदिकः सूत्रारूढश्चेति निरातङ्कमावेदयति ॥

यदि विवर्तवादः सूत्रकारसंमतस्स्यात् तर्हि 'परिणामात्' इति सूत्रं विहाय, 'विवर्तात्' इत्येव सूत्रं करणीयमासीत् । न च तथा कुत्रापि परिदृश्यते । एवं परिणामवादे क्षीरादिदृष्टान्तदानवत् विवर्तवाददृष्टान्तं च मनसापि न स्मरति सूत्रकारः । अतश्च शाङ्करः विवर्तवादः श्रुतिमार्गविदूरः सूत्रानारूढः सूत्रकारैरेव निष्कासितश्चेति वैदिकानां स्पष्ट एव ॥

यदपि चोक्तं आत्मव्यतिरिक्तं सर्वं मिथ्या ब्रह्मविवर्त एवायं प्रपञ्चः । ब्रह्म च विवर्तोपादानं, अविद्या तु परिणाम्युपादानमित्यादि । तदिदं न युक्तिसहम् । तथाहि किमिदानीं प्रपञ्चस्सर्वोऽपि असन्नित्येवाभिमतो भवति ? ओमिति चेत्, तर्हि प्रत्यक्षविरोधादिकमपरिहार्यमेव । प्रपञ्चसद्भावग्राहकं च प्रत्यक्षादिकं निराबाधं वरीवर्ति । न चागमः भेदापलापकः प्रत्यक्षापेक्षयाऽपि बलीयान् प्रत्यक्षं बाधत इति वाच्यम् । प्रत्यक्षस्य सर्वापेक्षया शीघ्रप्रवृत्तिकत्वेन सर्वबलीयस्त्वात् । न चापच्छेदन्यायेन पूर्वप्रवृत्तमपि प्रत्यक्षं पश्चात् प्रवृत्तोपि आगमो बाधत इति वाच्यम् । प्रत्यक्षविरुद्धागमस्य प्रवृत्तेरेव अशक्यत्वात् । आगमस्य प्रत्यक्षोपजीव्यत्वेन च आगमेन स्वोपजीव्यप्रत्यक्षबाधायोगात् । अपच्छेदनये न हि पूर्वापच्छेदस्य उत्तरापच्छेदोपजीव्यत्वम् । किंच उद्गातृप्रतिहर्त्रोः क्रमेणापच्छेदे उद्गात्रपच्छेदनिमित्तकादाक्षिण्ययुक्तपुनःप्रयोगस्य प्रतिहर्त्रपच्छेदनिमि-

त्तकसर्ववेदसदानेन बाधेऽपि उद्गातृमात्रापच्छेदे द्वयोरपि युगपदपच्छेदे, क्रमेणापच्छेदेऽपि, उद्गात्रपच्छेदस्य पश्चात्त्वे च 'यद्युद्गाता अपच्छिन्द्यात् अदक्षिणं तं यज्ञं इष्ट्वा तेन पुनर्यजेत' इति शास्त्रस्य प्रामाण्यसंभवात् ॥

अत एव षष्ठाध्याये पञ्चमपादान्ते 'तत्र विप्रतिषेधाद्विकल्पः स्यात् ।' इति द्वयोर्युगपदपच्छेदे विकल्प एव प्रतिपादितः। शाङ्कराणां तु प्रत्यक्षस्य प्रपञ्चग्राहकस्य बाधः नित्यतयेष्टः इति नात्रापच्छेदन्यायप्रसक्तिरिति अत्रापच्छेदनय स्वीकरणं पूर्वमीमांसा मर्यादानभिज्ञत्वमेव सूचयति। सूत्रकारश्च जैमिनिः, उभयोश्शास्त्रयोः प्रामाण्यमुपवर्णयन् प्रत्यक्षादेः नित्यबाधमुपवर्णयतां विवर्ताद्वैतिनां शाङ्कराणां न्यायमर्यादाविदूरत्वं स्फुटमेवावेदयति ॥

अतश्चापच्छेदन्यायप्रसक्तिश्च तत्रैव, यत्र पौर्वापर्यनियमाभावः, पूर्वाप्रामाण्यनियमाभावः, विरोधनियमाभावश्चेति। नचैवं प्रकृते प्रत्यक्षप्रामाण्यस्य अवकाशोऽस्तीति अत्रापच्छेदनयोपपादनं स्वाज्ञानप्रकाशनमेव भवेत्। प्रत्यक्षेणापि सन्मात्रमेव गृह्यते इति वादश्चोत्तरत्र (सन्मात्रग्राहिप्रत्यक्षभङ्गवादपरीक्षासमालोचने) निरस्यते। अधिकमन्यत्र ॥

आगमप्रवृत्तिवेलायामपि भेदसामान्यमुपदर्शयन् प्रत्यक्षं आगमप्रवृत्तिमेव प्रतिरुणद्धि। यथा उत्पत्तिवेलायामेव दण्डेन नाश्यमानो घटः नोत्पत्तुं प्रभवति तद्वत् प्रपञ्चाभावग्राहकागमोपीति ॥

किंच प्रपञ्चाभावं जानतां आगमोऽपि प्रपञ्चान्तर्गतत्वात् असद्रूपेणैव ज्ञातव्यः स्यात्। तथा च असता आगमेन कथं प्रत्यक्षबाधः? तदर्थं च यदि आगमस्य प्रामाण्यमङ्गीक्रियेत, तर्हि नागमस्यासत्वम्। प्रामाणिकस्यैव सत्वात्, तथाचाद्वैतहानिः ॥

याचेयं कल्पना सर्वथा नासत्वं प्रपञ्चस्य प्रत्यक्षप्रमाणादिना सिद्धत्वात् । नापि वस्तुतस्सत्वं आत्मज्ञानेन बाध्यमानत्वात् । अतस्सदसद्रूपेणानिर्वचनीयोऽयं प्रपञ्च इति ॥

साऽपि न चतुरश्रा । लोके हि सतोऽन्यत्वमेवासत्वं प्रसिद्धम् । तथा च यदि प्रपञ्चस्सन्न भवेत् तर्हि स्पष्टमेवासत्वम् । असत्वाभावे वा सत्वापत्तिः । सदसत्वयोः एकनिषेधे इतरसद्भावस्य नान्तरीयकत्वात् । न च प्रकारद्वयरहिते प्रकारान्तरमन्यत् किञ्चित् संभवति । न च यत् कदाचिदपि न प्रतीयते तदसत्—यथा खपुष्पादि । यच्च प्रतीतं कदाचिदपि न बाध्यते तच्च सत् यथा आत्मा इतीदं स्पष्टम् । प्रपञ्चस्तु प्रतीयमानत्वात् बाध्यमानत्वाच्च भावाभावाभ्यामनिर्वचनीय एवेति वाच्यम् । लोकविरोधात्, यत् प्रतीतं सत् बाध्यते तदसदेवेति लौकिकी प्रसिद्धिः, यथा मृगतोयरज्जुसर्पादिः । तद्वत् प्रपञ्चोऽपि बाध्यते चेत् असद्रूप एव स्यात् । यदि च लोकप्रसिद्धिमप्यनादृत्य स्वगोष्ठीमात्रनिष्ठसमयानुरोधेन नदीवृद्धयादिवत् पारिभाषिकमेवानिर्वाच्यत्वमङ्गीक्रियेत । तदप्ययुक्तम् । प्रपञ्चबाधस्य विकल्पासहत्वात् । तथा हि—प्रपञ्चस्य आगमेन बाधः संसारावस्थायां वा, मुक्त्यवस्थायां वा ? न तावद्बाधः संसारावस्थायां प्रत्यक्षविरुद्धागमप्रवृत्त्ययोगस्यानुपदमेवोक्तत्वात् । मुक्तस्य तु कारणाभावेनैव नैवं बाधकज्ञानमिति न द्वितीयपक्षस्यावसरः ॥

यच्चाविद्याकृतोऽयं प्रपञ्च इति वादः, सोऽपि अविद्याया परसंमतायाः स्वरूपस्य तदाश्रयस्य तन्निवृत्त्यादेश्च निरूपणानर्हत्वादेव प्रतिक्षेप्यः । स्पष्टं चैतदुत्तरत्र विस्तरेण भविष्यति । अत्र च संग्रहेणैतद् प्रतिक्षिपामः । कीदृशी चेयमविद्या ? भ्रान्तिज्ञानं उत भ्रान्तिकारणं

तत्वान्तरम् । आद्येऽपि सा भ्रान्तिः कस्य ? किं ब्रह्मणः उत जीववर्गस्य, नाद्यः, तस्य स्वप्रकाशरूपत्वेनाविद्याविरोधित्वात् । एतद्विस्तरस्तु आकरे । निर्गुणश्रुतौ संकोचे प्रमाणाभावात् सकलगुण निषेधेन ब्रह्मणो निर्धर्मकत्वस्वीकारवत् 'निरवद्य' मित्यनेन संकोचे प्रमाणाभावेन अविद्यारूपावद्यस्यापि निषेधेन अविद्यावादस्यावैदिकत्वात् । नापि द्वितीयः वस्तुतः ब्रह्मातिरेकेण जीवानामभावात् । भ्रान्त्यभावादेव च तत्कारणभूतं वस्त्वन्तरमप्यनुपपन्नमेव ब्रह्मातिरिक्तस्य च भ्रान्तिज्ञानस्य तत्कारणस्य चाभ्युपगमे अद्वैतहानिः ॥

यदपि प्रोच्यते अज्ञानजन्यस्सर्वोऽपि प्रपञ्चः ज्ञानेन विनाश्यते स्वप्नप्रपञ्चवत् मृगतोयवच्चेति तदपि न युक्तम् । यदि कुलालादिव्यापारादिस्थानीयेनाज्ञानेन घटवदुत्पन्नः प्रपञ्चः मुसलस्थानापन्नेन ज्ञानेन नाश्यते, तथाऽपि नासत्वं प्रपञ्चस्य स्यात्, उत्पत्तिविनाश योगादनित्यतामात्रं स्यात् नात्यन्ताभावः । इष्टं चेदं सर्वेषामपि । केन च ज्ञानेन प्रपञ्चनाशः इति तु विमर्शनीयम् । नात्मज्ञानेन विरोधाभावात् । निष्प्रपञ्चात्मज्ञानेनेति चेत्, तदपि न, तत्रात्मज्ञानांशस्याविरोधित्वात् । अत निष्प्रपञ्चत्वज्ञानमेव परिशेषाद्विनाशकमित्यभ्युपेयम् । तत्र प्रपञ्चभावश्च निष्प्रपञ्चत्वं स्यात् । न च विद्यमाने प्रपञ्चे तदभावज्ञानमुदेतुमर्हति । ज्ञानेन ह्युत्पन्नेन प्रपञ्चस्य नाशस्स्यात् । प्राक् च ज्ञानात् सद्रूप एव प्रपंचः, अतश्च तस्मिन् सद्रूपे अवस्थिते कथं तदभावावगाहिनः ज्ञानस्योत्पत्तिः । तत्र ज्ञानोत्पत्तौ सत्यां प्रपंचस्य नाशः, तद्विनाशे सति च तदभावविषयकज्ञानोत्पत्तिरिति व्यक्तमेवेतरेतराश्रयत्वम् । अतः अविद्याबलात् ब्रह्मणः जगत्कारणत्वोपपादनं युक्तिविदूरमेवेति स्पष्टम् । . . .

एवं च श्रुतिसूत्रयुक्तिलोकविरुद्धत्वात् विवर्तवादस्य जग-

त्कारणत्वं ब्रह्मणि नास्त्येवेति शाङ्कराणां मते 'स यस्मात् पूर्वोऽस्मात्' इति प्रदर्शितः पुरुषशब्दार्थः बाधित एवेति । 'परात्परं पुरिशयं पुरुषमीक्षते' इति श्रुतौ (पराभिमतनिर्गुण विद्यायामपि) सगुणस्यैव ईक्षणकर्मत्वं बोध्यते इति ईक्षणं निर्गुण परब्रह्मविषयकं, ध्यानं तु सगुणापरब्रह्म विषयकं इति कल्पनं वेदार्थाज्ञानतामेवावेदयेत् । एवं सर्वपापदाहकत्वरूपः पुरुषपदार्थः, 'स वा अयं सर्वासु पूर्वपुरिशयः' (बृ.) इत्यादिना प्रदर्शितः सर्वान्तर्यामित्वरूपपुरुषपदार्थश्च सगुणे ब्रह्मण्येव स्वरसः । ब्रह्मभिन्नसर्वमिथ्यात्ववादिनां च मते ब्रह्मभिन्नस्यैवाभावेन सर्वपापदाहकत्वं वा सर्वान्तर्यामित्वं वा कथामात्रमेव स्यात् । अतश्च पुरुषपदस्य सगुणपरत्वात् 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इति परसंमत निर्गुणविद्यायामेव पुरुषशब्दब्रह्मशब्दयोः पर्यायत्वावगमात् ब्रह्म सगुणमेव प्रामाणिकम् । निर्गुणं ब्रह्म तु स्वोत्प्रेक्षामूलं स्वभ्रान्तिपरिकल्पितं चेति व्यक्तं निर्मत्सराणां विदुषाम् ॥

सगुणनिर्गुणभेदेन ब्रह्मद्वैविध्यस्य अप्रामाणिकत्वादेव ध्यानज्ञानयोः भेदं स्वीकृत्य, ज्ञानं परब्रह्मविषयकं प्रमात्मकं, ध्यानं तु अपरब्रह्मविषयकं अप्रमात्मकमिति कुदृष्टिरपि निरस्ता वेदितव्या। श्रुतयो हि 'विज्ञाय प्रज्ञाय प्रज्ञां कुर्वीत' (बृ. ६-४-२१) 'ओमित्येवात्मानं ध्यायथ' (मु. २-२-६) 'आत्मानमेव लोकमुपासीत' (बृ. ३-४-७) इत्याद्याः उपासनस्यैव मोक्षसाधनत्वं दर्शयन्ति। एवं 'मनोब्रह्मेत्युपासीत' भाति च तपति च . . . य एवं वेद (छा. ३-१८-१) 'न स वेद . . . आत्मेत्येवोपासीत' (छा. ३-४-७) 'यस्तद्वेद यत् स वेद स मयैतदुक्तः' (छा. ४-१-४) 'अनुम

एतां भगवो देवतां शाधि यां देवतामुपास्से (छां. ४-२-२) इति व्यतिकरेणोपक्रमोपसंहारावपि ध्यानवेदनयोरेकार्थतां द्रढयतः ॥

अतश्च सामान्यरूपेण वेदनस्य यत्र मोक्षसाधनत्वं श्रुतौ श्रुतं, तत्रापि 'निर्विशेषं न सामान्य' मिति न्यायेन ध्यानरूपविशेषपर्यवसानमेव स्वीकर्तव्यम् । अत एव च भगवान् सूत्रकारः 'आवृत्तिरसकृदुपदेशात्' (४-१-१) इति सूत्रेण असकृदावृत्तवेदनस्य उपासनात्मकस्य मोक्षहेतुतां दर्शयन् केवलज्ञानस्य अनावृत्तस्य मोक्षहेतुतावादं स्वानभिमतत्वेनावेदयति । अत्र हि सूत्रे आवृत्तिसंबन्धिनः अनिर्देशेन 'एवं मुक्तिफलानियमः' इति पूर्वसूत्रान्मुक्तिफलशब्दस्यानुषङ्ग आवश्यकः । तत्र मुक्तिफलेत्यत्र 'विकल्पोऽविशिष्टफलत्वादि' त्यत्रेव बहुव्रीहिरेवैषितव्यः । मुक्तिफलकमुपासनमित्यर्थः । अतश्च मुक्तिफलशब्दानुषङ्गेन अपवर्गोपायतया विधित्सितं वेदनमेव आवृत्तिसंबन्धितया विवक्षितमित्याशयः । अतश्च सूत्रानारुढत्वात् मोक्षहेतुध्यानज्ञानभेदवादः हेय एव । विस्तरस्त्वन्यत्र ॥

निर्गुणस्य ब्रह्मण एव गगनकुसुमसहोदरत्वेन तद्विषयकं ज्ञानमेव मोक्षसाधनमिति वादस्योन्मेष एव न भवति । न च 'साक्षी चेता केवलो निर्गुणश्च (श्वे. ६-११) इति श्रुतिरेव ब्रह्मणः गुणराहित्यं बोधयतीति वाच्यम् । श्वेताश्वतरे हि षष्ठे निर्गुणश्रुतेः पूर्वं 'ज्ञःकालकालो गुणी सर्वविद्यः (श्वे. ६-२) इति श्रूयते । एवमुत्तरत्र च 'स विश्वकृत् विश्वविदात्मयोनिः ज्ञःकालकालो गुणी सर्वविद्यः' (श्वे. ६-१६) इति श्रूयते । अतः उभयत्र (पूर्वं परत्र च) गुणवत्तायाः प्रतिपादनात् अभिक्रमणन्यायेन (सन्दंशन्यायेन) नात्र मध्ये श्रूयमाण निर्गुणश्रुतौ गुणसामान्याभावः विवक्षितः, अपि तु हेयगुणसामान्याभाव एव । अयमर्थः । 'दर्शपूर्णमासप्रकरणे प्रयाजसमीपे 'अभि-

क्रामं जुहोति ' इति श्रुतम् । तत्र अनेन वाक्येन विधीयमानमभिक्रमणं प्रकरणात् सर्वहोमाङ्गं उत अवान्तरप्रकरणात् प्रयाजहोममात्राङ्गं इति संशये महाप्रकरणानुरोधात् प्रकरणसंबन्धिसर्वहोमाङ्गमेवेति प्राप्ते —सिद्धान्तः—प्रयाजान् विधाय ' समानयत उपभृत ' इत्यादि प्रयाजगुणान् विधाय ' अभिक्रामं जुहोति ' इत्युक्त्वा तदनन्तरं ' प्रयाजशेषेण हवींष्यभिघारयति ' इति श्रूयते । अतश्चात्राभिक्रमणात्पूर्वं परतश्च प्रयाजाङ्गयोः कीर्तनात् तयोरिव मध्यपतितस्य अभिक्रमणस्यापि प्रयाजभावनाकथंभावाकाङ्क्षयैव ग्रहणमिति न दर्शपूर्णमासाङ्गत्वमिति । अयमर्थः ' कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदस्स्यात् (पू. मी. ३-१-१९) इत्यस्मिन्नधिकरणे स्पष्टः । अतश्च प्रकृतेऽपि निर्गुणश्रुतेः पूर्वं परतश्च गुणसंकीर्तनात् न निर्गुणपदेन गुणसामान्याभावः विवक्षितः, अपि तु हेयगुणनिषेध एवेति न निर्गुणब्रह्मप्रसिद्धिः श्रुतौ ॥

किंच ' ज्ञः कालकालो गुणी सर्वविद्यः ' इति पूर्वोदाहृतश्वेताश्वतरश्रुतौ गुणी इत्यत्र प्रशंसायामतिशायने वा इनिर्विवक्षितः । ' भूमनिन्दा प्रशंसासु भवन्ति मतुबादयः ' इति वार्तिकानुसारात् । एतदेवाभिप्रेत्य,

' ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ '

(वि. पु. ६-५-७९)

इति पराशरेणोक्तम् ।

प्रशंसा च हेयसंबन्धराहित्यात् निखिलकल्याणगुणयोगाच्चेति सगुणश्रुतिसन्दष्टश्रुतौ ' निर्गुणः ' इत्यनेन अप्रशस्तगुणानामेव निषेधः न तु गुणसामान्यस्य । अत एव निर्गुणविद्यात्वेन परसंम-

तायां प्रजापतिविद्यायां 'एष आत्मा अपहतपाप्मा ' इति श्रुतौ 'अपहतपाप्मा ' इत्यादिपदैः हेयगुणान् प्रतिषिध्य 'सत्यकामस्सत्यसंकल्पः ' इत्यादिना कल्याणगुणानां प्रतिपादनं च संगच्छते । श्रुतिश्च 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचे ' ति ज्ञानशक्त्यादीनां स्वाभाविकत्वं ब्रह्मणि प्रतिपादयन्ती तेषामौपाधिकत्वपक्षं व्यवच्छिनत्ति ॥

अतः सगुणमेव परमं ब्रह्म जगत्कारणं च । अत एव तैत्तरीये 'यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः, यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् ', इति जगत्कारणत्वमभिधाय, जगत्कारणस्यैवोत्तरत्र 'तदेव ब्रह्म परमं कवीनाम् ।' इत्यनेन परब्रह्मत्वोक्तेः । अतः सगुणमेव परं ब्रह्म, तस्य ध्यानमेव मोक्षकारणमिति अविचाल्योऽयं वृत्तिकारसिद्धान्तः श्रुतिसूत्राद्यारूढश्चेति सर्वाश्च श्रुतयः सर्वाणि च सूत्राणि विशिष्टाद्वैतसिद्धान्त एव स्वरसानीति सिद्धम् । विवर्ताद्वैतवादस्य श्रुतिषु ब्रह्मसूत्रेषु च मनागप्यवकाशो न भवतीति पूर्वमेव निरूपितम्, यथावसरं विस्तरेण निरूपयिष्यते च ॥

प्रस्तुतं शतभूषणीसमालोचनमेव अवश्यकर्तव्यं स्वीकुर्मः । तत्र शतभूषणी कुत्र तिष्ठति कीदृशानि च भूषणानि निर्गुणाद्वैते शतभूषणीकर्त्रा क्रियन्ते इति विमृशामः । तथा हि, तत्रादौ भूषणीकारस्तावत् ब्रह्ममीमांसायां 'अथातो ब्रह्मजिज्ञासा ' इत्यत्र न सविशेषं ब्रह्म विवक्षितं, किं तर्हि, निर्विशेषं ब्रह्मैवेत्याह । तदिदं न युक्तम् । निर्विशेषब्रह्मणि कस्यापि प्रमाणस्याभावादेव शशशृङ्गसहोदरत्वात्तस्य विचाराविषयत्वस्य तावद्दूरादेवापास्तत्वात्, ब्रह्मणि ज्ञेयत्वानङ्गीकारादेव विचाराविषयत्वं ब्रह्मणो नैव संभवतीति

'अथातो ब्रह्मजिज्ञासे' ति ब्रह्मविषयकविचारप्रतिज्ञा अद्वैतिनां न घटत इति आद्यसूत्रमेवानुपपन्नमिति प्रणव एव विस्तरः ॥

सिद्धान्ते तु ब्रह्मणः प्रमाणगम्यत्वस्याङ्गीकारात् विचारविषयत्वं संभवतीति ब्रह्मविषयकविचारप्रतिज्ञाकरणं युक्तमेव। तत्र चाधीत सकलवेदस्य मुख्यपाठक्रमाद्यनुरोधेन पूर्वभागविचारे वृत्ते आवृत्ति-विधानादिभिः कर्मणां अल्पास्थिरफलकत्वे निश्चिते वेदान्तभागस्य च विचारात्पूर्वं आपाततः अर्थज्ञाने जातेऽपि आपातप्रतीतार्थस्य संशयविपर्ययसहिष्णुत्वात् तन्निश्चयार्थं ब्रह्ममीमांसायां स्वयमेव प्रव-र्तते। कर्मविचारे जातेऽपि ब्रह्मस्वरूपादेर्निष्कृष्टतया ज्ञातत्वाभा-वात् तन्निर्णयार्थं ब्रह्मविचार आवश्यकः इति तावदाकूतम् ॥

एतेन—'सविशेषं हि ब्रह्म वेदतात्पर्यविषयतया प्राच्या षोडशलक्षण्यैव 'स विष्णुराह हि सविष्णुराह हि' इत्युपसंहारेण 'विष्णुरेवेति निरधारि। अथाऽतो धर्मजिज्ञासा' इति सूत्रे धर्म-पदेन वेदार्थस्य विवक्षणात् सविशेषं ब्रह्मजिज्ञास्यतया प्रतिज्ञातम्। 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण उपासनाशेषतया ब्रह्मणि प्रमा-णमुपन्यस्तम्। 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मतत्प्रत्यक्ष-मनिमित्तं विद्यमानोपलंभनत्वात्।' इति सविशेषब्रह्मणि सर्वेस्मिन धर्मे च प्रत्यक्षादिप्रमाणान्तराप्रवृत्तिश्च सूचिता। वेदान्तवाक्या-नां आपातदर्शनेनापि अधीतोत्तरमीमांसाव्यतिरिक्तसर्वविद्यास्थानानां सगुणे ब्रह्मणि तद्विषयवाक्येषु किमिदमचेतनपरं उत सविशेषब्रह्मपरं इति संशयो नोदेति। तथा च वेदान्त एव प्रसिद्धे ब्रह्मणि पूर्वोत्तर-मीमांसैकशास्त्र्यवादिनां दृष्ट्या—'अथातो ब्रह्मजिज्ञासे' ति पृथक् ब्रह्मजिज्ञासाप्रतिज्ञा धर्मजिज्ञासाप्रतिज्ञयैव गतार्थत्वात् निष्प्रयोजना अनुपपन्ना च। न हि ब्रह्मणि चोदनातिरिक्तं प्रमाणं श्रीभाष्यमते।

अतः तत्र प्रमाणनिरूपणार्थं न पृथक् प्रतिज्ञा । धर्मवत् ब्रह्मणि भेदाभावात्, सिद्धस्य ब्रह्मणः स्वयं फलस्य अन्यार्थत्वेनानङ्गत्वात्, तस्याननुष्ठेयत्वेन कर्मणीव क्रमनैराकाङ्क्ष्यात् तज्जिज्ञासायां स्वतन्त्राधिकार्यभावात् अतिदेशोहबाधतन्त्रप्रसङ्गकथानां ब्रह्मणि पृथक् निरूपणीयानामभावाच्च "अथातो ब्रह्मजिज्ञासे' ति पृथक् प्रतिज्ञा न युज्यते । वेदार्थस्य ब्रह्मणः सिद्धधर्मस्यापि उपासनाशेषतयैव प्रामाण्यस्य सङ्कर्षान्तया षोडशलक्षण्या निर्णीतत्वात्' इति शतभूषणीकारवचनं भगवद्भाष्यकारसिद्धान्तापरिज्ञानात् भ्रमैकमूलकं दुरनुवादायथार्थानुवादादिभरितं च गलहस्तितं भवति ॥

सविशेषस्य ब्रह्मणः ऐकशास्त्र्यवादिनां मते पूर्वमीमांसयैव निरूपितत्वात् 'अथातो ब्रह्मजिज्ञासे' ति प्रतिज्ञैवानुपपन्ना इति वदन् शतभूषणीकारः न श्रीभाष्यकृदाशयं सुतरां जानाति । तथा हि— विशिष्टाद्वैतिनो हि प्रमाणानुरोधेन एवं निरूपयन्ति–'अथातो धर्मजिज्ञासे' ति जैमिनीयविचारोपक्रमसूत्रे धर्मपदेन वेदार्थत्वेन रूपेण कर्मब्रह्मणोरुभयोर्ग्रहणम् । अतः उपक्रमः उभयसाधारणः । अनन्तरं च 'चोदनालक्षणोऽर्थो धर्मः' इत्यादिना सूत्रभागेन शिष्यः जैमिनिः अप्रधानभूतं कर्मैव द्वादशलक्षण्या निरूपयामास । आचार्यस्तु भगवान् व्यासः प्रधानभूतं ब्रह्म 'अथातो ब्रह्मजिज्ञासे' त्यारभ्य चतुर्लक्षण्या । संकर्षकाण्डस्तु मध्यपतितः अपेक्षितत्वात् द्वादशलक्षणीशेषभूत एव । न हि सामान्यतः प्रतिज्ञामात्रेण ब्रह्मणः निष्कृष्टज्ञानं संजातं, येन पुनः 'अथातो ब्रह्मजिज्ञासे' ति प्रतिज्ञा अनुपपन्ना भवेत् । अतः विशेषविचारार्थं श्रीभाष्यकृतां दृष्ट्याऽपि पुनः प्रतिज्ञाकरणं युक्तमेव । अन्यथा 'अथातो धर्मजिज्ञासे' ति प्रतिज्ञयैव गतार्थत्वात् 'अथातश्शेषलक्षणम्' (पू. मी. ३-१-१) 'अथातः क्रत्वर्थ

पुरुषार्थयोर्जिज्ञासे' (पू. मी. ४-१-१) ति प्रतिज्ञानं वा कथं घटताम्। धर्मगताङ्गत्वादिप्रकारविशेषसिध्यर्थं इति चेत्, तद्वत् अत्रापि ब्रह्मरूप वेदार्थगतप्रकाराणां जगत्कारणादीनां सिध्यर्थमेव पुनः विचारप्रतिज्ञेति तुल्या चर्चा। ननु चात्र धर्मलक्षणात् तत्प्रमाणाच्च पृथक् ब्रह्मणः, 'जन्माद्यस्य यतः' इति लक्षणान्तरं, 'शास्त्रयोनित्वात्' इति प्रमाणान्तरं च सूत्रितं ब्रह्ममीमांसायां, अतः न धर्मब्रह्मणोः परस्परं संबन्ध इति चेत्, शेषाध्यायादिष्वपि प्रथमतः धर्मप्रातिज्ञातः विलक्षणतया 'अथातः शेषलक्षणम्' 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति प्रतिज्ञां कृत्वा, तदनु 'शेषः परार्थत्वात्' 'यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात्' (पू. मी. ४-१-२) इत्यादिना लक्षणस्य, श्रुतिलिङ्गादिप्रमाणानां च निरूपणात् शास्त्रभेदापत्तिः अपरिहार्यैव। अतः लक्षणप्रमाणादिभेदोऽपि शास्त्रभेदाप्रयोजकः। अधिकं तु ऐकशास्त्र्यभङ्गवादपरीक्षासमालोचने द्रष्टव्यम्। अतः प्रतिज्ञामात्रेण ब्रह्मज्ञानस्यासज्ञातत्वात् पुनः प्रतिज्ञानं तावत् श्रीभाष्यकृतां दृष्ट्या युक्तमेव॥

किंच 'अथातो ब्रह्मजिज्ञासे' ति सूत्रे 'ब्रह्मजिज्ञासे' त्यत्र सनर्थेच्छाकर्मत्वं ज्ञाने तत्प्रकृत्यर्थे ब्रह्मणि च विवक्षितम्। 'धातोः कर्मणस्समानकर्तृकादिच्छायां वा' (पा. सू. ३-१-७) इति सूत्रार्थविवरणावसरे महाभाष्ये 'अथेह ग्रामं गन्तुमिच्छति इति कस्य किं कर्म'? इत्युपक्रम्य 'एवं तर्हि गमेर्ग्रामः कर्म, इषेरुभे कर्मणी' इति सिद्धान्तकरणेन ब्रह्मजिज्ञासेत्यत्रापि सनर्थेच्छाकर्मत्वस्य ब्रह्मणि तज्ज्ञाने च प्रतीतेरावश्यकत्वात्। तत्र ब्रह्मणः निरतिशयानन्दरूपत्वेनेच्छाविषयत्वम्। तत्र च प्रमाणं 'विज्ञानमानन्दं ब्रह्मे' त्यादिः। ज्ञानानुकूल्यस्य विषयानुकूल्यनिबन्धनतया आनन्दब्रह्मविषयता ज्ञानस्येच्छाविषयत्वम्। मतश्च ब्रह्मफलकः ब्रह्मविषयकश्च

विचारः ब्रह्मजिज्ञासापदार्थस्संपन्नः । धर्मविचारे तु न धर्मस्य स्वतः फलत्वं, किं तर्हि, विचारेण धर्मज्ञानं तेनचानुष्ठानं ततश्च स्वर्गादिफलमिति, महदिदं वैलक्षण्यम् । अतः धर्मजिज्ञासया गतार्थताऽऽपादनं तावत् उन्मादादेव । 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण उपासनाशेषतया ब्रह्मणि प्रमाणमुपन्यस्तम्' इति वदन् हि भूषणीकारः श्रीभाष्यकारमतं हि सुतरां न जानातीति स्फुटमावेदयति । भगवान् हि भाष्यकारः जिज्ञासाधिकरणे, सिद्धपरेष्वपि वाक्येषु व्युत्पत्तिग्रहं प्रदर्श्य 'सत्यं ज्ञानं अनन्तं ब्रह्म' इत्यादि वाक्यानां लिङाद्यसमभिव्याहृतानां (अचोदनाभूतानां) ब्रह्मणि प्रमाणत्वं निरूपयति । एवं च श्रीभाष्यकाराणां मते चोदनैव प्रमाणं ब्रह्मणि इति कथनं तावत् स्वाज्ञानविलसितमेव । दुरनुवादश्च । एतावता भूषणीकारस्य परमतज्ञानं नास्तीति स्फुटमावेदितम् । इदानीं स्वमतज्ञानमपि नास्तीत्युपपादयामः ॥

तथा हि, ऐकशास्त्र्यवादिनां दृष्ट्या 'अथातो धर्मजिज्ञासेत्यत्र धर्मपदेन वेदार्थस्य विवक्षणात् सविशेषं ब्रह्मजिज्ञास्यतया प्रतिज्ञातं, इति वदन् भूषणीकारः अथातो धर्मजिज्ञासेति सूत्रे धर्मजिज्ञासापदेन ब्रह्मविचारबोधो न युक्तः धर्मपदेन ब्रह्मणः ग्रहणं च अयुक्तमिति अद्वैतसिद्धान्त इति सूचयति । इमं वादं परिमळकार एव खण्डयति । उक्तं च परिमळे—'धर्मजिज्ञासासूत्रे ब्रह्ममीमांसासाधारणी वेदार्थविचारप्रतिज्ञा, धर्ममीमांसामात्रासाधारणी धर्मविचारप्रतिज्ञाचेति द्विविधा प्रतिज्ञा विवक्षिता । सूत्राणामावृत्त्या अनेकार्थ बोधनस्यालङ्कारत्वात् । अतएव 'अथातःशेषलक्षणम्' (जै. सू. ३-३-१) इति तृतीयाध्यायाद्यसूत्रं वार्तिककृता 'द्विलक्षण्याः परं शिष्टं यावत् किंचन लक्षणम् । तत् सर्वं वक्तु-

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मारभ्यमथातश्शेषलक्षणम् '। इत्यवशिष्टाध्यायार्थविचारप्रतिज्ञापरं व्याख्याय अनन्तरं तृतीयाध्यायार्थशेषशेषिभावविचारप्रतिज्ञापरत्वेनापि व्याख्यातम्। एवं च यथा 'शेषः परार्थत्वात्' इति द्वितीयसूत्रमारभ्य तृतीयाध्यायसूत्राणि शेषशेषिभावमात्रविषयाणि, एवं चोदनासूत्रमारभ्य द्वादशलक्षणीसूत्राणि धर्ममात्रविषयाणि। अत एव चोदनासूत्रे धर्मस्यैव विधिगम्यत्वं लक्षणमुक्तम्। न हि ब्रह्मणः विधिगम्यत्वमस्ति। अतः 'तस्यनिमित्तपरीष्टिः' इति सूत्रे धर्मप्रमाणमेव परीक्ष्यत्वेन प्रतिज्ञातमिति तदनुसारेण 'आम्नायस्य क्रियार्थत्वात्' (पू. मी. १-२-१) इति सूत्रं धर्मप्रमाणत्वेनाभिमतस्य क्रियार्थत्वेनैव तत्र प्रामाण्यं वक्तव्यमित्येतत्परम्। 'विधिनात्वेकवाक्यत्वात्' इति सूत्रमपि धर्मप्रमाणत्वाभिमतक्रियाविधिसमभिव्याहृतवायुर्क्षेपिष्ठादिवाक्यमात्रविषयमिति न कश्चिद्विरोधः।' इति॥

एवं ब्रह्मणो धर्मत्वं च सहस्रनामभाष्ये 'अणुरेषधर्मः' इति श्रुत्या शङ्कराचार्यैरपि स्थापितम्। एतद्विरुद्धतया भूषणीकारवचनं स्वमतपरमतोभयाज्ञानविलसितत्वादनुपादेयमेव। अत्र च 'धर्मो वा इदमग्र आसीत् न पृथिवी न वायुः नाकाशः न ब्रह्मा न रुद्रः न ऋषयः सोऽध्यायत् (९-३) इति गीताभाष्ये आनन्दतीर्थोदाहृतसामवेदशाखावाक्यमपि प्रमाणम्। अत एव च अभियुक्ताः व्यासादयः—

'ये च वेदविदो विप्रा येचाध्यात्मविदो जनाः।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्॥'

इति वदन्ति। अत्र वेदविद इत्युक्त्या कृत्स्नवेदतात्पर्यवेदनं ब्रह्मवेदनं च येषां वर्तते ते वदन्ति इत्यर्थसिद्ध्या 'मूर्तिमती कीर्तिः' इत्यादिवाक्यसमशीलता चास्य न युक्तेति ज्ञापितम्। अत्र 'सनातन'मित्यनेन स्थिरत्वस्य प्रतिपादनेन अस्थिरकर्मव्यावृत्तिरपि सूचिता।

अतश्च महाभारतवचनमपि ब्रह्मणो धर्मत्वे सुदृढं प्रमाणम् । एवं च 'अथातो धर्मजिज्ञासा' इति सामान्यप्रतिज्ञा । न हि तावन्मात्रेण ब्रह्मण सिद्धिर्भवतीति 'अथातो ब्रह्मजिज्ञासे' ति ब्रह्ममात्रासाधारणी प्रतिज्ञा इति श्रीभाष्यकाराणां सिद्धान्तः । न तावता ब्रह्मविचार प्रतिज्ञायाः वैयर्थ्यं पौनरुक्त्यं वा शङ्कितुं शक्यते । किंच 'एष पन्था एतत्कर्म एतद्ब्रह्म एतत्सत्यं' इति श्रुत्यनुसारेण धर्मविचारप्रतिज्ञावत् प्राधान्येनोत्तरभागविचारप्रतिज्ञाया आवश्यकत्वाच्च । अतः विशिष्टाद्वैतरीत्या ब्रह्मविचारप्रतिज्ञा युक्ता अदूष्याचेति सिद्धम् ॥

वस्तुतस्तु अद्वैतिनां मते ब्रह्मविचारप्रतिज्ञा तावन्नैव घटते । लोकत एवावगतत्वात् । उक्तं हि शङ्कराचार्यैः 'सर्वो ह्यात्मास्तित्वं प्रत्येति । न नाहमस्मीति । यदि हि नात्मास्तित्वप्रसिद्धिस्स्यात्, सर्वो लोको नाहमस्मीति प्रतीयात् । आत्मा च ब्रह्म, इति । अतः आत्मव्यतिरिक्तब्रह्मण अभावात् आत्मनश्च लोकत एव तन्मते सिद्धत्वात् न विचारेण कृत्यमस्ति किञ्चित् । विशेषतः ज्ञानार्थं विचार इति चेत्, तात्त्विकप्रमाणानां श्रुत्यादीनामनङ्गीकारेण श्रुत्यादिबलात् आत्मविशेषनिश्चयोऽपि न भवत्येवेति शाङ्करमते विचारप्रतिज्ञा अयुक्तैव । चिन्मात्रस्य स्वप्रकाशतया ज्ञानाविषयतया जिज्ञास्यत्वायोगश्च । न च चिन्मात्रं स्ववेद्यमपि प्रमाणजन्यवृत्तिव्याप्यत्वात् स्वप्रकाशत्वेऽपि स्वावरणनिवृत्तिमात्रेण प्रमाणवेद्यमिव भवति इति वाच्यम् । वृत्त्याद्यङ्गीकारे प्रमाणाभावात् । वृत्त्यवच्छेदेन शुद्धचितः अज्ञानविरोधित्वोपपादनेऽपि वृत्त्यनवच्छेदे तस्याप्रकाशत्वमेवायास्यति । न हि शुद्धचितः किञ्चिदवच्छेदेन प्रकाशमानत्वं किञ्चिदवच्छेदेन नेति युक्तम् । तथा सति वृत्त्यधीन प्रकाशत्वेन स्वयं प्रकाशत्वस्यैव भङ्गप्रसंगात् । 'ब्रह्मवित्' 'ब्रह्मवेद' इत्यादिश्रुतिषु ब्रह्मणः ज्ञानविषयत्वस्य ज्ञानान्मोक्षस्य च प्रतिपादकासु गौणार्थस्वीकारापत्तेश्च । विदिधातोश्च

वृत्त्यर्थकत्वमेवेत्यत्रच स्वेच्छास्वतन्त्रावितिगमकान्तरस्यादर्शनाच्च। अतः ब्रह्मणि ज्ञानविषयत्वस्यानङ्गीकारात् विचारप्रतिज्ञा नैव युज्यते अद्वैतिनाम्। निर्गुणस्य च ब्रह्मणः ब्रह्मपदवाच्यत्वाभावात् आद्यसूत्र एव ब्रह्मपदे लक्षणास्वीकारापत्तिश्च। विस्तरस्तूत्तरत्र। असाधारणधर्मस्यैव लक्षणत्वात् तस्य च जगत्कारणत्वादेः निर्धर्मकत्वभङ्गभिया ब्रह्मणि शाङ्करैरनङ्गीकारात् द्वितीयसूत्रमप्यनुपपन्नम्। अद्वैतिनां मते हि आद्ये सूत्रे जिज्ञास्यत्वेन प्रकृतं ब्रह्म निर्विशेषमेवेति तस्य भ्रमाधिष्ठानत्वेऽप्यकारणत्वात्। अधिष्ठानत्वस्यैव विवक्षायां तु श्रुतिसूत्रयोर्जन्मोक्त्ययोगः। न हि अध्यस्तं अधिष्ठानाज्जायत इत्युच्यते। यश्चायं विभागः, जन्मादिकारणत्वं तटस्थलक्षणं, आनन्दादिरेव स्वरूपलक्षणमिति, सोऽपि स्वरूपतटस्थलक्षणविभागस्यैव निरूपयितुमशक्यत्वात् न संभवतीति स्पष्टं प्राचां ग्रन्थेषु। तथाहि, के ते स्वरूपतटस्थलक्षणे अभिमते। लक्ष्यगतागते वा, सत्यासत्ये वा, यावत्स्वबोध्यव्यावृत्तिभाव्यभाविनी वा, निरुपाधिकसोपाधिकरूपे वा, स्वतो व्यावर्तकव्यावर्तकान्तरोपस्थापकरूपे वा। न तावदाद्यः कल्पः— काकादीनामपि लक्ष्यगतत्वेन स्वरूपलक्षणत्वप्रसंगात्। एवं कारणत्वस्य ब्रह्मणि सत्वेन तस्यापि स्वरूपलक्षणत्वप्रसंगाच्च। आनन्दादेः ब्रह्मैक्येन तदनिष्ठत्वात् स्वरूपलक्षणत्वाप्रसंगात् तटस्थलक्षणत्वप्रसंगाच्च। नापि द्वितीयः, काकादेर्गृहे अध्यस्तत्वाभावेन स्वरूपलक्षणाव्याप्तेः। नापि तृतीयः स्वबोध्यव्यावृत्तिः यावत् लक्ष्ये वर्तते तावत्तत्र वर्तमानत्वं स्वरूपलक्षणम्। तावदवर्तमानत्वं च तटस्थलक्षणमिति किल तदर्थः, तथाचेत् त्वन्मते यावद्व्यावृत्तिभाविनः व्यावर्तकाकारस्यादर्शनेन अस्यैव यावद्व्यावृत्तिभावित्वस्यावश्यंभावात् अध्यासतटस्थलक्षणे अतिव्याप्तेश्च। नापि चतुर्थः भवन्मते हि कारणत्वस्य सोपाधिकत्वेन निरुपाधिकस्वरूपत्वाभावे, आनन्दस्यापि

तन्नस्यादेव । भवन्मते हि शुद्धे आनन्दत्वजातेरभावेन अनुकूलवेदनरूपस्य वा परमप्रेमास्पदस्य वा दुःखविरोधोपलक्षितस्वरूपस्य वा तस्य सोपाधिकत्वात् । नापि पञ्चमः, त्वन्मते कारणत्वेनोपस्थाप्यव्यावर्तकान्तराभावात् । विस्तरस्तु अन्यत्र ॥

विवर्तोपादानत्ववर्णनं तु स्वोत्प्रेक्षामात्रमूलकं श्रुतिसूत्राद्यनभिमतं च सर्वथा निरूपणानर्हमिति पूर्वमेवावेदितम् । यथाऽवसरमुत्तरत्र निरूपयिष्यते च । अतः द्वितीयमपि सूत्रं सर्वथा अद्वैतिनां प्रतिकूलमेव । तृतीयं च सूत्रं शास्त्रयोनित्वा' दिति शुद्धस्य शास्त्रगम्यत्वमनभ्युपगच्छतां शाङ्कराणां नैव संगच्छते । उक्तंचाभियुक्तैः—

यत् सत्यं नैव तद्वेद्यं यद्वेद्यं नैव तच्च सत् ।
इति ते समयस्तत्र कुत्रार्थे शास्त्रमानता ॥

सर्वधर्मोज्झितस्यास्य किं शास्त्रेणाधिगम्यते ।
मिथ्याधर्मविधातुश्च शास्त्रस्यैवाप्रमाणता ॥

इति । किंच आद्यसूत्रे ब्रह्मशब्देन बृहत्त्वबृंहणत्वादिधर्मविशिष्टतया, द्वितीयसूत्रे च जगत्कारणत्वादिधर्मविशिष्टतया, उत्तरत्रापि 'ईक्षतेर्नाशब्दम्' । 'अन्तस्तद्धर्मोपदेशात्' 'आकाशस्तल्लिङ्गात्' इत्यादौ ईक्षितृत्वादिभिः तैस्तैरसाधारणधर्मैः कारणत्वादिना च विशिष्टतया ब्रह्मप्रतीतेः तस्मिन् शास्त्रं प्रमाणं वा, उत बृहत्त्वादिधर्मरहिते भवदभिमते निःश्रीके शून्ये ब्रह्मणि, नाद्यः भवन्मते धर्मविशिष्टब्रह्मणः अतात्विकत्वेन तद्बोधकशास्त्रस्याप्यतात्विकत्वप्रसङ्गात् । नापि द्वितीयः, पूर्वोत्तराविरोधाय 'न ब्रह्मजिज्ञासा, न जन्माद्यस्य यतः' अनीक्षतेः, 'तद्धर्मानुपदेशात्' इत्यादिसूत्रविन्यासापत्तेः ॥

ननु ब्रह्मणि शास्त्रवेद्यत्वमङ्गीकुर्मः । न चैतावता मिथ्यात्व-

साधकदृश्यत्वहेतोर्व्यभिचारः, सत्यब्रह्मवृत्तित्वादिति वाच्यम्। वृत्तिविषयत्वं वेद्यत्वं, फलव्याप्यत्वं दृश्यत्वमिति तयोर्भेदात्। अतः ब्रह्मणि वृत्तिविषयत्वरूपवेद्यत्वसत्त्वेन न पूर्वोक्तानुपपत्तिः। फलव्याप्यत्वरूपदृश्यत्वाभावाच्च न दृश्यत्वहेतोर्व्यभिचारः इति नवीनरीत्या नैव कश्चन दोष इति चेत्, भवदभिमतं वेद्यत्वं प्रतिवादिभिनङ्गीकृतमिति हेतोरुभयवादिसिद्धत्वाभावः। नित्यातीन्द्रियेषु उभयवाद्यसिद्धिश्च। अतः तृतीयमपिसूत्रं शाङ्कराणां प्रतिकूलमेवेति आदिमं सूत्रत्रयं नैव विवर्तवादोपष्टंभकमिति सिद्धम्॥

एतेन 'इदंचाधिकरणत्रयं ब्रह्मसूत्राणामद्वैते स्वारस्य एव सार्थकम्, श्रीभाष्यमते तु तन्निरर्थकम्' 'अथातो ब्रह्मजिज्ञासे' ति पृथक् प्रतिज्ञाह्यनुपास्यज्ञेयमात्रसिद्धवस्तुबोधनैः शास्त्रत्वं वेदान्तस्य गमयति'। इति शतभूषणी निरस्ता॥

बृहत्त्वबृंहणत्वादेः, कारणत्वस्य, शास्त्रवेद्यत्वस्य च वास्तविकस्य ब्रह्मण्यनङ्गीकारात्। व्यक्तंचेदमाकरे 'ये तु निर्विशेषवस्तुजिज्ञास्यमिति वदन्ति तन्मते 'ब्रह्मजिज्ञासा' 'जन्माद्यस्य यतः' इत्यसङ्गतं स्यात्। निरतिशयबृहत् बृंहणं च ब्रह्मेति निर्वचनात्। तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च। एवमुत्तरेष्वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु च ईक्षणाद्यन्वयदर्शनात् सूत्राणि सूत्रोदाहृतश्रुतयश्च न प्रमाणम्। तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम्। जगज्जन्मादिभ्रमः यतस्तद्ब्रह्मेति स्वोत्प्रेक्षापक्षेऽपि न निर्विशेषवस्तुसिद्धिः। भ्रममूलमज्ञानं, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात्। साक्षित्वं हि प्रकाशैकरसतयोच्यते। प्रकाशत्वं हि जडाद्यावर्तकं स्वस्य परस्य च

व्यवहारयोग्यतापादनस्वभावेन भवति। तथा सति सविशेषत्वम्। तदभावे प्रकाशतैव न स्यात्, तुच्छतैव 'स्यात्'। इत्यादि (जन्माद्य-धिकरणश्रीभाष्यम्) ॥

यद्यपि चेदं कल्पनं 'अथातो ब्रह्मजिज्ञासेति सूत्रे ब्रह्मपदेन सविशेषं निर्विशेषंचोभयमपि ब्रह्म विवक्षितमिति ॥

तदपि न सांप्रतम्। ब्रह्मपदेन सर्वत्रापि 'बृहत्वात् बृंहण-त्वाच्च तद्ब्रह्मेत्यभिधीयते' इत्यादिवचनानुसारेण बृहत्वबृंहणत्वादि धर्मविशिष्टस्यैव प्रतीतेः, निर्विशेषप्रतीतेः कुत्राप्यभावात्। अत एव च निर्विशेषांशस्तु लक्ष्यमर्यादया भासते इत्यपि परास्तम्। लक्षणा-बीजाभावात्। संकेतमात्रेण लक्षणाङ्गीकारे तुच्छेऽपि लक्षणास्वी-कारापत्तेश्च। 'बृहन्तो ह्यस्मिन् गुणाः' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच'। 'सत्यकामः सत्यसंकल्पः' 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः,।' इत्यादिश्रुतिभिः, 'मय्यनन्तगुणे' 'तेजोबलैश्वर्यमहावबो-धसुवीर्यशक्त्यादिगुणैकराशिः' 'परः पराणां' इत्यादिस्मृतिभिः, 'अन्तस्तद्धर्मोपदेशात्' 'अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यप-देशात्' 'विवक्षितगुणोपपत्तेश्च'। 'अदृश्यत्वादिगुणको धर्मोक्तेः' 'सर्वधर्मोपपत्तेश्च' इत्यादिभिः ब्रह्मसूत्रैश्च ब्रह्मणः सविशेषस्यैव अवगमेन तद्विरुद्धनिर्विशेषलक्षणायाः अङ्गीकारायोगात्। अत एव 'ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयो अर्थाः प्रतीयन्ते' इति। 'बृहतेर्धातोरर्थानुगमात्' इति 'नान्तं गुणानां गच्छन्ति तेन अनन्तोऽयमव्ययः' (सहस्रनामभाष्ये) इति च शंकरभाष्यम्। 'बृहतेर्धातोः वृद्धिकर्मणो अर्थानुगमात् आपेक्षिकमहत्त्वस्य अपरिग्र-हात् सर्वतो निरवग्रहमहत्वं संपन्नं वाक्यार्थान्वयि ब्रह्मपदादवगम्यते'

इति पञ्चपादिका 'गुणहीनं दोषभूयिष्ठं च वस्तु अल्पमविद्यमानसमं मन्यन्ते । गुणभूयिष्ठं दोषहीनं च महान्तं कथयन्ति' इति विवरणं च ब्रह्मणः गुणविशिष्टप्रतिपादनपरं संगच्छते । न च कैवल्यश्रुत्या निर्गुणश्रुत्याचात्मा निर्गुणः इति तावत् सिध्यति। अतः तदनुसारेण अन्यासां सगुणश्रुतीनां नयनं कार्यं इति वाच्यम्। निर्गुणश्रुतेः पूर्वं परत्र च 'ज्ञः कालकालो गुणी सर्वविद्यः' इति गुणप्रतिपादकश्रुतेः सद्भावेन अभिक्रमणन्यायेन गुणतात्पर्यवर्णनमेव युक्तमिति पूर्वमेव निरूपितत्वात्, गुणानां उपासनाविधिशेषतया कल्पितत्वमेवेति वादश्च न युक्तः, 'यस्सर्वज्ञः सर्ववित्' इत्यादावुपासनाविधेरश्रवणेन सर्वज्ञत्वादिगुणानां कल्पितत्वायोगात् । अन्यथा विनिगमकाभावेन निर्गुणवाक्यस्यापि कल्पितार्थबोधकत्वमेवेत्याक्षेपे किं समाधानम् ? ॥

किंच निर्गुणश्रुतिविरोधमात्रेण सगुणश्रुतेः अतात्त्विकविषयत्वकल्पनं नैव शास्त्रकारसंमतम्। उक्तं हि वार्तिककारैः—'को हि मीमांसको ब्रूयात् विरोधे शास्त्रयोर्मिथः । एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति ॥' इति ॥

अयमर्थः—पूर्वतन्त्रे हि बाधो द्विविधः प्राप्तबाधो अप्राप्तबाधश्चेति । तत्र दाशमिकः बाधः प्राप्तबाधः। तार्तीयबाधश्चाप्राप्तबाधः। तत्र प्राप्तबाधे 'प्रकृतिवत्कुर्यात्' इत्यादिरूपस्य प्राप्तस्य चोदकादेः कृष्णलादौ अवघातवर्जं इत्यादिरूपः संकोच एव, न तु सर्वथा अतात्त्विकत्वम् । एवं तार्तीयेप्यप्राप्तबाधे 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्यनुसारेण इन्द्रशब्दप्रयुक्तमन्त्रलिङ्गस्य गार्हपत्ये गौणत्वमेव इति । एवं ब्रह्ममीमांसायामपि 'विकारशब्दान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । गौण्यसंभवात्' 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' । इत्यादौ

शास्त्रयोर्विरोधे तात्त्विकार्थान्तरत्वमेवोक्तं, नत्वारोपितार्थत्वम्। निर्गुणाद्वैतिसंमतनिर्विशेषवस्तुन एवासिद्धत्वेन 'तत्र शास्त्रयोः प्रामाण्ये समानकक्ष्यतया एकतरस्यात्यन्तिकबाधायोगात् संकोचेन विकल्पेन वा पाक्षिकप्रामाण्यं, इहत्वेकतरस्य तत्परतया प्रबलत्वादितरस्य चातत्परत्वेन दुर्बलतया वैषम्यात्' इत्यादि कुमतिकल्पनाऽपि न युक्ता। तत्परत्वस्यैव (निर्धर्मकपरत्वस्यैव) असिद्धेः। निषेधरूपत्वात् परत्वेन निर्गुणवाक्यस्य बलीयस्त्वं तु पूर्वमेव (२९ पुटे.) पर्यालोचितम्। अधिकं तु सगुणनिर्गुणश्रुतिव्यवस्थावादपरीक्षासमालोचने उपपादितम्॥

यश्चायं—वादः चोदनापदशास्त्रपदयोः भिन्नार्थकत्वात् धर्ममीमांसायां प्रमाणस्य चोदनापदेन ब्रह्ममीमांसायां तस्य शास्त्रपदेन सूत्रणेन निर्गुणाद्वैत एव सूत्रस्वारस्यमिति॥

सोऽयं जैमिनि, व्याससूत्राद्यपर्यालोचनानिबन्धनः वार्तिकापरामर्शनिबन्धनश्चेति शास्त्रविद्भिरुपेक्षणीय एव। तथा हि—जैमिनिर्हि 'शास्त्रफलं प्रयोक्तरि' 'अविशेषेण यच्छास्त्रं तत् सन्दिग्धमन्यायत्वात्विकल्पस्याराद्विशेषशिष्टं स्यात्' (१०-८-१६) इत्यादिष्वनेकेषु सूत्रेषु शास्त्रपदेन विधायकवाक्यरूपचोदनामेव बोधयन् शास्त्रपदचोदनपदयोः अर्थभेदं वदतां दुर्वादं परिहरति। एवं भगवान् व्यासोऽपि 'कर्ता शास्त्रार्थवत्वात्' इत्यत्र शास्त्रपदेन चोदनामेवाभिप्रैतीति व्यक्तं शङ्करभाष्यादिपरग्रन्थेष्वपि। अतश्च शास्त्रपदचोदनापदयोः न भूषणीकारकल्पितार्थकत्वं युक्तम्। वार्तिककारश्च 'अतिक्रमेण हिंसादिशास्त्रान्तरनिरीक्षया'। 'अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन्' 'तदेवचेदं कर्मेति

शास्त्रमेवानुधावता ' इत्यादिभिरनेकैः श्लोकैः शास्त्रपदेन चोदनायाः ग्रहणमाह। एवं चोदनापदं विधायकमेव वाक्यं बोधयति न सिद्धवस्तुबोधकवाक्यं इति भूषणीकारभ्रममपि ' चोदना हि भूतं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टं इत्येवंजातीयकं शक्नोत्यवगमयितुं, नान्यत् किञ्चनेन्द्रियम् ' इत्येतद्भाष्यविवरणावसरे—

चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया।
न हि भूतादिविषयः कश्चिदस्ति विधायकः॥

इति वार्तिककार एव परिहरति। अतः शास्त्रपदचोदनापदयोः न भिन्नार्थकत्वं, किंतु येन हि वाक्येन प्रमाणान्तराप्राप्तार्थः प्रमाप्यते तदेव वाक्यं चोदनाशास्त्रादिपदाभिधेयमिति, ' यजेत स्वर्गकामः ' ' सत्यंज्ञान ' मित्यादिवाक्यानां चोदनात्वं चाक्षतमेव। अतएव ' शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् ' इति शब्दलक्षणकथनपरे शाबरभाष्ये शास्त्रपदेन चोदनाया अपि ग्रहणम्॥

यत्तु शतभूषण्यां ' अथाऽतो धर्मजिज्ञासे ' त्यत्र अधर्मजिज्ञासेतिछेदेन शाबरभाष्योक्तरीत्या यथा धर्माधर्मसाधारणी जिज्ञासा प्रतिज्ञा, आवृत्त्या, वाक्यभेदस्य सूत्रेषु भूषणत्वात्। एवमत्रापि ब्रह्मपदेन परब्रह्मणः निर्विशेषस्य, अब्रह्मपदेन अपरब्रह्मणः सविशेषस्य च विवक्षया वाक्यभेदेनावृत्त्या योजनमपि भूषणम्,। इत्युक्तम्॥

तदिदमापादचूडमरमणीयम्। तथाहि—' अथातो धर्मजिज्ञासे ' त्यत्र अधर्मजिज्ञासेति पदच्छेदः शाबरभाष्योक्तः इति कथनं तावत् स्वप्नेऽपि शाबरभाष्यादर्शनं ज्ञापयति। एतावत्पर्यन्तं मुद्रितेषु कोशेषु मातृकासु च आद्यसूत्रे अधर्मजिज्ञासेति पदच्छेदोपपादनपरं भाष्यं कुत्रापि नोपलभ्यते। एवं अर्थवर्णने भूषणीकर्तुरविद्यैव कारणं

नान्यत् किञ्चित् । श्रुतिसूत्रादिप्रमाणेष्वेवाविद्यमानार्थं वर्णयतो भूषणीकारस्य शावरभाष्यासदर्थप्रतिपादनं न विस्मयावहम् । किंच 'चोदनालक्षणोऽर्थोधर्मः' इति द्वितीयमेव सूत्रं धर्मलक्षणपरं अधर्म-व्यावर्तकार्थशव्दघटितं आद्यसूत्रे अधर्मजिज्ञासेति पदच्छेदं व्यवच्छिनत्ति । अतः शावरभाष्योक्तरीत्येति कथनं स्वाधर्म (पाप) वलादेव ॥

परापरब्रह्मद्वैविध्यकल्पनस्याप्रामाणिकत्वादेव निर्विशेषस्य ब्रह्मपदेन सविशेषस्य अब्रह्मपदेन च वोधः इत्यप्ययुक्तमेव । सूत्रकारो हि भगवान् स्वसूत्रेषु 'धर्मोपदेशात्' 'तद्धर्मव्यपदेशात्'। सर्वधर्मोपपत्तेश्च । 'विवक्षितगुणोपपत्तेश्च' इत्यादिषु धर्मवैशिष्ट्यमेव प्रतिपादयति, न तु कुत्रापि निर्विशेषम् । एवं ध्यानविषयस्यैव सविशेषस्य मोक्षहेतुतया परत्वं च प्रतिपादयति, यथा 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य वंधाविपर्ययौ' इति । श्रुतिश्च 'तस्याभिध्यानात् योजनात्तत्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः' इति । एवं 'परात्तु तच्छ्रुतेः' 'परं जैमिनिर्मुख्यत्वात्' इत्यादौ परशब्दः उत्कृष्टार्थक एव । अयंचार्थः अद्वैतिनामपि संमत एवेति व्यक्तं तद्ग्रन्थेषु । अत्र च मूलं 'ब्रह्मविदाप्नोति परं' परात्परं पुरुषमुपैति विद्वान्', 'परात्परं पुरुषमुपैति दिव्यम्'। 'परंज्योतिरुपसंपद्य' 'पुरुषस्सपरः पार्थ भक्त्या लभ्यस्त्वनन्यया' इत्यादौ सविशेषस्यैव प्राप्यत्वप्रतिपादनमेव । 'पराभिध्याना' दिति सूत्रे अभिध्यानकर्मणः ब्रह्मणः परत्वप्रतिपादनेन परीत्या तस्यैव च वन्धविपर्ययं (मोक्ष) प्रति हेतुत्वप्रतिपादनेन च, सगुणस्यैव ध्यानविषयत्वात् तस्यैव मोक्षहेतुत्वं युक्तमिति स्पष्टं सूत्रकाराणां हृदयम् । एवं च 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति सूत्रेऽपि 'परस्ये'

त्यनेन 'पराभिध्यानात्' इत्यत्र ध्यानविषयतया यः सविशेषः परमपुरुषः प्रस्तुतः, तस्यैव ग्रहणं युक्तं न्त्वनुपस्थितपरसंमत निर्विशेषस्य, उपस्थापकाभावात् ॥

न च 'परमतस्सेतून्मान' इति सूत्रे निर्विशेषादुत्कृष्टं वर्तते इति पूर्वपक्षीकृत्य निर्विशेषस्यैव परत्वप्रतिपादनेन तदेव परं स्यात्, इति आद्यसूत्रेऽपि तज्जिज्ञासाप्रतिज्ञाकरणमेव युक्तमिति वाच्यम् ॥

'परमत' इति सूत्रे हि अत इत्यनेतच्छब्देन 'परात्तु तच्छ्रुतेः' 'पराभिध्यानात्तु' इति पूर्वसूत्रयोः जगत्स्रष्टा अन्तर्यामी बन्धमोक्षहेतुश्च य उपस्थितः तस्यैव ग्रहणं युक्तमिति सविशेष एव उपस्थितः। अतः तस्मादुत्कृष्टमस्तीति पूर्वपक्षः, तन्निराकरणेन च तस्यैव प्राप्यत्वमिति च सिद्धान्तः इति, न पराधिकरणमपि निर्वि शेषस्थापकम् ॥

अथ स्यात्—'तथाऽन्यप्रतिषेधात्' इति पराधिकरणगुण सूत्रे ब्रह्मभिन्नस्य सर्वस्य प्रतिषेधेन निर्विशेषं अद्वितीयं ब्रह्मैव तात्त्विकमिति सिद्ध्या परं ब्रह्म निर्विशेषमेव सूत्रकारसंमतमिति ॥

न स्यात्—यदि चास्मिन् सूत्रे ब्रह्मान्यनिषेधमात्रं विवक्षितं स्यात्, तर्हि अन्यप्रतिषेधादित्यनेनैवोपपत्तौ 'तथा' इति शब्दः व्यर्थ एव भवेत्। अतः तथेत्यनेन पूर्वपक्षिसंमतोत्कृष्टत्वरूपेणैव प्रतियोगिनः उपस्थित्या तस्य प्रतिषेध एव तत्सूत्रे विवक्षितः। एवं च ब्रह्मान्योत्कृष्टवस्तुन एव तेन सूत्रेण निषेधः क्रियते, न तु ब्रह्म भिन्नस्य सर्वस्यापि। 'तथान्यप्रतिषेधात्' इति सूत्रे हि 'यस्मात् परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इति श्रुतिः विषयवाक्यतया परैरप्युदाहृता। इयं च श्रुतिः श्वेताश्वतरे

तैत्तरीये च वर्तते। तैत्तरीयविद्यारण्यभाष्ये हि यस्मात् ब्रह्मतत्वात्—परं—उत्कृष्टं, अपरं--अनुत्कृष्टं वा वस्तु किञ्चिदपि नास्ति' इति श्रुतिरियं व्याख्याता। ब्रह्मविद्याभरणेप्येवं। तथापि नेयं व्याख्या श्रुत्यनुगुणा। 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इत्यत्रेव यद्यत्र नञ्द्वयसमभिव्याहारः स्यात् चकारश्रवणं वा, तदेवं कल्पना युक्ता भवेत्। न तच्छ्रवणं वर्तते। 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनंजय' इति गीतोपबृंहणविरोधश्च, अतः एवमाशयः श्रुतौ कल्पयितुं नैव शक्यते। 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्-इति वाक्यं व्यतिरेकविधया प्रवृत्तम्। 'अणोरणीयान् महतो महीयान्' (श्वे.–३) इति च मन्त्रः अणुत्वमहत्वरूपधर्मद्वयमपि ईशे अन्वयमुखेन प्रतिपादयति। तेन 'यस्मात् पर' मिति मन्त्रः ईशविषय एवेति सिद्धः, अतश्च 'यस्मान्नाणीयः' इत्यत्र यच्छब्दः ईशविषयः। एवमेव पूर्वं 'ततः परं ब्रह्म ईशं तं ज्ञात्वा अमृता भवन्ति (श्वे. ३–७) इति ईश्वरस्योत्कर्षः प्रतिपादितः। अतश्च 'यस्मात् परं ने' ति वाक्येऽपि पूर्वप्रस्तुतेशादुत्कृष्टस्यैव प्रतिषेधः। अत्र च अपरशब्दः अन्यपरः। अतश्च अयमर्थः, यस्मात्–ईशात्, अपरं अन्यत्, परं, उत्कृष्टं वस्तु नास्तीति। तेन, ईशस्य अपरब्रह्मत्वं, ततः उत्कृष्टं निर्विशेषं परं ब्रह्मेति, ये वदन्ति तेषां मतमप्रामाणिकमिति तन्मत निरासार्थमेवेयं श्रुतिः प्रवृत्ता। एवमेव श्वेताश्वतरे षष्ठे 'तमीश्वराणां परमं महेश्वरं'—इत्यनन्तरं 'न तत्समश्चाभ्यधिकश्च दृश्यत' इत्यत्रापि, ईशाधिकस्य निषेधेन, ईशाधिकनिर्विशेषवस्तूत्कर्षवादिमतमपि निरस्तमिति श्रुतिषु ब्रह्मसूत्रेषु चन क्वापि निर्विशेषप्रतिपादनम्। अतश्च निर्विशेषस्य परब्रह्मत्वाभिधानं, आद्यसूत्रे तद्विचारप्रतिज्ञाकरणं, सविशेषस्यापरब्रह्मत्वमित्यादिकल्पनं श्रुतिसूत्राद्यननुगुणमिति व्यक्तं प्रामाणिकानाम्॥

निर्विशेषस्यैवाप्रामाणिकत्वेन तद्बोधकवाक्यानामपि अप्रसिद्धत्वात् 'अत एव निर्विशेषपराणीव स्पष्टब्रह्मलिङ्गानि अस्पष्टब्रह्मलिङ्गानि च सविशेषपराण्यपि वाक्यानि ब्रह्ममीमांसायां मीमांस्यन्ते' इति शतभूषणी परास्ता ॥

यदुक्तं 'ब्रह्मजिज्ञासे' त्यत्र षष्ठीसमासाश्रयणेन निर्विशेषब्रह्मसिद्धिप्रयोजकसविशेषविचारप्रतिज्ञापि नात्र हीयते, इति, तदिदं निर्विशेषस्य सूत्रेषु सूचनाभावात् श्रुतावप्रतिपादितत्वात्, यथाक्रतुरस्मिंलोके पुरुषोभवति तथेतः प्रेत्यभवति 'येयथा मां प्रपद्यन्ते' इत्यादि प्रमाणविशेषधात्, नितरां विरुद्धस्य सविशेषस्य निर्विशेषविचारोपयोगित्वस्य अहिनकुलयोरिव कल्पयितुमशक्यत्वाच्चायुक्तमेव ॥

यदत्र भूषणीकारस्य न्यायरक्षमणिग्रन्थसंवाददानं तत् भूषणीकारोद्धृतन्यायरक्षामणि ग्रन्थभागस्य आहोस्वित् तत्प्रतिपाद्यार्थस्य वा अन्तरधिकरणोपक्रमे न्यायरक्षामणिग्रन्थे अनुपलंभात् भूषणीकारस्य वञ्चकाग्रेसरत्वमावेदयति । शतभूषणीकारोक्तास्सर्वेऽप्यर्था एवमेवाप्रामाणिकाः निर्मूलाश्चेति मध्यस्थाः निर्मत्सराः पण्डिता जानीयुरित्यस्य पर्याप्तमिदमुदाहरणम् ॥

यच्च श्रीभागवते—

'ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात्सदसतःपरे ॥
(श्री. भा. १०–८७–१)

इति परीक्षितः प्रश्नं भगवान् शुकः—

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥

इति जगत्कारणत्वरूपतटस्थलक्षणोपन्यासेन सविशेषमुखेनैवाध्यारोपवादन्यायेनोपदेशार्हं ब्रह्मेत्युत्तरयति ' इति कल्पनं, तदिदमसंबद्धम् । पूर्वोत्तरसंदर्भविरोधात् । पूर्वस्मिन् अध्याये हि ' सर्ववेदमयो विप्रः सर्ववेदमयोऽस्म्यह ' मिति वेदानां ब्रह्मप्रमापकत्वमवगतम् । तदिदं कथं घटते ? लोके हि सर्वे शब्दाः चिदचिद्वाचिनः प्रसिद्धाः, न ब्रह्मवाचिन, अतः, कथं सर्ववेदमयत्वं वासुदेवस्येति पृच्छति राजा —ब्रह्मन्नित्यादिना । हे ब्रह्मन्, गुणवृत्तयः इत्यत्र गुणशब्दः विशेषणपरः । गुणेन जातिगुणक्रियान्यतमेन द्वारभूतेन वृत्तिः—बोधनं, यासां ताः, जात्यादिकं प्रवृत्तिनिमित्तीकृत्य तद्विशिष्टाभिधायिनः इत्यर्थः । श्रुतयः चिदचित्पराः कथं ब्रह्मणि साक्षाचरन्ति—प्रवर्तन्ते । न हि प्रवृत्तिनिमित्तप्रधानेन शब्दः प्रतिपादयितुमलमिति प्रश्नार्थः । अत्र लक्षणया (जहदजहल्लक्षणास्वीकारेण) निर्विशेषपरत्वं वदतां मतं निरसितुं ' साक्षा ' दिति पदम् । ' सर्वे वेदा यत्पदमामनन्ति ' वेदैश्च सर्वैरहमेव वेद्यः ' इत्यादिषु सर्वशब्दस्वारस्यात् सर्वासामपि वाचां तस्मिन्नभिधावृत्तेरेवोपगमात् ॥

एवं राजकृतप्रश्नस्योत्तरमाह—' बुद्धी ' त्यादि द्वितीयश्लोकेन (सृष्टिप्रतिपादनमुखेन) अयमर्थः । ' अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि । ' सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वा अभिवदन् यदास्ते ' इत्याद्याः अनेकाः श्रुतयः स्वपर्यन्तनामरूपव्याकरणेन तत्तच्चिदचिद्वस्तुशरीरकतां, ब्रह्मणः प्रतिपादयन्तीति लोके ब्राह्मणादिशब्दानां आत्मपर्यन्तवाचित्वस्येव वेदेष्वपि तत्तच्चिदचिद्वाचिनश्शब्दाः तदन्तर्यामिपरमात्मपर्यन्ता एवेति तत्तच्छब्दवाच्यो परमात्माभवतीति ' सर्ववेदमयोस्म्यह ' मित्युक्तस्यानुपपत्तिर्नेति साधयितुं सृष्टिमात्रं प्रतिपादयति—बुद्धीन्द्रियेति ।

जनानां बुद्ध्यादीन् असृजत्, प्रभुः—अध्यक्षः, निर्वाहक इति यावत्। अयमाशयः। स्वयमन्तरात्मतया नामरूपयोर्निर्वाहको भवितुं बुध्याद्युपलक्षितसमष्टिसृष्टिपरंपरया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनस्सदसच्छब्दवाच्यचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपः तत्तच्छब्दवाच्यश्चाभवदिति। एवं च चिदचित्पदार्थानां सर्वेषां परमात्मशरीरतैकस्वाभाव्यात्, तत्त्वेनैव च तेषां वस्तुत्वात् पृथक्स्थित्यनर्हविशेषणत्वाच्च अपृथक्सिद्धविशेषणवाचिनां शब्दानां विशेष्यपर्यन्ताभिधानस्वाभाव्यात् गवादिशब्दानां गोत्वादिकं प्रवृत्तिनिमित्तीकृत्य व्यक्तिपर्यन्ताभिधानस्य मुख्यत्ववत् सर्वेषां लोकव्युत्पत्तिसिद्धस्वस्वार्थाभिधायिनां स्वार्थान् परमात्मापृथक्सिद्धविशेषणभूतान् प्रवृत्तिनिमित्तीकृत्य परमात्माभिधानं मुख्यमेवेति। ननु भगवतः अवाप्तसमस्तकामस्य सृष्टिः कुतः इतिचेदाह—'मात्रार्थ' मिति। मात्रार्थे—मीयन्ते इति मात्राः, देहाः तदर्थं, तदुत्पदनार्थे इत्यर्थः, प्रलयकाले असत्कल्पानां जीवानां स्वोपासोपयुक्तकरणकलेवरादिप्रदानेनोज्जीवनार्थं जगत्सर्गप्रवृत्तिरित्यर्थः। भवार्थे—अभ्युदयार्थे। आत्मने—आत्मज्ञानार्थम्। अकल्पनाय—मोक्षाय। कल्पनं—ज्ञानैकाकारेष्वात्मसु देवमनुष्यादिकल्पनं संसारः, तदभावाय मुक्तयेचेत्यर्थः। एवमनयोः श्लोकयोः तत्त्वार्थप्रतिपादकत्वे संभवति, जगत्कारणत्वं तटस्थलक्षणं, ब्रह्म अध्यारोपवादन्यायेन सविशेषमुखेनैवोपदेशार्हमित्यर्थस्य स्वभ्रान्तिपरिकल्पितस्य नात्रावकाशं पश्यामः। यदि अस्मिन् प्रकरणे ब्रह्म निर्गुणमेवेत्यभिप्रेतं, तर्हि एतदध्याय एव सगुणत्वप्रतिपादकश्लोकविरोधश्च। यथा—

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोः
गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः।

अनुयुगमन्वहं सगुण गीतपरंपरया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥
(श्री. भा. १०-८७-४०) इति श्रूयते ।

अत्र सगुणेति संबोधनेन ब्रह्मणः निर्गुणत्वप्रतिपादनं न तात्विकमिति निश्चीयते । अतः पूर्वोत्तरविरोधात् नोपात्तश्लोकयोः निर्गुण प्रतिपादनं इत्यास्तां विस्तरः ॥

किंच भगवद्गुणविद्वेषिणां भक्त्युपासनादिमार्गदूषकाणां केवल ज्ञानादेव मोक्षः इति जल्पतां मतं भगवान् शुकमहर्षिरेव समूलमसिन्नेव स्कन्धे उच्छिनत्ति । यथा—

'श्रेयःस्रुतिंभक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यत् यथा स्थूलतुषावघातिनाम् ॥
(श्री. भा. १०-१४-४)

गुणात्मनस्ते हि गुणान् विमातुं
हितावतीर्णस्य क ईशिरेऽस्य ।
कालेन यैर्वा विमिताःसुकल्पैः
भूपांसवः खे मिहिका द्युभासः ॥ इति ।
(१०-१४-७)

अतश्च भागवते निर्गुणब्रह्मपादनमिति स्वप्रयुक्तो बाणः स्वमेव हनिष्यति ॥

केवल सविशेषपरत्वे ब्रह्मशब्दस्य अधिगतार्थत्वमिति वादश्च पूर्वमेव निरस्तः । एवं च प्रथमसूत्रं निर्विशेषाद्वैतवाद एवानुपपन्नम्,

न तु विशिष्टाद्वैते। केवल सविशेषपरत्वे सङ्कर्षकाण्डादेव गतार्थत्वात् प्रथमसूत्रानुपपत्तिः इति वादश्च पूर्वमेव निरस्त इति पुनश्च निरसनं चर्वितचर्वणमेव ॥

वस्तुतस्तु यथा 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतौ समनिषेधेनैव ब्रह्मोत्कर्षप्रतिपादने संजाते अधिकनिषेधः सगुणादपि अधिकं किञ्चिन्निर्गुणं वर्तते इति वदतां निर्गुणानां वादप्रतिक्षेपार्थं भवति, तद्वत् सविशेषब्रह्मातिरिक्तं निर्विशेषं किञ्चिद्वर्तते इति ये वदन्ति तन्निरासार्थं, ब्रह्मणः धर्मविशिष्टत्वस्थापनार्थं, वेदस्य कृत्स्नस्यापि एकविधप्रामाण्यस्थापनार्थं, बौद्धवत् व्यावहारिकपारमर्थिक भेदेन सत्यद्वयाङ्गीकारेण केषांचिदेव महावाक्यत्वेनाभिमतानां प्रामाण्यं, अन्येषां तु अतत्त्वार्थबोधकत्वेनाप्रामाण्यमिति जल्पतां मतं निरसितुं च ब्रह्मविचारः व्यासेन प्रतिज्ञायते। तथा हि 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति पराभिमतनिर्गुणविद्यां विषयतया स्वीकृत्य तत्र धर्मोक्त्या अदृश्यत्वादिगुणकस्य परब्रह्मत्व स्थापनात्, उत्तरसूत्रेण 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इत्यनेन भेदव्यपदेशस्य हेतूकरणात्, निर्गुणस्वीकरणं जीवब्रह्मणोरभेदस्वीकारश्च दुर्गुणभूयिष्ठानमेव संगच्छते इति निरूपयति भगवान् ब्रह्मसूत्रकारः ॥

एवं भूमविद्याया (परसंमतनिर्गुणविद्यायाः) विषयतया स्वीकरणेन प्रवृत्ते भूमाधिकरणे 'भूमा संप्रसादादध्युपदेशात्,' इति जीवाद्भेदः स्पष्टं सूत्रकारेणोपदिष्टः। तथा 'तस्मिन्नेवाधिकरणे 'धर्मोपपत्तेश्च' इति सूत्रेण परब्रह्मासाधारणधर्माणां उपपत्तिश्च प्रदर्शिता, अतः निर्गुणविद्या सूत्रकारणां कुत्रापि न संमता इति स्पष्टं विदुषाम्। न केवलमसंमतिमात्रम्, किं तर्हि? गुणेष्वादरं च

दर्शयति यथा 'आदरादलोपः' इति। अतः सूत्रकारैरेव ब्रह्मगुणेष्वादरस्य प्रतिपादनेऽपि गुणविद्वेषिणां शाङ्कराणां ब्रह्मणि गुणनिरासः केनहेतुनेति न विद्मः॥

'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्'। 'अक्षरधियांत्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्'। 'प्रदानवदेव तदुक्तम्'। 'लिङ्गभूयस्त्वात्तद्धिबलीयस्तदपि'। 'नानाशब्दादिभेदात्' इत्यादिष्वनेकेषुसूत्रेषु पूर्वकाण्डसिद्धार्थस्य-प्रमाणतया स्वीकारात् न पूर्वकाण्डस्य अप्रमाण्य मिति तदप्रामाण्य-वादिनां पक्षः निरस्तो भवति। अतः सत्यद्वयस्वीकारेण व्यावस्था-प्रदर्शकानां अभिमानभञ्जनार्थमेव सूत्रकाराणां ब्रह्मविन्मोरापक्रमः। एतेन 'उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचोमहान्तः' इति संक्षेपशारीरकमपि पर्यालोचितम्। एतद्विस्तरस्तु अस्माद्गुरुचरणानुगृहीतगूढार्थसंग्रहभावप्रकाशादिषु द्रष्टव्यः। अतः निर्गुणाद्वैत मतस्य वेदबाह्यत्वस्थापनायैव सूत्रकाराणां विचारप्रतिज्ञानमित्यास्तामयं विस्तरः॥

यत्तु 'साक्षाद्ब्रह्मणि शब्दवृत्त्यनुपपत्तावपि परंपरया 'नेति-नेति' निषेधमुखेन लक्षणया प्रकारान्तरेण शब्दवृत्त्युपपत्तिः व्याख्याता' इति भूषणीवचनं तदपि लक्षणायां बीजभावात् लक्षणायाः दुष्टत्वादेव च निरस्तम्। लक्षणा माभूत् इत्येवमर्थं किल पूर्वतन्त्रे निषादस्थपतिपदे त्यक्त्वा लक्षणापादकं तत्पुरुषं, कर्मधारयः आश्रितः। 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इत्यत्र रथघोष शब्दे समहारद्वन्द्वानाश्रयणं लक्षणाद्यापत्तिभयादेव। एवं 'प्रयाजशेषेण हवींषि अभिघारयति' इत्यत्र नव्यरीत्या कल्पितवाक्येन प्रतिपत्तिविधिस्वीकरणं च श्रूयमाणवाक्ये लक्षणापरिहारार्थमेव।

अतः लक्षणाश्रयणं तावज्जघन्यमेव । शङ्कराचार्योअपि 'अयमेवास्मिन् पक्षे दोषः, यल्लक्षणा आश्रयणीया स्यात्' इति (१-४-३-११) लक्षणाश्रयणपक्षस्य दुष्टतां प्रतिपादयन्ति । तस्य च नात्र सर्पमारः। किञ्च 'शब्दवृत्त्यनुपपत्तावपि लक्षणया' इति वदन् भूषणीकारः स्ववाग्व्याहतिमपि न जानाति, लक्षणाया अपि वृत्तिरूपत्वात् । 'नेतिनेति' इति श्रुत्यर्थस्तु उत्तरत्र प्रकृतैतावत्त्वं हि' इति सूत्रार्थं विचारावसरे अत्रैव व्यक्तीभविष्यति ॥

आद्यसूत्रे ब्रह्मविचारं प्रतिज्ञाय द्वितीयेन सूत्रेण विचारविषयत्वेन प्रस्तुतस्य ब्रह्मणः प्रपञ्चं प्रति अभिन्ननिमित्तोपादानत्वरूपं लक्षणमाह भगवान् सूत्रकारः इति अद्वैतिविशिष्टाद्वैतिनोरुभयोस्संप्रतिपन्नम् । तत्र अद्वैतिनां मते कारणत्वस्य ब्रह्मण्यनङ्गीकारात् सूत्रविरोधः, विशिष्टाद्वैतिनां तु ब्रह्मणि तदङ्गीकारात् सूत्रास्वरस्यं चेति परं विशेषः । पूर्वस्मिन् सूत्रे प्रस्तुतं ब्रह्म सविशेषमेव। (चिदचिद्विशिष्टमेव) द्वितीयसूत्रे च तस्यैव च जगत्कारणत्वरूपलक्षण प्रदर्शनम् ॥

तच्च कारणं ब्रह्म चिदचिद्विशिष्टमिमिति 'किं कारणं ब्रह्मे' ति प्रश्ने 'ते ध्यानयोगानुगता अपश्यत् देवात्मशक्तिं स्वगुणैर्निगूढाम्' इत्युपक्रम्य 'त्रिविधं ब्रह्ममेतत्' । इत्युपसंहारादवगम्यते । अत्र प्रेरणोक्त्या निमित्तत्वं सामानाधिकरण्येन च प्रेर्यमोभोक्तृभोग्ययोः तच्छरीरत्वं तेन च तद्विशिष्टस्य ब्रह्मणः औचित्यं तस्योपादानता च सूचिता । एवं 'कर्तारमीशं पुरुषं ब्रह्मयोनिं' इति श्रुतौ कर्तृयोनि पदाभ्यां निमित्तत्वं उपादानत्वं चोच्यत । अत एव च सूत्रकारोऽपि 'साक्षाच्चोभयाम्नानात्' । 'योनिश्च हि गीयते' । इत्याह । तत्र विशिष्टस्य ब्रह्मणः कारणत्वं, कार्यत्वमपि विशिष्टस्यैव ब्रह्मणः । तत्र

ब्रह्मणः सूक्ष्मचिदचिद्विशिष्टता कारणदशायां, कार्यदशायां तु स्थूलचिदचिद्विशिष्टता । लोकेऽपि सूक्ष्मावस्थाविशिष्टं कारणं, स्थूलावस्थायुक्तं च कार्यमिति हि प्रसिद्धिः ॥

अत एव च शङ्कराचार्याः 'सदेव सोम्येदमग्र आसीत्' इति छान्दोग्योपनिषद्भाष्ये 'इदं, जगत्, नामरूपक्रियावद्विकृतं उपलभ्यते यत् तत्सदेवासीदिति आसीच्छब्देन संबध्यते । कदा सदेवेदमासीदित्युच्यते, अग्रे । जगदुत्पत्तेः प्राक् । किं नेदानीं इदं सत्, येन अग्रे आसीदिति विशेष्यते । न । कथं तर्हि विशेषणं ? इदानीमपीदं सदेव, किं तु नामरूपविशेषणवत् इदंशब्दबुद्धिविषयं चेतीदं च भवति । प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्यते' । इत्यारभ्य 'यथेदमुच्यते लोके, पूर्वाह्णे घटादिसिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा प्रत्यागतो अपराह्णे तत्रैव घटशरावाद्यनेकभेदभिन्नं कार्यमुपलभ्य मृदेवेदं घटशरावादि केवलं पूर्वाह्णे आसीदिति । तथेहाप्युच्यते 'सदेवेदमग्र आसीदिति । एकमेवेति । स्वकार्यपतितं अन्यन्नास्तीत्युच्यते इति । अद्वितीयमिति । मृद्व्यतिरेकेण मृदः यथा अन्यत् घटाद्याकारेण परिणमयितृकुलालादि निमित्तकारणं दृष्टं, तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते अद्वितीयमिति । नास्य द्वितीयं वस्त्वन्तरं विद्यत इति अद्वितीयम्' । (शां. उ भा. छा. ६-२-१) इत्यादिना सृष्टेः पूर्वं प्रपञ्चस्य नामरूपविभागानर्हसूक्ष्मावस्थाविशिष्टतया सच्छब्दवाच्य ब्रह्मणा साकं सद्भावं निरूप्य मृद्घटादिदृष्टान्तेन स्थूलावस्थायोग एव एव कार्यता इति च निरूपयन्ति । अतश्च चिदचिद्विशिष्टब्रह्मैव कारणमिति पक्षः भूषणीकारादिसंमतः भगवत्पादैरेव खण्डितः

इति विदुषां वेद्यम् । अधिकं तु ब्रह्मोपादानत्वान्यथानुपपत्तिवाद-परीक्षासमालोचने द्रष्टव्यम् ॥

एवं च 'यतोवा इमानि भूतानि जायन्ते' इत्यत्रापि स्थूल चिदचिद्विशिष्टं कार्यमित्येव निश्चीयते । अयमर्थः श्रुतितः सिद्धोऽपि विचारमन्तरा न ज्ञायते इति भगवान् सूत्रकारः, 'जन्माद्यस्य यतः' इति सूत्रयामास ॥

एतेन 'सूक्ष्मचिदचिद्विशिष्टं ब्रह्म सृष्टिवाक्यैः सृष्टेः पूर्वं विशिष्टरूपेणैव वर्तते इति वेदान्तैः यदि ज्ञातं, तर्हि निष्प्रयोजनमिदं लक्षणं, ज्ञातत्वा' दिति शतभूषणी परास्ता ॥

सर्वत्रापि वेदान्तैः ज्ञातार्थस्यैव सूत्रकारैस्सूत्रनात् भूषणीकार दृष्ट्या सर्वेषां सूत्राणां वैयर्थ्यमेव स्यात् । अत एव च सूत्राणां सार्थक्यसंपादनार्थं श्रुत्यसिद्धं स्मृत्याद्युपबृंहणाननुगतं लोकानुभव विरुद्धं च निर्गुणं निर्विशेषं च वस्तु भूषणीकारतत्कूटस्थैः अङ्गीक्रियते इति भाति ॥

'ब्रह्ममात्रस्य प्रथमसूत्रे, भूतमात्रस्य द्वितीयसूत्रे कार्यस्य विवक्षायां तु' इति भूषणीवचनं तु श्रीभाष्यादिग्रन्थानुक्तोपालंभ इति नेदं अनुवादमप्यर्हति ॥

यत्तूक्तं भूषण्यां—अधीहि भगवो ब्रह्मे' ति चिदचिद्विशिष्ट रूपेण ब्रह्मस्वरूपमात्रप्रश्नः, उत्तरं च 'यतो वे' त्यादिना 'आनन्दो ब्रह्मेति व्यजानात्' इत्यन्तेन तटस्थलक्षणस्वरूपलक्षणाभ्यां शुद्धस्य ब्रह्मण एव न तु विशिष्टस्ये' ति । तदिदं ब्रह्मशब्देन सर्वत्रापि विशिष्टस्यैव बोधात् निर्विशेषस्य बोधाभावाच्च निरस्तम् । अत एव च विष्णुपुराणे—

निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादि कर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥

इति चोद्यस्य—

शक्तयः सर्वभावानां अचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावगोचराः ॥ इति प्रतिवचनं शक्तिविशिष्टप्रतिपादनपरं संगच्छते । जगत्कारणत्वं तटस्थलक्षणं, आनन्दादिकं स्वरूपलक्षणं इति भेदो न युक्त इति पूर्वमेवावेदितम् । किंच जगत्कारणत्वादेः उपलक्षणत्वाङ्गीकारेऽपि उपलक्षणस्य प्रकारतया भानं नास्तीति दार्शनिकेन केनाप्यनङ्गीकारात्, जगत्कारणत्वादेरपि प्रकारत्वमपरिहार्यमिति ब्रह्म सप्रकारमेव भवेत् । कश्चन्द्रः ? इति प्रश्ने, प्रकृष्टप्रकाशश्चन्द्रः, इति तदुत्तरे च धर्माणां भानं अवश्यमङ्गीकार्यमेव, किं शब्दस्य जिज्ञासाविषयार्थकस्य स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यधर्मप्रकारकजिज्ञासाविषयादावेव शक्तेस्सर्वै संप्रतिपन्नत्वात् । शक्तिवादादौ चायमर्थः स्पष्टः । अतः प्रश्ने प्रतिवचने च धर्माविषयकधर्मिविषयकबोधः न कस्यचित् संमतः । न च तात्पर्यबलात् धर्माविषयकधर्मिविषयकबोधः स्वीक्रियत इति वाच्यम् । प्रष्टुः प्रतिवक्तुर्वा तात्पर्यं हि बोधद्वयस्य प्रसिद्धौ अन्यतरसन्देहे संशयविषयैकतरकोटिनिर्णायकं भवति । नत्वप्रसिद्धबोधजनकम् । अतः भृगुवल्यामपि जगत्कारणत्वादिविशेषविशिष्टमेव ब्रह्म प्रतिपिपादयिषितमिति सिद्धम् ॥

ननु ब्रह्मणः जगदुपादानत्वमित्येतदनुपपन्नम्, एवं ब्रह्मणः कार्यत्वमित्येतच्च । तथा हि, उत्पत्तिर्नाम अवस्थान्तरापत्तिः, तत्राचितः स्वरूपान्यथाभावस्य, चितः स्वभावान्यथाभावस्य च सत्वायुक्ता कार्यता । परमात्मनस्तु तदुभयरहितस्य न कार्यता

युक्ता। एवंच ब्रह्मण उपादानता नाम चिदचित्संबन्धादौपचारिक्येव, न तु मुख्या इति चेत्, नैष दोषः। यथा हि सत्येव अचिद्वस्तुनि मृदादौ प्रागसती पृथुबुध्नोदराद्यवस्था आविर्भवति। यथा वा चिद्वस्तुनि सत्येव ज्ञाने प्रागसती प्रसरणरूपा अवस्था जायते, तथा तदुभयशरीरके परमात्मन्यपि प्रागसती स्थूलचिदचिदन्तर्यामिता तन्नियमनादिरूपा वस्था प्रादुर्भवतीति युक्तैव कार्यता। व्यक्तं चेदं आकरे 'स्थूलावस्थनामरूपविभागाविभक्तस्य चिदचिद्वस्तुनः आत्मतया अवस्थानात् कार्यत्वमुपपन्नम्। अवस्थान्तरापत्तिरेव हि कार्यत्वम्' इति। 'नात्माश्रुते' रिति सूत्रव्याख्यानावसरेऽपि विशदमेतदुपपादितम्। यथा 'अतस्सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म स्वस्माद्विभक्तव्यपदेशानर्हमिति कदाचित् सूक्ष्मदशापन्नचिदचिच्छरीरं तिष्ठति, तत्कारणावस्थं ब्रह्म। कदाचित् विभक्तनामरूपस्थूलावस्थचिदचिद्वस्तुशरीरं, तत्कार्यावस्थम्। तत्र कारणावस्थस्य कार्यावस्थापत्तौ, अचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति, चिदंशस्य कर्मविशेषफलभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति। तदुभयप्रकारविशिष्टे नियन्त्रंशे च तदवस्थतदुभयविशिष्टतारूपविकारो भवति, कारणावस्थाया अवस्थान्तरापत्तिरूपविकारः प्रकारद्वये प्रकारिणि च समानः' इति। वेदार्थसंग्रहेऽपि अयमर्थः सम्यङ्निरूपितः॥

ननु ब्रह्मण विकारानङ्गीकारे उपादानत्वासंभवः, अङ्गीकारे च ब्रह्मनिर्विकारबोधकश्रुतेर्बाधः इति चेत्—मैवं, एष हि विधिनिषेधशास्त्राणां निर्णयः। यद्यप्यभावप्रतिषेधत्ववैधुर्याय निषेधः प्रापकप्रमाणसापेक्षः, तथाऽपि प्रापकप्रमाणं लौकिकादन्यन्नास्तीति चेत्

तदा सर्वथैव निषेधति, यथा 'न कलञ्जं भक्षये' दित्यादौ। यदा च प्रापकप्रमाणं लौकिकं वैदिकं चेत्युभयमस्ति, तदा लौकिकमेवापेक्षते। यथा 'न हिंस्या' दित्यादौ। यत्र त्वलौकिकमेव प्रापकं, तद्यदि सामान्यविषयं तर्हि विहितविशेषव्यतिरिक्तविषयस्संपद्यते यथा 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति निषेधः 'यो वा अनूचानः स्यात् तस्य प्रवृञ्ज्यात्' इत्येतदतिरिक्तविषय इति। एवमत्रापि उपादानत्वस्य ब्रह्मनिष्ठस्य श्रुत्या विहितत्वात् तदतिरिक्ताः एव विकाराः ब्रह्मणि निषिध्यन्त इति न विरोधः॥

किंच ब्रह्मणः उपादानत्वं परिणामनिबन्धनमेवेति 'परिणामात्' इति सूत्रे व्यक्तम्। तन्मूलं च मृत्तत्कार्यदृष्टान्तेन ब्रह्मणः उपादानत्वप्रतिपादकं छान्दोग्यवाक्यम्। तत्र च 'यथा सौम्यैकेन' इत्यादिना दृष्टान्तमुखेन एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्। तच्च एकपदार्थस्य सर्वपदार्थस्य च अवस्थाभेदेऽपि धर्म्यैक्येनैवोपपादनीयम्। न त्वन्यथा। अयमर्थः 'मृत्पिण्डेन' 'मृण्मयम्' इत्युभयत्र मृच्छब्दप्रयोगेण सूच्यते। अतः परिणाम्युपादानत्वमेव युक्तम्। शङ्कराचार्या अपि 'परिणामात्' इति सूत्रे 'इतश्च प्रकृतिः ब्रह्म, यत्कारणम्। ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येन आम्नायते 'सच्च त्यच्चाभवत्, निरुक्तं चानिरुक्तं च' इति।' इत्याहुः। अतश्च परिणामनिबन्धनाभेद एव 'सच्च त्यच्चाभवत्' इत्यत्र विवक्षितः इति शङ्कराचार्यसंमतम्। अत्र 'सच्च त्यच्चाभवत्' इति श्रुतेः पूर्वं हि 'तत्सृष्ट्वा' 'तदेवानुप्राविशत्। तदनुप्रविश्य।' इति श्रुतिक्रमः, अतश्चानुप्रवेश एवाभेदहेतुरिति स्फुटं प्रतीयते। अन्तः प्रवेशश्च 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' इति श्रुत्यन्तरानुरोधेन अन्तर्यामित्वपर्यवासितः इति च निश्चीयते। एवं

चान्तर्यामित्वरूपपरिणामनिबन्धन एव जगदभेदव्यपदेशः इति श्रुति-पर्यालोचनावतां स्पष्टम् ।

मृदो घटशरावात्मना परिणाम इव सच्छब्दवाच्यस्य ब्रह्मणोऽपि कार्यान्तर्यामित्वरूपपरिणाम इति मृण्मयमृदोरिव उपादान-कार्यान्तर्यामिब्रह्मणोः अभेदेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञान-मुपपन्नम् । अतश्च स्थूलावस्थचिदचिदन्तरवस्थानरूपावस्थान्तरापत्तेः प्रागसत्याः तद्गतोत्पत्तिरूपतया कार्यत्वं संभवतीति नानुपपत्तिः ।

लोकेऽपि हि द्रव्यमात्रस्य स्वरूपेण नित्यत्वं अवस्थान्तरापत्त्या च कार्यत्वमिति किल सर्वसंमतम् । आहुश्च महर्षयः —

तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥

इति । अत्र च स्वरूपतः जगतः नित्यत्वेऽपि आविर्भावतिरोभावाद्य-वस्थाविशिष्टतया जन्मनाशादिविकल्पवत्त्वं (कार्यत्वं) प्रतिपाद्यते । मध्यस्थाश्चाहुः 'द्रव्यं हि नित्यमाकृतिरनित्ये' ति । 'मही घटत्वं घटतः कपालिका कापालिकाचूर्णरजस्ततोऽणुः' इत्यप्यमुमर्थमुपो-द्वलयति । एवं च वस्तुमात्रस्य नित्यत्वे सत्कार्यवादिवेदान्तिसंमते कार्यत्वस्य च अवस्थान्तरापत्तिरूपत्वे अवधृते स्वरूपान्यथात्वज्ञाना-न्यथात्वयोः चिदचिद्गतयोः अवस्थान्तरयोः 'सत्यं ज्ञानं अनन्तं ब्रह्मे' ति ब्रह्मलक्षणान्तर्गतसत्यज्ञानपदाभ्यां नामान्तरभजनार्हस्वरू-पान्यथाभावरूपासत्यत्व, ज्ञानसंकोचवारकाभ्यां निर्विकारत्वसर्वज्ञ-त्वश्रुतिसहिताभ्यां ब्रह्मणि निवारणात् चिदचिदन्तर्यामितायाः सार्वदिक्या अपि स्थूलसूक्ष्मावस्थतदुभयनिरूपितत्वविशिष्टवेषेण असार्वदिक्याः युक्तैवोत्पत्तिविनाशरूपतेति न कार्यत्वकारणत्व-

दौर्भिक्ष्यम् । अतस्सर्वानुगतमवस्थान्तरापत्तिरूपं कार्यत्वं ब्रह्मण्यपि दुर्वारम् ।

एतेन सर्वथा श्रीभाष्यादिपरिचयविधुरस्य आग्रहदूषितचित्तस्य, 'मूढः परप्रत्ययनेयबुद्धिः' इति न्यायं स्वस्मिन् पूर्णतया समन्वेतुं रामानुजभाष्यभञ्जनीकृदुमामहेश्वरशास्त्रिपादानुचरस्य शतभूषणीकारस्य रामानुजभाष्यभञ्ज्न्युक्तदुर्वादलुण्टनपूर्वकं योऽयं प्रलापः 'अभिन्ननिमित्तोपादानत्वं हि विशिष्टे ब्रह्मणि विकल्पासहम् । न हि श्रीभाष्यमते विशेष्यांशः साक्षादुपादानं, परंपरया उपादानत्वं तु उपादानकथामात्रं न तूपादानत्वमतिप्रसङ्गात् । अचिदंशः प्रकृतिरेव हि साक्षादुपादानं तन्मते । यद्युपचारादुपादानत्वं चेतनस्य तर्हि प्रकृतेरेवाचेतनायाः अपि समुपचारान्निमित्तत्वं इति कथं प्रधानमल्लस्य सांख्यस्य निबर्हणं' इत्यारभ्य पुनः पुनः चर्वितचर्वणतया तदेव भ्रान्तदूषणं भ्रामयित्वा 'समन्वयाध्यायोपान्त्याधिकरणं 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रमुखं, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं, परयुरसामञ्जस्यात् इति सूत्रमुखं पत्युपत्यधिकरणं च योगिनामिव श्रीभाष्यस्यापि कृत्येव कथं न विघाताय' इत्यन्तेन ग्रन्थेन कृतः सोऽप्युन्मादैकमूलकः गलहस्तितो भवति ।

ब्रह्मण्यपि अवस्थावत्वस्याङ्गीकारेण 'भाव्यवस्थावतः पदार्थस्य पूर्वावस्थायोगित्वमुपादानत्वं' इत्युपादानत्वलक्षणस्याव्याहतत्वात् । स्वरूपविकार एवोपादानत्वमिति तु न, प्रमाणाभावात् । श्रुतब्रह्मोपादानतानिर्वाहकतया ब्रह्मशरीरत्वेन प्रमितयोः चिदचितोः अवस्थान्तरभावः दृष्टान्तानुसाराद् कल्प्यते । न च तावन्मातेण यागस्यापूर्वेणेव ब्रह्मणः कारणत्वमौपचारिकं इति कलयितुं युक्तम् ।

न च अपूर्वस्य यागजन्यत्वात् द्वारत्वमित्येतद्युक्तं, चिदचितोस्तु स्वरूपतः नित्यत्वेन ब्रह्मजन्ययोः कथं तद्वारत्वं, कथंतरां च तद्वारकं कारणत्वं अनौपचारिकं स्यादिति वाच्यम् । अजन्यत्वेऽपि क्रयकरणीभूतारुण्यादेरेकहायनीद्रव्यवदविरोधात् ।

अथ तत्रारुण्यस्यामूर्तस्य साक्षात् क्रयसाधनत्वायोगात् तृतीयावगतं क्रयसाधनत्वं तदाश्रयद्रव्येणैव निर्वाह्यमिति आरुण्यगतकरणतासंपादकत्वात् युक्तं एकहायनीद्रव्यस्य द्वारत्वमिति चेत् सत्यं, तर्हि जन्यस्यैव द्वारत्वं इति प्रतिज्ञा त्यज्यताम् । अत्रापि ब्रह्मणः 'तस्माद्वा एतस्मात्', 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिषु पञ्चम्या अवगतं उपादानत्वं निर्विकारस्य साक्षान्न संभवतीति तन्निर्वाहकयोः चिदचिदोरप्यस्तु द्वारत्वम् । एवं च 'व्रीहिभिर्यजेत, काष्ठैः पचति' इत्यादौ जन्यपुरोडाशज्वालादेरिव 'अरुणया – क्रीणाति', 'पशुना यजेत' इत्यादौ अजन्यस्यापि द्वारत्वदर्शनात् जन्याजन्यसाधारणं तत्तत्क्रियानिर्वर्तकत्वरूपं तद्वारत्वं वर्णनीयमिति चिदचिदोरपि ब्रह्मगतकारणतानिर्वाहकयोः तद्वारत्वमविरुद्धम् । अतश्च ब्रह्मणि तत्तत्कार्यान्तर्यामित्वरूपः परिणामः वर्तत इति परिणामनिबन्धनं कार्यत्वं ब्रह्मणोऽप्यक्षतम् ।

किंच 'एकमेवाद्वितीयं ब्रह्मे' त्यत्र कारणावस्थायां एकत्वं श्रूयते । श्रुत्यन्तरे च 'बहु स्यां प्रजायेये' ति बहुत्वं च श्रूयते । उभयमपि कथं घटेनेति तु विचारे . . छान्दोग्ये 'एकमेवाद्वितीयं' इत्यनन्तरं 'नामरूपे व्याकरवाणि' इत्युक्त्या बहुत्वं नामरूपनिबन्धनमेवेति पर्यवस्यति । तत्प्रतिकोटिभूतं चैकत्वं नामरूपविभागराहित्यदशायां (कारणत्वावस्थायां) ब्रह्मणि । एतदुपपादनाय प्रवृत्ते 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्य' मिति

दृष्टान्तवाक्येऽपि विकारशब्देन उत्तरत्र वक्ष्यमाणं रूपमेव विवक्षितमिति वक्तव्यम् । दृष्टान्तदार्ष्टान्तिकयोरैकरूप्यानुरोधात् । अत्र हि 'विकारो नामधेयं इति दृष्टान्तबोधनदशायां नामधेयशब्दसमभिव्याहारेण विकारशब्दः प्रयुज्यते । दार्ष्टान्तिके तु 'नामरूपे व्याकरवाणि' इत्यत्र नामसमभिव्याहारेण रूपशब्दः प्रयुक्तः । दार्ष्टान्तिकवाक्ये च स्थानप्रमाणेन रूपशब्दस्य विकारबोधकत्वमेव वक्तव्यं, एवं रूपशब्दनिर्देशे किं बीजं इति विवेचने विकारः संकोचविकासात्मकः परिणामः । स चानित्यतापादकः । स च मृदादिदृष्टान्ते प्रसिद्ध इति दृष्टान्ते विकारशब्दः प्रयुक्तः । रूपं तु अवस्थापरिणामः इति रूपशब्देन संकोचविकासात्मकपरिणामतदन्यपरिणामयोरुभयोर्विवक्षणेन श्रुतिसिद्धवस्तुस्वरूपानुरोधेन कार्यप्रपञ्चे संकोचविकासात्मकः परिणामः, ब्रह्मणि च तत्तत्कार्यान्तर्यामित्वरूपपरिणाम इति तत्तत्कार्यान्तर्यामित्वरूपपरिणामस्य ब्रह्मण्यङ्गीकारेण ब्रह्मणि कार्यतायाः नित्यतायाश्च न क्षतिः । एवंचोपादानत्वं ब्रह्मण्यक्षतम् । एवं कार्यानुगुणसंकल्पाश्रयत्वेन ब्रह्मणः निमित्तत्वं चेति । ब्रह्माधीनप्रकृतेरेव प्रपञ्चात्मना परिणामाङ्गीकारात् सांख्यैश्चैवमनङ्गीकारात् सांख्यतौल्यतापादानं सिद्धान्ते न घटते इति प्रधानमल्लनिबर्हणं सिद्धान्त एव युज्यते । 'तदधीनत्वादर्थवत्' इत्यादिसूत्रेषु चायमर्थः स्पष्टः ।

केवलनिमित्तकारणत्वस्य ब्रह्मण्यनङ्गीकारादेव योगमततौल्यतापादनं च मौढ्यादेव । प्रतिज्ञादृष्टान्तानुरोधेन प्रकृतित्वं च निरूप्यमाणं प्रपञ्चसत्यतावादिनां सिद्धान्तिनमेव घटते; न तु मिथ्यावादिनाम् । व्यक्तं चेदमाकरे —

'अपि च येनाश्रुतं श्रुतमित्यादिना ब्रह्मव्यतिरिक्तस्य सर्वस्य

मिथ्यात्वं प्रतिज्ञातं चेत् 'यथा सोम्यैकेन मृत्पिण्डेने' त्यादि दृष्टान्तः साध्यविकलः स्यात् । रज्जुसर्पादिवत् मृत्तिकाविकारस्य घटशरावादेः असत्यत्वं श्वेतकेतोः शुश्रूषोः प्रमाणान्तरेण युक्त्या चासिद्धमिति । एतदपि सिसाधयिषितमिति चेत्, 'यथे' ति दृष्टान्ततयोपादानं न घटते ।' इति । (वेदार्थसंग्रहे) अतश्च सर्वदृष्टान्तमिथ्यात्ववादिनां शाङ्कराणामेव, प्रकृत्यधिकरणं कृत्यैव विघाताय। एवं एकविज्ञानेन सर्वविज्ञानं च सर्वस्य ज्ञातव्यस्याभावादेव न संभवतीति व्यक्तमिदं विदुषाम् । 'परिणामात्' इति प्रकृत्यधिकरणघटकीभूतं सूत्रं शाङ्कराणां विवर्ताद्वैतिनां दुष्परिणामसूचकं विघातकमेव । ब्रह्मणि परिणामानङ्गीकारात् । विस्तृतं चैतत्पूर्वमेव । अतः सिद्धान्तसंमतः ब्रह्मोपादानतापक्षः श्रुतिसूत्राद्यनुगुणः प्रामाणिकः अदूष्यश्चेति सिद्धम् ।

विवर्तोपादानत्वं तु ब्रह्मणि केन सूत्रेण सूचितं, काभिर्वा श्रुतिभिर्बोधितं इत्याक्षेपे मौनमेवोत्तरम् । मृत्तत्कार्यदृष्टान्तोपादानवत् रज्जुसर्पादिदृष्टान्तः वेदे कुत्राप्यनुपन्यस्त इति विवर्तोपादानत्ववादः अवैदिक एव । अत एव 'क्षीरवद्धि' इत्यादिसूत्रखण्डैः भगवान् सूत्रकारोऽपि परिणामवादमेव सूचयामास स्वसंमतम् ।

एतेन 'ब्रह्मण एव विवर्तविध्या उपादानत्वम् । प्रपञ्चात्मना परिणामिमायाश्रयत्वेन निमित्तकारणत्वं चोभयं जन्मादिसूत्रनिर्धारित' मित्यारभ्य 'किं तु सर्वस्य ब्रह्ममीमांसाशास्त्रस्य स्वारस्यमद्वैत एव' इत्यन्ता शतभूषणी परास्ता ।

विवर्तवादस्य सूत्रेषु कुत्राप्यसूचनेन स्वकुबुद्धिमात्रपरिकल्पितत्वात् । श्रुतावपि विवर्तवादः यद्यभिमतः स्यात् तर्हि

शुक्तिरूप्यादिदृष्टान्ता एव श्रुतौ प्रदर्शिताः स्युः, नैते दृष्टान्ताः श्रुतौ कुत्राप्यभिहिताः । न च छान्दोग्ये अद्वैतोपक्रमस्यैव सद्भावात् तदनुरोधेन सर्वमिथ्यात्ववर्णनमेव दृष्टान्तेऽप्यभिमतमिति वाच्यम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया एव प्राथम्यात् । अत्र एकैकवस्तुनः सर्वस्य चाभेदः प्रतिपाद्यते । अभेदश्च परमते नैवोपपादितो भवति ।

ननु 'कार्यमात्रस्य, ब्रह्मणो भेदाभेदाभ्यामनिर्वचनीयस्य ब्रह्मस्वरूपाधिष्ठानज्ञानात् सर्वाज्ञाननिवृत्त्या ब्रह्माभिन्नतया तत्त्वतो ज्ञाततया च विज्ञातत्वमुच्यत इति ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञा उपपादिता' इति ब्रह्मानन्दसरस्वत्युक्तिदिशा सर्वविज्ञानप्रतिज्ञानं घटत एवेति चेन्न, ब्रह्मज्ञानेन सर्वाज्ञाननिवृत्तेः सद्विद्यायामुपक्रमे अनभिधानात् । विवर्तोपादानत्वमेव निरूपयितुं न शक्यते इति उत्तरत्र व्यक्तीभविष्यति ।

शास्त्रयोनित्वाधिकरणं च विवर्ताद्वैतिनां प्रतिकूलं इति च पूर्वमेवावेदितं शुद्धे शास्त्रगम्यत्वानंगीकारात् । अत्र 'वेदयोनित्वात्' अथवा 'उपनिषद्योनित्वादि' त्यादि क्रमं विहाय 'शास्त्रयोनित्वात्' इति शास्त्रपदघटिततया सूत्रकरणे किं बीजमिति विचारणीयं ? अत्र च शास्त्रपदेन 'अप्राप्ते शास्त्रमर्थवत्' इति जैमिनिसूत्रं प्रत्यभिज्ञाप्यते । अतश्च प्रमाणान्तरापरिज्ञातवस्तुबोधकशब्दजन्यज्ञान-विषयत्वात्, इत्यर्थः सिद्ध्यति । तच्च शास्त्रं जगत्कारणत्वस्य ब्रह्मणि प्रतिपादकं 'यतो वे' त्यादिकमेवेति जगत्कारणत्वादिकं ब्रह्मणि अनभ्युपगच्छतां विवर्ताद्वैतिनां मतमुन्मूलयितुमेव शास्त्रपदं इति सिध्यति । अतः इदमपि सूत्रं विवर्तवादस्याशास्त्रीयतापादक-मेव । विस्तरस्त्वन्यत्र ।

यदपि भूषणीकारः 'तत्तु समन्वयादि' ति सूत्रं हि उपास्यमपि ब्रह्म पुरुषार्थत्वात् सत्यमिति बोधयितुं इति श्रीभाष्यम्' इति विलिखति, तदिदं स्वाज्ञानप्रकाशनमेव। न हि श्रीभाष्ये समन्वयाधिकरणे उपास्यत्वात् ब्रह्म असत्यमिति पूर्वपक्षः प्राप्तः, येन तादृशासत्यत्वप्रतिपादकपूर्वपक्षनिराकरणाय सिद्धान्तः ब्रह्मसत्यत्वविषयकः करणीयः स्यात्। किं तु पूर्वसूत्रोक्तं शास्त्रयोनित्वं ब्रह्मणो न संभवति कुतः प्रवृत्तिनिवृत्त्यन्वयविरहिणो ब्रह्मणः स्वरूपेण अपुरुषार्थत्वात् पुरुषार्थबोधकत्वेनैव च शास्त्रप्रामाण्यस्योपपादनीयत्वात् इति पूर्वपक्षे, ब्रह्मणः 'विज्ञानमानन्दं ब्रह्म', 'आनन्दो ब्रह्म' 'यदेष आकाश आनन्दो न स्यात्' इत्यादिश्रुतिवाक्यैः निरतिशयानन्दस्वरूपत्वेनावगमात्, तत्प्रतिपादकवाक्यानां 'स्वर्वेश्मनि निधिरस्ती' त्यादिवाक्यानामिव स्वतः पुरुषार्थभूतब्रह्मावगमकत्वात् प्रामाण्यमप्रकल्प्यमिति न पूर्वसूत्रोपात्तशास्त्रयोनित्वस्य क्षतिः इति च सिद्धान्तः। अतः भूषणीकारानुवादः अयथार्थानुवादः।

सूत्रार्थश्च भूषणीकारसंमतः अप्रसिद्धः अयुक्तश्च। तथा हि। 'समन्वयपदं हि उपक्रमाद्यवगततात्पर्यविषयत्वपरम्' इति भूषणी वदति। तदिदमयुक्तं, अन्वयपदस्य तात्पर्यविषयत्वरूपार्थः शक्त्या, लक्षणया वा? नाद्यः, संबन्धरूपार्थ एव अन्वयशब्दस्य शक्तत्वात्। नापि द्वितीयः, बीजाभावात् शक्यार्थस्यैव ग्रहणसंभवाच्च। अत एव भगवता श्रीभाष्यकृता 'ब्रह्मणः अभिधेयतया अन्वयात्, तत् शास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः' इति निराबाधः सूत्रार्थः श्रीभाष्ये प्रदर्शितः। एतदुक्तं भवति, जगत्कारणं ब्रह्म शास्त्रयोनि, समन्वयात्, 'आनन्दाद्ध्येव खल्विमानि' इत्यादि शास्त्रैः अन्वयात्। (आनन्दपदेन शक्त्या आनन्दत्वेन अन्वयात्) इति। शास्त्रस्य ब्रह्मणश्च

वेद्यवेदकभाव एव संबन्धः। तत्र वेद्यत्वं ब्रह्मणि। अन्वयः आनन्दत्वेन शक्त्या वेद्यत्वं। वेद्यत्वं च ज्ञानविषयत्वं। विषयता च आनन्दत्वावच्छिन्नत्वशक्तिप्रयोज्यत्वैतदुभयरूपेण। अयमाशयः। 'चोदनालक्षणोऽर्थो धर्मः' इत्यत्र धर्मस्य स्वयमपुरुषार्थत्वात् पुरुषार्थसाधनत्वेनैवोपस्थितिर्वाच्या। अतश्च साधनस्य धर्मस्य विधेयतासंभवेन तत्र (धर्मे) प्रवृत्तिनिवृत्तिद्वारकमेव फलम्। अत्र तु जगत्कारणब्रह्मणः स्वरूपतो धर्मतश्चानन्दरूपत्वेन ज्ञानविषयतादशायामेव फलत्वं संभवति। न तु विधिवाक्यापर्यालोचनानन्तरकालिक प्रवृत्तिनिवृत्तिद्वारकफलपर्यन्तापेक्षसेति। अतः पूर्वसूत्रप्रतिपन्नं शास्त्रयोनित्वं ब्रह्मणो निराबाधमिति शास्त्रारंभणसमर्थनपरत्वं चतुस्सूत्र्याः श्रीभाष्यकारदृष्ट्या अक्षतमेवेति सिध्यति।

मृषावादिनां पक्षे तु ब्रह्मणः वेद्यत्वानभ्युपगमेन आद्यसूत्रमनुपपन्नम्। निर्विषयस्य वस्तुनः लक्षणोक्त्ययोगेन लक्षणप्रतिपादकद्वितीयसूत्रमपि तेषामवलक्षणसंपादकमेव। तृतीयं च सूत्रं द्वेधा योजितं शाङ्करैः। आद्ययोजनायां ऋग्वेदादिकं प्रति ब्रह्मकारणं भवति, तेन च ब्रह्मणः सर्वज्ञत्वादिसिद्धिः इत्यर्थः। तथा चेदमनुमानं; ऋग्वेदादिशास्त्रं, स्वविषयादधिकविषयज्ञानवदुपादानकं, वाक्यत्वात्। इति। द्वितीययोजनायां तु बहुव्रीह्यङ्गीकारेण शास्त्रप्रमाणकत्वं साध्यते इत्यर्थः। इदं च योजनाद्वयमप्यनुपपन्नम्। अनुमाने हि किं अधिकविषयज्ञानवदुपादानकत्वं साध्यं, उत तद्वक्तृकत्वं, अथ तदुच्चरितत्वं? नाद्यः, दृष्टान्ते साध्यवैकल्यात्। न हि आकाशगुणस्य शब्दस्य कालिदासाद्युपादानकत्वं दृष्टचरम्। नापि द्वितीयः, वेदस्य पौरुषेयत्वप्रसंगात्। नापि तृतीयः, व्यभिचारात्, न हि वैदिकवाक्यं अन्यद्वा उच्चारयतां बालादीनां तद्विषयादधिकविषय-

ज्ञानमस्ति। किं च निर्विशेषब्रह्मणः तात्पर्यविषयत्वे च, कारणत्वाक्षिप्तसर्वज्ञत्वादिकं कुत्रोपयुज्येत, निर्विशेषत्वविरोधात्। ब्रह्मणः अनुभाव्यत्वानभ्युपगमादेव द्वितीययोजनाप्यनुपपन्ना। अत्र वक्तव्यं सर्वं पूर्वमेवाभिहितम्। अतः तृतीयमपि सूत्रं विवर्तवादस्याशास्त्रीयतामेवावेदयति इतीदमपि प्रतिकूलमेव।

उपक्रमादिषड्विधतात्पर्यलिङ्गानां साहाय्येन वेदान्तवाक्यानि निर्विशेषं ब्रह्म प्रतिपादयन्तीति तत्र इतरप्रमाणविरोधं तात्पर्यविषयत्वात् चतुर्थसूत्रं वारयतीति भूषणीकारः लिखति।

इदन्त्वयुक्तम्। उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि षड्विधतात्पर्यलिङ्गानि, बोधविषयस्य प्रामाणिकत्वेन तद्विषयकबोधस्य संप्रतिपन्नत्वे तत्र बोधद्वयसंशये अन्यतरबोधनिर्णायकानि भवन्ति इति पूर्वमीमांसकसंमतम्। अद्वैत्यभिमतनिरुपाधिकचितः कस्यापि प्रमाणस्याविषयतया तस्याः तात्पर्यलिङ्गैः श्रुत्यभिप्रेतत्वनिर्णयः न संभवतीति वेदस्य अज्ञाताबाधितार्थबोधकनिर्दोषप्रमाणत्वमेव न संभवति, तद्विषयस्याप्रामाणिकत्वात्।

अतएवाचार्यसार्वभौमाः श्रीयामुनमुनयः आत्मसिद्धौ एवमाहुः 'तदेवं व्योमारविन्दसदृश वपुषि यथोदितदृशि वेदान्ततात्पर्यवर्णनं वेदान्तयैव स्यात्' इति। अतः शशशृङ्गतुल्ये निर्विशेषे तात्पर्यविषयत्वप्रतिपादनपरं चतुर्थसूत्रं न भवतीति इदमपि समन्वयसूत्रं विवर्ताद्वैतस्य निरन्वयविनाशायैवेति चतुःसूत्री अद्वैतिनां प्रतिकूलैव। न केवलं चत्वारि सूत्राणि, किं तर्हि, निखिलान्यपि ब्रह्मसूत्राणि निखिलमपि उपनिषद्वाक्यजातं, सर्वाण्यपि प्रमाणानि लोकानुभवश्चेत्येतत्सर्वं विवर्ताद्वैतभञ्जकमेवेति उत्तरत्र व्यक्तीभविष्यति॥

यदपि भूषणीकारः अभिनिवेशवशीकृतचेताः शतदूषणी दूषणार्थं प्रवृत्तस्सन् 'यत्तु शतदूषणी पञ्चमाध्यायविषयत्वमेव निर्विशेषस्य स्यादिति वदति, तत्र यदीदं शास्त्रैक्यवादमाश्रित्य, तर्हि तत्र कर्मणां क्रमो निरूपितः, पञ्चमाध्याये संगतिविशेषवशात्' इत्यादिना, द्वितीये तु किमवशिष्यते वेदान्ततत्वं, वैदिकमपरं वा तत्वं, यदर्थं शास्त्रान्तरसमारंभःस्यात्' इत्यन्तेन निरूपयतिस्म, तदिदं भूषणीकारभ्रान्तेः दर्शनशक्तिविकलतायाश्च पर्याप्तमुदाहरणम् । तथा हि—आचार्यपादा हि शतदूषण्यां 'एवं शारीरोपक्रमसूत्राणां सगुणब्रह्मैदम्पर्ये समार्थिते त्रिपाद्यामपि अनेनैव न्यायेनार्थतत्वं निर्णेतव्यमधिगुणैरन्तवसाद्भिः, स्थालीपुलाकन्यायानुसारस्य न्याय्यत्वात्' इत्यारभ्य–शारीरकपञ्चमाध्याये निर्गुणमशरीरं अलक्षिमकं अपरिवारकं, अविभूतिकं चिन्मात्रमिति पारिभाषिकं ब्रह्म प्रतिपाद्यताम्, इत्यन्तेन श्रीसूक्तिजातेन 'शारीरकपञ्चमाध्यायविषयत्वं निर्विशेषस्य स्यात् इति स्पष्टं प्रतिपादयन्ति । स्थिते चैवं, शतभूषणीकारविकल्पः कथं घटते इति न जानीमः । यदि पञ्चमाध्यायप्रतिपाद्यत्वं स्यात् इति आचार्यश्रीसूक्तिर्भवेत्तर्हि भूषणीकारभ्रान्तेरवकाशः स्यादपि मनाक् । 'शारीरकपञ्चमध्याये' इति हि शतदूषणी । ऐकशास्त्र्यवादिनोऽपि न पूर्वतन्त्रस्य शारीरकशास्त्रत्वमभ्युपगच्छन्ति इति भूषणीकारदूषणं तावत् सर्वथा शतदूषणीदूषणाय न पर्याप्तं, अपि तु भूषणीकारस्य भ्रान्ततामावेदयेत् इति विवेचकाः जानीयुः ॥

ईक्षत्यधिकरणं च प्रधानमल्लसांख्यमतनिरासार्थमिति अद्वैति विशिष्टाद्वैतिनोः संप्रतिपन्नम् । तत्र भगवान् सूत्रकारः पूर्वं चतुस्सूत्र्या वेदान्तवेद्यतया अवगतं ब्रह्म प्रधानविलक्षणं इति साधयितुं 'ईक्षतेर्नाशब्दं' मिति सूत्रयामास । तत्र चेक्षणगुणयो-

येनैव अशब्दप्रधानव्यावृत्तिः सूत्रकारेण सूत्रिता। निर्गुणाद्वैतिनां मते ईक्षणस्यापारमार्थिकत्वेन सांख्याभिमतं प्रधानमेव ब्रह्म स्यात्। शुक्तित्वापारमार्थ्यं हि रजतस्यैव यथा पारमार्थ्यं तद्वत्। अतः सांख्यसमयनिराकरणं तावदद्वैतिनां न घटते इति ईक्षत्यधिकरणमपि विवर्ताद्वैतिनां प्रतिकूलमेव। व्यक्तंचेदमाकरे 'अत एव निर्विशेषचिन्मात्रब्रह्मवादेऽपि सूत्रकारेण आभिः श्रुतिभिः निरस्तो वेदितव्यः। पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेतिस्थापनात्। निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकं, वेदान्तवेद्यं ब्रह्मजिज्ञास्यतया प्रतिज्ञतं, तच्च चेतनमिति 'ईक्षतेर्नाशब्द' मित्यादिभिस्सूत्रैः प्रतिपाद्यते। चेतनत्वं नामचैतन्यगुणयोगः। अतः ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव। किंच निर्विशेषप्रकाशमात्र ब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम्। प्रकाशो हि स्वस्य परस्य व्यवहारयोग्यतामापादयन् वस्तुविशेषः। निर्विशेषस्य वस्तुनः तदुभयरूपत्वाभावात् घटादिवदचित्त्वमेव। तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत्, तन्न, तत्क्षमत्वं हि तत्सामर्थ्यमेव। सामर्थ्यगुणयोगे निर्विशेषवादः परित्यक्तस्यात्। अथ श्रुतिप्रमाणबलात् अयमेको विशेषः अभ्युपगम्यते इति चेत्, एवं ततएव सर्वज्ञता, सर्वशक्तित्वं, सर्वेश्वरेश्वरत्वं, सर्वकल्याणगुणाकरत्वं, सकलहेयप्रत्यनीकतेत्यादयः सर्वे अभ्युपगन्तव्याः। शक्तिमत्वं च कार्यविशेषानुगुणत्वं, तच्च कार्यविशेषैकनिरूपणीयं, कार्यविशेषस्याप्रामाणिकत्वे तदेकनिरूपणीयं शक्तिमत्वमपि निष्प्रमाणकमेवस्यात्। किंच निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणं, प्रत्यक्षानुमानागमानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तेः।' इति।

ब्रह्मस्वरूपातिरिक्तविशेषानभ्युपगमात् स्वरूपस्य च पूर्वं चतुर्भिः सूत्रैः प्रतिपादितत्वात् ईक्षतेरित्यासूत्रस्यैयर्थ्यमपरिहार्यमेव।

किंच ब्रह्मणि वस्तुतः उपादानत्वस्यास्वीकारात् विवर्तोपादानत्वस्य च मुख्योपादानत्वाभावात्, ब्रह्मोपादानत्वनिरूपणमुखेन सांख्यसंमतकेवलप्रकृत्युपादानत्वखण्डनपरमिदमधिकरणं, इतराणि च सांख्यसमर्थनिराकरणपराणि सर्वाण्यधिकरणानि अद्वैतिनां प्रतिकूल्यान्येव। सिद्धान्ते तु ब्रह्मणोऽपि मुख्योपादानत्वस्वीकारात् न संकटं किञ्चित्।

एतेन प्रकृत्यधिकरणे 'परिणामात्' इति सूत्रार्थविवरणावसरे ब्रह्मविद्याभरणकारैर्या युक्तयः प्रदर्शितास्ता एव याचित्वा भूषणीकारेण यदुक्तं– 'विशिष्टाद्वैतमते तु स्वतन्त्रः केवलमधिष्ठाता सन्नपि स प्रकृत्यपृथक्सिद्धः स्वयं निमित्तकारणमपि प्रकृत्यपृथक्सिद्धिवशात् उपादानमिव च भवतीति। .. सत्येवं किमिति सांख्यमतनिरासार्थः प्रयासः श्रीभाष्यानुयायिनां, यदि पारिभाषिकौपचारिकाभिन्ननिमित्तोपादानत्वनिर्वाहार्थं तर्हि वृथा प्रयासः। ततश्च ईक्षत्यधिकरणं प्रधानपरिणामिकारणतानिरासपरतया व्याचक्षाणाः श्रीभाष्यानुयायिनः सूत्राशयपरिपन्थिनः' इत्यादि।

तदिदं स्वभ्रमाविष्करणमेव। 'भाव्यवस्थावतः पदार्थस्य पूर्वावस्थायोगित्वमुपादानत्वम्' इति शास्त्रज्ञाङ्गीकृतस्य उपादानत्वस्य ब्रह्मण्यपि भाविकार्यदशायां स्थूलचिदचिदन्तर्यामित्वावस्थाविशिष्टे पूर्वं (कारणदशायां) सूक्ष्मचिदचिदन्तर्यामित्वावस्थाविशिष्टत्वस्याक्षतत्वेन पुष्कलत्वात्। न च स्वरूपविकारात्मकपरिणाम एव दृष्टचरः, न अवस्थात्मकः इति वाच्यम्। मानाभावात्, भामत्यादिपरग्रन्थेष्वपि अवस्थायाः अपि परिणामस्योपपादितत्वात्। अतः ब्रह्मणोऽपि श्रीभाष्यकारसिद्धान्ते उपादानत्वं मुख्यमेवेति तत्र सांख्यतौल्यतापादानं तावत् मोहादेव। अधिकं त्वत्र वक्तव्यं पूर्वमेवावेदितं, उत्तरत्र

यथावसरं निरसिष्यते च । अद्वैतमते हि शुद्धस्येक्षणरूपतया 'तदैक्षते' त्युक्तं ईक्षितृत्वं नामरूपव्याकर्तृत्वं च ब्रह्मणि अनुपपन्नमेवेति 'ईक्षतेर्नाशब्द' मिति अद्वैतिनामसङ्गतमेव भवेत् । न च 'ऐक्षते' ति श्रुतिः नेक्षितृत्वपरा किंतु लक्षणया चिन्मात्रपरैवेति चेत् तर्हि लक्षणया सर्वमपि प्रधानपरमेवेति सांख्यमतमेव सद्विद्याप्रतिपादितमिति विवर्ताद्वैतस्य सद्विद्यायामप्रसक्तिरेव भवेत् । न हि तात्पर्याविषयेक्षणेन प्रधाननिराससिद्धिर्भवति । 'गौणश्चेन्नात्मशब्दात्' इति उत्तरसूत्रे आत्मशब्दवाच्यत्वं सूत्रकारैर्हेतुतया प्रतिपाद्यते । तच्च अद्वैतिनां असंगतं, तल्लक्ष्यत्वं तु प्रधानेप्यक्षतमिति नानेन हेतुना प्रधाननिरासः सिध्येत् । किञ्च किमात्मशब्दस्य चेतनार्थत्वात् अचेतने सांख्याभिमतप्रधाने तदनुपपत्तिर्विवक्षिता, उत आत्मशब्दस्य स्वरूपार्थत्वात् 'अनेन जीवेनात्मना' इत्यादि वाक्यैः चेतनतया प्रसिद्धजीवस्वरूपतायाः अचेतने अनुपपत्तिः स्यात् इति । न प्रथमः, चेतनत्वं यदि ज्ञातृत्वं, तर्हि ब्रह्मण्यपि शुद्धे तदभावः । विशिष्टे चेत् अचेतनस्यापि ज्ञातृत्वापत्तिः । यदि च चेतनत्वं ज्ञानत्वं, तर्हि तत् ईक्षितृत्वस्य गौणत्वे एव हेतुरिति, गौणत्वाभावे हेतु र्न भवेत् इति 'गौणश्चेन्ने' ति सूत्रखण्डविरोधः । नापि द्वितीयः, भवन्मते सार्वज्ञादिविरुद्धांशत्यागेन चिद्रूपेण जीवे ब्रह्मैक्याङ्गीकारवत् जडत्वादिविरुद्धाकारत्यागेन सद्रूपेण प्रधानैक्यस्यापिसंभवात् न प्रधानव्यावृत्तिः सिध्येत् । एवमेव सूत्रान्तरेष्वप्यनुपपत्तिः अस्मदीये सूत्रार्थमणिदर्पणे द्रष्टव्या ।

किञ्च अद्वैतमते माया परिणाम्युपादानं, ब्रह्म तु मायातत्परिणामाध्यासाधिष्ठानतया विवर्तोपादानमिति वर्ण्यते । तत्र विवर्तोपादानत्वं अध्यासाधिष्ठानत्वरूपं केन प्रमाणेन सिध्यतीति विचारे

ब्रह्मकारणत्वप्रतिपादकश्रुतिसन्दर्भे कुत्रापि शुक्तिरजतरज्जुसर्पादि-दृष्टान्तानां, अधिष्ठानज्ञानात् सर्वाज्ञाननिवृत्तेश्च अनिरूपणात् श्रुतिपथ-विदूरत्वमेव सिध्यति। प्रत्यक्षानुमानादि तु भेदग्राहि इति न तेषामपि विवर्तोपादानपरत्वमिति विवर्तोपादानत्ववर्णनं निष्प्रमाणकमेव। अत एव भगवान् सूत्रकारः 'परिणामात्' 'क्षीरवद्धि' इत्यादिना परिणाम-वादमेव श्रौतं सूत्रयामास। अतश्च ईक्षत्यधिकरणं ईक्षितृत्वादिना प्रधानव्यावर्तकं परेषां प्रतिकूलमेव।

आनन्दमयाधिकरणमपि विवर्ताद्वैतिनां प्रतिकूलमेव। तथा हि, गुणोपसंहारपादे 'आनन्दादयः प्रधानस्ये' त्यस्मिन्नधिकरणे आनन्दमयविद्यायां तदन्यासु विद्यासु च आनन्दादिगुणविशिष्टत्वेन ब्रह्म उपास्यमिति निर्णीतम्। तत्र च शाङ्करभाष्यं 'ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः, कस्मात् – सर्वत्र हि प्रधानं विशेष्यं ब्रह्म, तस्मात् सार्वत्रिकत्वं ब्रह्मधर्माणाम्।' इति। अतश्च निर्गुणं ब्रह्म आनन्दमयविद्यायां विवक्षितं इति शतभूषणीकारवचनं स्वभाष्यस्यैः वाज्ञानादनुपादेयम्। पूर्वाधिकरणे ईक्षणरूपगुणस्यैव प्रधानव्यावृत्तौ हेतुकरणात्। आनन्दमयानन्तराधिकरणे च 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र सगुणब्रह्मप्रतिपादनस्य परेषामपि संमतत्वात् अभिक्रमण-न्यायेन मध्यपतितस्य आनन्दमयाधिकरणस्यापि, सगुणब्रह्मण्येव तात्पर्यम्। अत एव च सूत्रकारैः सगुणं ब्रह्मेति पूर्वपक्षो वा निर्गुणं ब्रह्मेति सिद्धान्तो वा कुत्रापि न प्रादर्शि।

किञ्च 'भेदव्यपदेशाच्चे' ति अस्मिन् अधिकरणे सिद्धान्त-सूत्रमेकं परिदृश्यते। एवं सूत्रं प्रणेता भगवान् सूत्रकारः जीवब्रह्मा-भेदवादं निरसनीयपूर्वपक्षत्वेनाभिप्रैति इति तावत्स्फुटं विदुषाम्। अत एव च श्रुतप्रकाशिका 'भेदव्यपदेशाच्चेति भेदव्यपदेशं सिद्धान्त-

हेतुं वदता सूत्रकारेण ऐक्यव्यपदेशस्य पूर्वपक्षहेतुत्वं अवगम्यते इति ' इति । एवमेव चैतदधिकरणघटकीभूतानां 'तद्धेतुव्यपदेशाच्च' 'अस्मिन्नस्य च तद्योगं शास्ति' इत्यादीनां जीवब्रह्मभेदप्रतिपादकानां सूत्राणां विवर्ताद्वैतसमूलनाशकत्वं स्फुटमेव । 'सोऽश्नुते सर्वान् कामान् सह' इति श्रुतिः ब्रह्मणा सह ब्रह्मगुणानामपि अनुभाव्यत्वं श्रावयन्ती गुणद्वेषिणां निर्गुणत्ववादमुन्मूलयत्येव । यदत्रोक्तं शङ्कराचार्यैः 'ब्रह्मणा सहे' ति । ब्रह्मभूतो विद्वान् स्वरूपेणैव सर्वान् कामान् सहाश्नुते इति । तदिदं श्रद्धधानेषु शोभते, न तु पण्डितेषु, ब्रह्मणा सह इत्यस्य ब्रह्मभूतो विद्वान्' इत्यर्थकल्पने स्वाभिमताप्रामाणिकाद्वैतश्रद्धाजाड्यमन्तरा हेत्वन्तरस्यासंभवात् । 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिवाक्यान्यनेकानि ब्रह्मतद्गुणानां भेदेन विद्यमानत्वप्रतिपादकानि स्वरूपमात्रसत्यतावादपक्षस्य विघटकान्येवेति आनन्दमयविद्यायां न निर्गुणब्रह्मणः विचारविषयतेत्यास्तामयं विस्तरः । विस्तरेण च आनन्दमयाधिकरणं अद्वैतिनामेव प्रतिकूलमिति भाष्यादौ सम्यङ्निरूपितं तत्रैवावगन्तव्यम् । यदपि च भूषणीकारेणोक्तम्— 'अत्र पादे अन्तस्तद्धर्मोपदेशात्', 'आकाशस्तल्लिङ्गात्', 'अत एव प्राणः', 'ज्योतिश्चरणाभिधानात्' इति प्रथमान्तमन्तराकाशादिपदं तद्धटितवाक्यपरम् ।' इत्यादि । तदिदं युक्तिविरोधात् परभाष्यस्वभाष्योभयविरुद्धत्वाच्च न निरूपणार्हमिति वदामः । अन्तः इति प्रथमाविभक्त्यन्तं पदं इति कथयन् भूषणीकारः 'विहस्य, विहाय, कथं अहं' इत्यादिशब्दानामपि क्रमेण षष्ठ्यन्तत्व, चतुर्थ्यन्तत्व, द्वितीयान्तात्वमपि निर्लज्जं ब्रूयात् । तत्तच्छब्दघटितवाक्यपरत्वेन स्वीकाराभावेऽपि न कामपि क्षतिं पश्यामः । अत एव च शङ्कराचार्या अपि आकाशाद्यधिकरणेषु एवमेव संशयाकारं प्रदर्शयन्ति— यथा 'तत्र

संशयः 'किमाकाशशब्देन परं ब्रह्माभिधीयते उत भूताकाशमिति' इत्यादिना । असद्भाष्यकारा अप्येवमेव । स्थिते चैवं भूषणीकार-कुसृष्टेः कारणं किमिति न विद्मः । न च वाक्यसमन्वयपरत्वादेवा-स्याध्यायस्य समन्वयाध्याय इति व्यवहार इति वक्तव्यम् । एवं च वाक्यविशेष्यक एव संशयः प्रदर्शनीय इति वाच्यम् । कारणत्व-लक्षणसमन्वयपरत्वादेव हि प्रथमाध्यायस्य समन्वयाध्यायत्वेन प्रथा । अन्यथा चतुर्ष्वप्यध्यायेषु वाक्यसमन्वयस्यैव करणात् सर्वेषामप्य-ध्यायानां समन्वयाध्यायत्वेन व्यवहारापत्तेः ॥

किञ्च 'आकाशस्तल्लिङ्गात्' इत्यादौ आकाशशब्दस्य आकाश-पदघटितवाक्यपरत्वे लक्षणा । लक्षणास्वीकारेऽपि वा, 'तल्लिङ्गात्' इति हेतूक्तेस्तत्रानन्वयः, न हि वाक्यनिष्ठं किञ्चिल्लिङ्गं परिदृश्यते । अतः स्वरूपासिद्धिः । अतः आकाशाद्यधिकरणेष्वपि नाकाशादि-शब्दानां वाक्यपरत्वं इति तद्दृष्टान्तेन 'आनन्दमयः' इति सूत्र-घटकीभूतानन्दमयपदस्य तत्पर्यायत्ववर्णनं असिद्धस्य असिद्धेन साधनतममेव ।

यदप्याह भूषणीकारः— 'तत्राभ्यासः नास्मिन् प्रकरणे कुत्राप्यानन्दमयस्ये' ति तदिदं श्रुतितात्पर्याज्ञाननिबन्धनम् । तथा हि— ब्रह्मणः आनन्दशब्दवाच्यत्वं तावत् 'आनन्दो ब्रह्मेति' इति वाक्ये स्पष्टम् । तथा 'आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दपद-वाच्यस्थाने 'एतमानन्दमयमात्मानमुपसंक्रम्य' इति आनन्दमय-शब्दनिर्देशेन आनन्दानन्दमयशब्दयोः पर्यायता निष्प्रत्यूहा । अतः आनन्दमयशब्दसमभिव्याहारात् अभ्यासशब्दः आनन्दमया (आनन्द) भ्यासपर एवावगम्यते' इति ।

वस्तुतस्तु सूत्रघटकीभूतः 'अभ्यासात्' इति अभ्यासशब्दः कर्मणि घञन्तः उत्तरोत्तराधिक्येन गणनरूपाभ्यासकर्मपरः वाक्यशेषादवगम्यते । 'सैषानन्दस्य मीमांसा भवति' इत्यादिना हि मानुषानन्दादितः उत्तरोत्तरशतगुणितक्रमेण आनन्दो ह्यभ्यस्यते। सामान्यशब्दश्च वाक्यशेषाद्विशेषपर इति 'संदिग्धे तु वाक्यशेषात्' इत्यत्रोक्तम् । तथा चायमत्र सूत्रार्थः 'आनन्दमयः न जीवः, अपि तु परमात्मैव निरतिशयदशाशिरस्काभ्यस्यमानानन्दवत्त्वात्' इति।

परसंमतसूत्रार्थश्चात्यन्तमनुपपन्नः । तथा हि – आनन्दमयपर्यायः, स्वपर्यायघटकेन ब्रह्म पुच्छं प्रतिष्ठेत्यवान्तरवाक्येन ब्रह्मपदघटितेन प्रक्रान्तं ब्रह्मोपदिशति' इति तावदर्थः भूषणीकारेण प्रदर्शितः । अत्र अभ्यासादिति हेतुश्च वाक्यशेषे 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद' इति ब्रह्मपदपुनःश्रवणात् । इति विवृतः । तदिदं अयुक्तं, असन्नेवेति पर्यायोऽपि पुच्छवदानन्दमयविषयक एव, न तु 'ब्रह्म पुच्छं' इति निर्दिष्टतदेकदेशविषयः । पूर्वेषु चतुर्ष्वपि पर्यायेषु उदाहृतानां श्लोकानां पुच्छवद्विषयत्वदर्शनात् ।

किंच 'ब्रह्म पुच्छं प्रतिष्ठे' ति पुच्छब्रह्म प्राधान्येन निर्दिष्टं चेत् 'सोऽकामयते' त्यनन्तरवाक्येऽपि तच्छब्देन तदेव परामर्शनीयं, तच्चायुक्तम् । स इति पुल्लिङ्गनिर्देशात् । न च 'आत्मन आकाशः संभूतः' इति निर्दिष्ट आत्मशब्दाभिप्रायः पुल्लिङ्गनिर्देशः इति वाच्यम् । व्यवहितादव्यवहितस्यैव परामर्शनीयत्वात् । ननु 'तस्यैष एव शारीर आत्मा' इत्यनन्तरपूर्वोक्तस्यात्मनः पुल्लिङ्गनिर्देशेन परामर्शोऽस्तु इति चेन्न । तस्यान्नमयादिसर्वपर्यायसाधारणत्वेन एतत्पर्यायप्रधानप्रतिपाद्यत्वाभावात् । अतः प्रधान-

प्रतिपाद्याव्यवहितानन्दमय एव स इत्यनेन परामृश्यते इति आनन्दमयः परमात्मैव ।

किञ्च न केवलं पुनश्रवणमात्रं अभ्यासः, 'दध्ना जुहोति, पयसा जुहोति, 'सायं जुहोति, 'प्रातर्जुहोति' इत्यादावप्यभ्यासापातात् । किं तर्हि अनन्यपरपुनःश्रवणं, न चैतत् परमते सूपपादम् । ब्रह्मज्ञानसदसद्भावाभ्यां जीवस्य सदसत्वप्रतिपादकत्वेन असन्नेवेत्यादिवाक्ये साक्षात् ब्रह्मप्रतिपादकत्वाभावात् । सिद्धान्ते तु, भीषास्मेत्याद्यनुवाकस्य आनन्दमात्रविषयकत्वेन इतरप्रमाणाप्राप्तनिरतिशयानन्दपरत्वात् अभ्यासः सूपपादः । अतः परमते सूत्रार्थः अनुपपन्न एव ।

अत्र भूषणीकारः उपासनाज्ञानयोर्भेदमङ्गीकृत्य ब्रह्मवल्ल्याः भृगुवल्याश्च नोपासनपरत्वं, अपि तु ज्ञानपरत्वमेवेति च स्वीकृत्य यन्निरूपयामास — 'अन्नमयादिपरंपरायां तत्तत्पर्यायेष्ववयविन एव तत्तदवयवत्वेनोपासनविधानात् आनन्दमयपर्याये अन्नमयाद्युपदेशपरंपरायाः समाप्तिस्थाने आनन्दमयपदेनैवोपास्यस्य ब्रह्मणः समर्पणं युक्तं, यदि ब्रह्मवल्ली तद्व्याख्यानरूपा भृगुवल्ली वा उपासनपरैव स्यात्, ब्रह्मविदाप्नोति परं' इति हि ज्ञानस्यैव ब्रह्मप्राप्तिःफलमिति श्रावयति । इत्यादिना —

तदिदं स्वभाष्यादिविरुद्धं श्रुतिविदूरं चेति निरूपयामः । तथा हि । उपासनस्य ज्ञानत्वमेव नास्ति इति भूषणीकारादिप्रलापं ब्रह्मानन्दसरस्वतीगुरवः नारायणसरस्वतयः स्वीये वार्तिके सम्यक् दूषयन्ति, यथा— 'लोके उपासनं ज्ञानमिति व्यवहरन्ति सर्वे आगोपालपण्डितं जनाः । वेदेऽपि 'यदुपास्ते' य 'एवं विद्यात्'

'एवं जानीयात्' इत्यविगानेन प्रयोगो दृश्यते । न च तेषां भिन्नविषयत्वं, 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपासामुपक्रम्य 'पिता ह वै कामानां भवति य एवं वेद' इति विदिनोपसंहार-दर्शनात् भिन्नविषयत्वासिद्धेः, इत्यादिना 'तस्मात् अस्तदेतद् यद्' उपासनायाः न ज्ञानत्व' मित्यादिना च । एतेन 'विध्युपास्त्योः उपक्रमोपसंहारयोः यत्र सत्वं तत्र लक्षणा, इति ज्ञानोपासनभेद-वादिभिर्मधुसूदनसरस्वतीभिर्यदङ्गीकृतं तदभिनिवेशैकमूलकम् । एवं उपासनस्य ज्ञानत्वमेव नेति वदतो मधुसूदनस्य आशयानुसारेण ब्रह्मानन्दसरस्वतीभिः यद्विवरणं कृतं तदपि पूर्वोक्तनारायणसरस्वती-तात्पर्यविरुद्धत्वात् गुरुद्रोहैकफलकं प्रमाणविरुद्धं चेति विद्वद्भिः विभावनीयम् । शङ्कराचार्या अपि स्मृतिर्ज्ञानरूपैवेत्यङ्गीकुर्वन्ति । उपासनमपि अविच्छिन्नस्मृतिसंततिरूपमेव । तत्र ज्ञानत्वं नेति वादः स्वभाष्यविरुद्धश्च । तथा हि । ३. ३. ३२. ब्रह्मसूत्रविवरणावसरे 'तस्मात् ज्ञानात् कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् । तथा हि श्रुतिः 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।' 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः । इति चैवमाद्याः स्मृतौ ज्ञानत्वाङ्गीकारः भगवत्पादैः स्फुटं प्रतिपादितः । एवं 'विज्ञाय प्रज्ञां कुर्वीत' इति श्रुतिविवरणवेलायां 'प्रज्ञा - स्मृतिसंततिः' इति शङ्कराचार्यैरेव विवरणात् स्मृतेः ज्ञानत्वं अप्रकम्प्यम् । उपासनस्य भ्रमत्वमिति दुर्वादस्तु मण्डनमिश्रेणैव दूरतो निरस्तः । तथा हि मण्डनवचनं 'भावनाविशेषाद्धि अभूतमप्यनुभवमापद्यते किं पुनर्भूतं' इति । 'उपासनादिना साक्षात्कृतात्मतत्वस्य तु विरोधात् सन्नपि प्रपञ्चा-वभासः नासंस्पर्शी' इति च । अत्र उपासनस्य तात्विकत्वमेवाङ्गी-कृत्य तस्य आत्मसाक्षात्कारहेतुत्वस्याभिधानात् उपासनं भ्रम इति वचनं भ्रमैकमूलकमेव । निर्गुणविद्यात्वेन परसंमतमुण्डकश्रुतिरपि

ध्यानस्वरूपेणैव ध्यानं बोधयति यथा 'ओमित्येवात्मानं ध्यायथे' ति । एतच्छ्रुतेः पूर्वं 'तमेवैकं जानथात्मानं' इति श्रुतेः सद्भावेन श्रुतिद्वयेऽपि आत्मन एव ध्यानविषयत्वात् पूर्वश्रुतौ 'जानथे' ति निर्दिष्टं ज्ञानं 'ध्यायथे' ति विशेषशब्देन ज्ञानविशेषरूपं ध्यानमिति प्रतीयते । अतः उपासने ज्ञानत्वमेव नास्तीति स्वीकृत्य यद्भूषणीकर्तुः प्रलपनं तत् स्वमत, परमत, श्रुतिस्मृतिसूत्रादिसर्वविरुद्धत्वात् स्वोन्मादैकविलसितमित्यास्तां विस्तरः । विस्तरस्तु अविधेयज्ञानभङ्गवादपरीक्षासमालोचने द्रष्टव्यः ।

यदुक्तं ब्रह्मवल्ली भृगुवल्ली वा नोपासनपरा, उपासनप्रतिपादकवाक्याभावात् इति, तदिदं श्रुतिपरामर्शाभावनिबन्धनम् । तथा हि । ब्रह्मवल्ल्यामेव 'असद्वा इदमग्र आसीत्' इत्यस्मिन्ननुवाके 'यदा ह्येवैष एतस्मिन्नदृश्ये अनात्म्ये अनिरुक्ते अनिलयने अभयं प्रतिष्ठां विन्दते' इत्यस्मिन् वाक्ये 'प्रतिष्ठा' पदेन ध्यानस्यैव विवक्षणात् । अत्र च 'अदृश्ये' इति पदे चक्षुरिन्द्रियजन्यज्ञानाविषयपरम् । यथा अन्यत्र मुण्डकश्रुतौ 'यत्तदद्रेश्यमग्राह्य' मित्यादिना अद्रेश्यत्वेनोक्तस्यैव 'ओमित्येवात्मानं ध्यायथ', 'तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं', 'तस्मिन् दृष्टे परावरे' इत्युत्तरत्र दर्शनविषयत्वं प्रतिपाद्यते, एवमत्रापि चक्षुरिन्द्रियजन्यज्ञानाविषयस्य ध्यानं प्रतिपाद्यते । 'यदा ह्येवैष' इति वाक्ये हि 'एतस्मिन्' इत्यनेन पूर्वोक्त (ब्रह्मविदाप्नोति परं) ज्ञानविषयस्य परामर्शः । तथा च ज्ञानविषये प्रतिष्ठा प्रकर्षेण स्थितिः, ज्ञानविषये प्रकर्षेण स्थितिश्च ज्ञानस्य कालकृतप्रकर्ष एव अविच्छिन्नज्ञान पर्यवसितः । अतश्च अविच्छिन्नज्ञानवतः अभयप्राप्तिः 'अथ सोऽभयं गतो भवति' इत्यत्र प्रतिपादिता भवति । एतदर्थव्यतिरेके च

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनिष्टं प्रतिपादयति 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति' इति श्रुतिः । अत्र 'यदा ह्येवैष उदरमन्तरं कुरुते' इत्येतावन्मात्रोक्त्याऽपि पूर्ववाक्यस्थैतस्मिन्नित्यस्यानुषङ्गेण अर्थसामञ्जस्ये संभवति पुनः एतस्मिन्निति पदं पूर्वं प्रतिष्ठासंबन्धितया बुद्धिस्थज्ञानविषयपरम् । अविच्छिन्नज्ञानविषये ब्रह्मणि अन्तरं नाम प्रकृष्टज्ञानान्तर एव पर्यवस्यति । तथा च अविच्छिन्नज्ञानविषये ब्रह्मणि विच्छेदकरणं च ज्ञानविच्छेदकरणमेव भवति । एवं च अविच्छिन्नज्ञानस्यैव ध्यानपदवाच्यस्य अभयहेतुत्वाभिधानात् एतद्विरुद्धतया ज्ञानमात्रस्य (विच्छिन्नस्य) मोक्षकारणत्वं ये वदन्ति तेषां भयमेव (संसार) इति श्रुत्यैव बोधितं भवति । अतः ब्रह्मवल्ल्यां ध्यानं न प्रतिपादितं इति वचनं वेदबाह्यतामेवावेदयत् इति भूषणीकारवचनं श्रुतिविरुद्धत्वादनुपादेयमेव । अत एव राघवेन्द्रयतिना स्वीयोपनिषत्खण्डार्थे 'अभयं प्रतिष्ठां विन्दते' इत्यत्र ध्यानरूपां प्रतिष्ठां इत्यर्थो वर्णितः ।

किञ्च न कस्यामप्युपनिषदि ज्ञानमात्रेण ब्रह्मप्राप्तिरुक्ता, अपि तु उपासनेनैव । तथा हि, सद्विद्यायामेव तावत् उत्क्रान्तिप्रतिपादनेन 'अथ संपत्स्ये' इत्यादिना प्रतिपादिता संपत्तिः उत्क्रान्त्यनन्तरकालिकैवेति ज्ञायते । उत्क्रान्तिगत्यादयश्च उपासनाफलमेवेति परे वदन्ति । एवं च छान्दोग्योक्ता सत्संपत्तिरपि उत्क्रान्त्यनन्तरकालीना उपासनाफलमेव स्यात्, न ज्ञानफलम् । इति सद्विद्या परेषामसद्विद्यैव संजाता । एवमेव परैः निर्गुणविद्यात्वेनाभिमतास्सर्वा अपि विद्याः ध्यानस्यैव मोक्षकारणत्वं, गतिद्वारैव मोक्षप्राप्तिं च प्रतिपादयन्तीति सर्वा अप्युपनिषदः निर्गुणाद्वैतप्रतिकूला एवेति विपरीताद्वैतवादः वेदबाह्य एव संजातः ।

एतद्विवरणं तु पूर्वमेवानागतावेक्षणन्यायेन कृतमिति नात्र विस्तरः।

अतः ज्ञेयमेव ब्रह्म मोक्षकारणमिति वादस्यैवोपनिषद्विदूरतया 'ज्ञेयं च ब्रह्मे' त्यादिना योऽयं शतभूषणीकारलेखनं तदपि श्रुत्यर्थापरिशीलननिबन्धनमेव। तत्र भूमविद्यासंवाददानमपि विवर्तवादविनाशायैव भवति। भूमविद्यां प्रस्तुत्य प्रवृत्ते ह्यधिकरणे भगवान् सूत्रकारः, 'भूमा संप्रसादादध्युपदेशात्', 'धर्मोपपत्तेश्च' इति द्वाभ्यां सूत्राभ्यां, ब्रह्मणि जीवाद्भेदं, ब्रह्मणि च धर्मोपपत्तिं च सूत्रयामास। इदं च जीवब्रह्मैक्यवादिनां धर्मविद्वेषिणां च वादं भञ्जयत्येव। यद्यप्यस्मिन् सूत्रे संप्रसादशब्दो सुषुप्तिस्थानपरतया शङ्कराचार्यैः व्याख्यातः, तथापि तैरेव 'एष संप्रसादो अस्माच्छरीरात्' इति छान्दोग्याष्टमखण्डवाक्यविवरणावसरे 'स एष संप्रसादो – जीवः, अस्माच्छरीरात् आकाशादिव वाय्वादयः समुत्थाय' इति उपनिषद्भाष्ये विवरणकरणात्, अत्रापि सूत्रे संप्रसादशब्देन जीवग्रहणमेवोचितम्। तथा च तत्प्रतियोगिकभेदोपदेशात् इत्येवार्थः। अत्र 'उपदेशात्' इत्युक्त्या भेदस्य तात्त्विकत्वं सूत्रकारैः उक्तं भवति। न ह्यतात्त्विकस्यार्थस्योपदेशः क्रियते। विस्तरस्त्वन्यत्र। अत्र हि भूमविद्यायां प्राणपर्यन्तं प्रश्नप्रतिवचनाभ्यां उत्तरोत्तरमाधिक्यं उपदिश्यते, परब्रह्मणि तु वस्त्वन्तरात् पुरुषार्थतया अतिक्रान्तस्वोपाम्यवत्तुवादित्वरूपेण अतिवादित्वेन 'एष तु वा अतिवदति यस्सत्येनातिवदति' इति। अतः प्रक्रान्तशैलीपरित्यागेन शैल्यन्तरपरिग्रहः क्रियते। तत्र चायं हेतुः 'न हि प्रश्नप्रतिवचनाभ्यामेव अर्थान्तरं गम्यते प्रमाणान्तरेणापि तत्संभवात्। अत्र हि 'अस्ति भगवः प्राणाद् भूयः' इत्यपृच्छतोऽयमभिप्रायः — नामादिष्वाशापर्यन्तेष्वचेतनेषु पुरुषार्थभूततया पूर्वपूर्व·

मतिक्रान्तेपूत्तरोत्तरेषूपदिष्टेषु तत्तद्वेदिनः आचार्येण अतिवादित्व-नोक्तम्। प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवादिनस्तु पुरुषार्थभूयस्त्वा-तिशयं मन्वानेन 'स वा एष एवं पश्यन्नेवं मन्वानः, एवं विजान-न्नतिवादी भवति' इति अतिक्रान्तं वस्तुवादित्वमुक्तं, अतोऽत्रैव आत्मोपदेशस्समाप्त इति मत्वा शिष्यो नारदो भूयो न पप्रच्छ। आचार्यस्तु सनत्कुमारः इदमपि सातिशयं मन्वानः निरतिशय-पुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म 'एष तु वा अतिवदति यस्सत्येनातिवदति' इति स्वयमेवोपदिदेश। तथोपदिष्टश्च नारदः 'सोऽहं भगवस्सत्येनातिवदानि' इत्येवं प्रवृत्तः। तस्मा चाचार्यः विज्ञानादिसाधनपरंपरया भूमानमुपदिशति। इति ब्रह्मवल्ली तु न शिष्याचार्ययोः प्रश्नप्रतिवचनरूपेण प्रवृत्ता। येन शिष्येणाप्रार्थि-त्वेऽपि आचार्यः भूमविद्यायामिव अप्रार्थित एव पुच्छं ब्रह्मोपदिशेत् शैल्यन्तरेण। किञ्च भूमविद्यायां प्राणशब्दवाच्यस्य अब्रह्मत्वमिव नह्यत्र आनन्दमयपदवाच्यस्य अब्रह्मत्वं वक्तुं शक्यं पूर्वोपपादितदिशा आनन्दमय, आनन्दशब्दयोः पर्यायत्वेन अब्रह्मत्वशङ्काया एव अयुक्तत्वात्। अतः अन्यान्तरात्मोपदेशरहितः आनन्दमयः पर-मात्मैवेति सिद्धम्। अतः आनन्दमयवाक्यं ब्रह्मप्रतिपादकमेव। अन्यान्तरात्मरहितानन्दमयप्रतिपादकत्वात्। व्यतिरेकेण अन्नमयादि-वाक्यवत्। इति सिद्धम्। एतेन 'ज्ञेयं च प्रक्रान्तशैलीपरित्यागेन शैल्यन्तरपरिग्रहेणोपदेष्टुं शक्यते इति भूमाधिकरणे व्यक्तम्' इत्यादिना योऽयं भूषणीकारलेखः सोऽपि परास्तः॥

किञ्च भगवान् सूत्रकारः 'आनन्दमयोऽभ्यासात्' इत्यत्र पक्षवाचकतया आनन्दमयशब्दं निर्दिशन् पुच्छशब्दमनिर्दिशंश्च

पुच्छब्रह्मवादिनां पुच्छमुच्छिनत्त्येव । 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' इति प्राचुर्यपदमपि धर्मविद्वेषिणां प्रातिकूलमिति भाष्य-तट्टीकातत्त्वमार्ताण्डादौ व्यक्तम् । विज्ञानमयस्य कोशत्वासंभवादेव पञ्चकोशोपनिषत् इति प्रलापोऽपि दूरापास्तः । अतः आनन्दमया-धिकरणमपि श्रीभाष्यकारप्रदर्शितवृत्तिकारमतमेव पोषयति, न विवर्ताद्वैतवादं इत्यास्तामयं प्रपञ्चः ।

अथ भूषणीकारेण आचार्यपादग्रन्थोपादानपूर्वकं तद्दूषणा-भासाः ये प्रपञ्चिताः ते घटन्त न वा इति विमृशामः । आचार्य-पादा हि 'अथाऽतो धर्मजिज्ञासे' ति सूत्रमेव तावदद्वैतिनां न घटते, चिन्मात्रस्य स्वप्रकाशत्वेन ज्ञानाविषयतया जिज्ञास्यत्वा-योगात्' (शतदूषणी) इति अद्वैतमते विचारानुपपत्तिं प्रदर्शया-मासुः । तत्र भूषणीकारपरिहारस्तु 'चिन्मात्रं स्ववेद्यमपि प्रमाण-जन्यवृत्तिव्याप्यत्वात् स्वप्रकाशत्वेऽपि स्वावरणनिवृत्तिमात्रेण प्रमाण-वेद्यमिव' (शतभूषणी) इति । अत्र भूषणीकारेणैव 'प्रमाणवेद्यमिव' इत्युक्त्या वस्तुतः प्रमाणवेद्यत्वं नैवेत्येवाङ्गीकृतं भवति । अतश्च 'विचाराविषयतया जिज्ञास्यत्वायोगात्' इति आचार्योक्तदोषः वज्र-लेपायते । किंच 'स्वप्रकाशत्वात् आवरणनिवृत्तिमात्रेण' इत्युक्ति-रेव न घटते । स्वप्रकाशे आवरणाङ्गीकारे स्वप्रकाशत्वभङ्गादेव स्वप्रकाशे आवरणप्रसक्तेरेवाभावेन 'स्वावरणनिवृत्तिमात्रेणेत्यस्य सुतरामयोगात्' । एवं सांख्यवासनया वृत्तिमभ्युपगम्य निर्वाहः श्रुतिविदूरः, श्रुतौ ज्ञाधातोः वृत्तौ लक्षणापत्तिः, वृत्तेः स्वरूपस्य निरूपणादेः अयोगश्चेत्यादेः पूर्वमेव प्रसाधितत्वात् 'वृत्तिव्याप्य-त्वेने' त्यप्यनुपपन्नमेव । एवं च 'आत्मा वा अरे द्रष्टव्यः' इत्या-दीनामप्यनुपपत्तिः । किं च 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तत्त्वमसि'

इत्यादिवाक्यजन्यज्ञानविषयत्वस्य ब्रह्मण्यभ्युपगमे ब्रह्मणः प्रमाविषयत्वेन अनुभाव्यत्वे अननुभूतित्वप्रसङ्गः अपरिहार्यः । यदि च वृत्तेरावरणभङ्गार्थत्वेन निर्विशेषचितः वृत्तिविषयत्वमेवाङ्गीक्रियेत तर्हि 'ब्रह्मवित्, ब्रह्मवेद' इत्यादौ विदिधातोः वृत्त्यर्थकत्वमेवेत्यत्र स्वेच्छामन्तरा नान्यद्विनिगमकं दृश्यते । घटादौ ब्रह्मणि च सर्वत्र वृत्तिविषयत्वेन वृत्तौ मुख्यज्ञानत्वाङ्गीकारेण सामञ्जस्ये संभवति 'घटमहं जानामि' इत्यादौ चितो ज्ञाधात्वर्थघटकत्वं अहमर्थघटकत्वं च अभ्युपगम्य द्वेधा भानस्य अनुभवविरुद्धस्य कल्पनायोगाच्च । आवरणनिवृत्त्यर्थं वृत्त्यपेक्षांगीकारे च स्वतश्चैतन्यस्य आवरणानिवर्तकत्वेन वृत्तावेव निवर्तकत्वमिति स्यात् । वृत्तिज्ञानस्यैव अज्ञाननिवर्तकत्वं न तु स्वप्रकाशचितः इत्यभ्युपगमे च जडस्यैवाज्ञाननिवर्तकत्वं भवेत् । तत्र मुख्यज्ञानत्वाभ्युपगमश्च स्वसिद्धान्तविरुद्धः । स्वप्रकाशज्ञानस्य न निवर्तकत्वं वृत्तेस्तु निवर्तकत्वं इत्यत्र विनिगमकं मृग्यमेव । वृत्तिप्रतिबिम्बितचित एव निवर्तकत्वमित्यभ्युपगमेऽपि प्रतिबिम्बितत्वविशिष्टचित एव निवर्तकत्वं उत तदुपलक्षितचितो वा, विशिष्टचितो मिथ्यात्वेन जडत्वमेव। उपलक्षितचित्तु प्रतिबिम्बविगमनानन्तरमेव संभवति शुद्धचिद्विशेषेण निवर्तकत्वासंभवः । अतः विवर्ताद्वैतिनां ब्रह्मणि सर्वथा विचारविषयत्वस्यासंभवात् आद्यसूत्रानुपपत्तिः निष्प्रकम्प्यैव ।

एतेन अज्ञानविरोधिज्ञानं हि न चैतन्यमात्रं, किन्तु वृत्तिप्रतिबिम्बितं, तच्च नाविद्याश्रयः, यश्चाविद्याश्रयः तच्च नाज्ञानविरोधि, न च तर्हि शुद्धचितो अज्ञानविरोधित्वाभावे घटादिवदप्रकाशापत्तिः, वृत्त्यवच्छेदेन तस्या अज्ञानविरोधित्वात् । स्वतस्तृणतूलादिभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यतृण-

तूलादिदाहकत्ववत् स्वतो अविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वात्' इत्यद्वैतसिद्धिकारोक्तिः, तथा 'अज्ञानं प्रति ज्ञाने विरोधित्वं नाशकत्वं, तच्च न चिन्मात्रे, तथा अननुभवात्। किं तु प्रमाणवृत्तिबिम्बितचिति इति नोक्तदोष इत्याह— नहीति, इति ब्रह्मानन्दसरस्वत्युक्तिः। एवं तदुक्तमार्गमनुसृत्य जिज्ञासापादघटकं ज्ञानं तु 'अवगतिपर्यन्तं च ज्ञानं सन्वाच्यायाः इच्छायाः कर्म' इति भाष्यात् प्रमाणजन्यमेव न तु चिन्मात्रं' इत्यादि भूषणीकारवचनं च परास्तम्। तथा हि— 'वृत्त्यवच्छेदेन शुद्धचितः अज्ञानविरोधित्वोपपादनेऽपि वृत्त्यनवच्छेदे तस्या अप्रकाशत्वमेवेत्येव स्यात्। न हि शुद्धचितः किञ्चिदवच्छेदेन प्रकाशमानत्वं किंचिदवच्छेदेन नेति संभवति। तथा सति वृत्त्यधीनप्रकाशत्वेन स्वयंप्रकाशत्वस्यैव भङ्गप्रसंगात्। सौरालोकदृष्टान्तोऽपि अविद्यानाशकत्वे नोपयुज्यते। सौरालोकस्य तृणादिनाशकत्वेऽपि पाषाणादिनाशकत्वादर्शनात् भास्यसामान्यनाशकत्वं दृष्टान्ते नास्ति। अत्र शुद्धचितः ज्ञानविरोधित्वं, अज्ञानतत्कार्यभासकत्वेन ज्ञानत्वं चाभ्युपगम्यते। एतच्च न युक्तं वृत्त्यवच्छेदेन भास्यसामान्यनाशकत्वे सिध्युक्तदृष्टान्तासंभवात्॥

सविशेषं ब्रह्म, निर्विशेषं ब्रह्म चेति ब्रह्मद्वैविध्यकल्पनस्यावैदिकत्वादेव 'ब्रह्मजिज्ञासा हि निर्विशेषमिव सविशेषमपि तटस्थलक्षणतया जिज्ञास्यं मन्यते' इत्यादिभूषणीकारवचनं परास्तम्। सूत्रकारैः, 'विवक्षितगुणोपपत्तेश्च', 'धर्मोपपत्तेश्च', 'सर्वधर्मोपपत्तेश्च', 'तद्धर्मोपपत्तेश्च' इत्यादिसूत्रैः अनेकैः 'धर्माणां गुणानां च' ब्रह्मणि उपपन्नत्वसाधनात्, ब्रह्मणि धर्मानुपपत्तेः गुणानुपपत्तेर्वा वर्णनायोगात्। अतस्सविशेषं ब्रह्मैव सूत्रकारसिद्धान्त-

विषयः, निर्विशेषं ब्रह्म तु विवर्ताद्वैतिभिः कल्पितमेवेति पण्डितानां स्पष्टम् । अधिकं तु पूर्वमेवोक्तम् ।

यदपि च भूषणी वदति 'अज्ञानोपहितं ब्रह्म, ब्रह्माज्ञानयोरनादित्वात् । यद्यपि ब्रह्म नाज्ञानपरिणामः तथापि, अज्ञानकल्पितसत्यकामत्वादिगुणविशिष्टतया स्वरूपतो अज्ञानापरिणामत्वेऽपि विशिष्टरूपेण तत्परिणाम एव, इति विशिष्टरूपेण व्यावहारिकप्रमाविषयत्वं तस्य न विहन्यते । मिथ्याभूतस्यापि व्यावहारिकप्रमाविषयत्वस्य धर्मवद्वेदैकगम्यत्वस्याविरोधात्' इत्यादि ।

तदपि श्रुत्यादिप्रमाणविदूरं स्वाज्ञानमात्रविजृम्भितम् । तथा हि, उपाध्युपहितस्य उपाधिपरिणामवादः केनाप्यनङ्गीकृतः स्वमौढ्यमात्रसूचकः । न हि जपाकुसुमपरिणामः स्फटिकः । किं तर्हि स्फटिके लौहित्यप्रतीतेः कारणं हि जपाकुसुमाख्योपाधिसन्निधिः । अतः स्वरूपतो अज्ञानापरिणामित्वेऽपि विशिष्टरूपेण तत्परिणाम एवेति वचनं अपरामर्शनिबन्धनम् । एवं निर्लज्जं युक्तिविरुद्धं लोकविरुद्धं च वदन् भूषणीकारः श्रीभाष्यकारसिद्धान्ते चिदचिद्विशिष्टस्य ब्रह्मणः स्वरूपतो अपरिणामित्वेन अनुपादानत्वेऽपि विशिष्टरूपेण उपादानत्वं श्रौतं कथं दूषयति । तदत्र भूषणीकाराहृतसिद्धान्ते श्रुति, स्मृति, सूत्र, युक्त्यादि सर्वप्रमाणविरोधः, लोकानुभवविरोधश्च । श्रीभाष्यकारसिद्धान्ते तु सर्वमनुकूलमिति वैषम्यं तु पूर्वमेव प्रदर्शितम् ।

किं चोभयोरप्यज्ञानब्रह्मणोरनादित्वेन सार्वदिकसान्निध्याविशेषात् ब्रह्मगता एव धर्माः कुतो अज्ञानेन न भासन्ते इत्यत्र

विनिगमकमपि दुर्लभम् । धर्मवद्व्यावहारिकप्रमाविषयत्वं विशिष्टे ब्रह्मणि न विरुध्यते इति च नरविषाणाङ्कुरसाधने खरविषाणाङ्कुर-निदर्शनमेव । व्यावहारिकप्रमाविषयत्वस्य मिथ्याभूतत्वस्य वा धर्मे असिद्धत्वात् । प्रमाणद्वयकल्पनाया (पारमार्थिकव्यावहारिकभेदेन) सत्यद्वयकल्पनाया वा बौद्धाभिमतायाः बौद्धगन्धिवेदान्तिभिः स्वी-कृतायाश्च कुमारिलभट्टैः निरालंबनवादे विस्तरेण निरस्तत्वात्, पूर्वमेवास्माभिः अत्रैव निरस्तत्वाच्च । किञ्च धर्मस्य मिथ्यात्वं किन्निबन्धनमिति न पश्यामः । उत्तरकालिकबाधकप्रत्ययाभावात् । न हि नेदं रजतमितिवत् वेदजन्यप्रमाविषये धर्मे विपर्ययज्ञानविषयत्वं परिदृश्यते । येन मिथ्यात्वं स्यात् । न वा कारणदुष्टत्वज्ञानं, वेदे धर्मप्रमाकारणीभूते दोषबुद्धेः विवर्ताद्वैतवादिनमन्तरा कस्याप्य-भावात् । अतश्च मिथ्याकारणत्वेनाभिमतस्य हेतुद्वयस्याप्यभावे धर्मे मिथ्यात्ववादः स्वेच्छामात्रमूलकः इति तद्वादिनः वैदिक-बाह्यत्वमेव स्यात् । उक्तं च शबरस्वामिभिः 'तस्मात् यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एव असमीचीनः प्रत्ययः, नान्यः इति' इति । अन्यथा भवदभिमतस्वप्रकाशस्यापि शून्य-वादिना तुरीयबौद्धेन निरस्तत्वेन तस्याप्यसिद्धिरेव भवेत् । वेदस्य तात्त्विकप्रामाण्यं तु उभाभ्यां नाङ्गीक्रियते इति तु तुल्या चर्चा ।

एतेन 'यावद्विषयसत्त्वं मिथ्यात्वेन अनिश्चीयमानार्थविषयकत्व-रूपं स्वतो ग्राह्यं प्रामाण्यं भ्रमज्ञानस्यापि वर्तत इति स्थिते का वा कथा व्यावहारिकप्रामाण्ये' इति भूषणीकारवचनमपि परास्तम् । भ्रमस्थले उत्तरकालीनबाधज्ञानसद्भावेन पूर्वज्ञानस्य मिथ्यात्वनिश्च-येऽपि सगुणब्रह्मज्ञाने कदाऽपि उत्तरकालीनबाधाभावेन मिथ्यात्वा-योगात् । किञ्च भवन्मते निर्विशेषज्ञानस्य असत्यशास्त्रजन्यत्वात्

न सत्यत्वं, न ह्यसत्यस्य सम्यग्ज्ञानहेतुत्वं कथंचिदुपपद्यते । उक्तं च वार्तिककारैः,

'न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता ।
बाष्पादिना ह्यधूमेन मिथ्यावह्न्यादिबोधनम् ॥
तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ।
साप्यसत्या न सत्यं हि सत्याभासेन भासते ॥' इति ।

अतः बाधकज्ञानस्यानुदयात् सविशेषज्ञानमेव सत्यं निर्विशेषप्रमितुस्तु गगनारविन्दसहोदरी, इति तावत्सिद्धम् । उक्तं च वार्तिककारैः वेदोत्थबुद्धेः सर्वथा अप्रामाण्यं वक्तुं नैव शक्यत इति । यथा—

'तत्रापवादनिर्मुक्तिः वक्त्रभावाल्लघीयसी ।
वेदे तेनाप्रमाणत्वं नाशङ्कामधिरोहति ॥' इति ।

अतः सविशेषज्ञानस्य व्यावहारिकप्रामाण्यं, निर्विशेषस्य तु पारमार्थिकं तदिति कुकल्पनायाश्च बौद्धशिक्षानुसारिण्याः सर्वथा वैदिकेषु नावसरः । भ्रान्तिस्थले च उत्तरकालीनबाधकज्ञानसद्भावात् पूर्वगृहीतस्यापि प्रामाण्यस्य बाधो भवति । उक्तं च,

'तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥' इति ।

प्रकृते तु उपनिषज्जन्यसविशेषज्ञाने, अर्थान्यथात्वज्ञानस्य वा कारणदोषज्ञानस्य वा अभावात् गृहीतं प्रामाण्यं तथैवावतिष्ठते । अधिकं तु सगुणनिर्गुणश्रुतिव्यवस्थावादपरीक्षासमालोचने द्रष्टव्यम् ।

यदपि भूषणीकारो लिखति 'विशेषाणां कल्पितत्वेऽपि

तटस्थलक्षणपरतया सविशेषवाक्यानां प्रामाण्यं न हीयते। विशेषांशे ब्रह्मवत् त्रिकालाबाध्यविषयकत्वेन न प्रामाण्यं, इत्यद्वैतिनां सिद्धान्तः, न व्यावहारिकं प्रामाण्यमपि नास्तीति। तदिदं

'तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना॥'

इति वदद्भिर्वार्तिककारैव दूषितम्। भूषणीकारादिपरमाचार्याः बौद्धा अपि सांवृतसत्यं, परमार्थसत्यं चेति सत्यद्वयमङ्गीकृत्यैव स्वमतस्थापनाय प्रयतन्ते, तत्र वार्तिककारैः अभिहितानि दूषणानि एतेषामपि निरासकानीति नास्माभिः पृथग्यतितव्यम्। पूर्वमेव पर्यालोचितश्चायं वादः। व्यावहारिकं प्रामाण्यं इत्युक्तौ च मिथ्येत्येव पर्यवसानम्। वस्तुतस्तु सिद्धिकारादिप्रदर्शितमुख्यवेदान्तभूतदृष्टिसृष्टिपर्यालोचनायां प्रातिभासिकसत्यस्यैवाङ्गीकारापत्तेः न मात्रयाऽपि बौद्धवैषम्यम्। अतः नास्तिक्यपरिहारार्थमेव सत्यद्वयस्वीकरणेन मतद्वयस्य प्रवृत्तौ—

'तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः।
वञ्चनार्थ उपन्यासः लालावक्त्रासवादिवत्॥
नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च।
कल्पनाऽपि त्वभिन्नस्य नैव निर्वस्तुके भवेत्॥
(निर्वस्तुके – विज्ञानादभिन्ने.)
तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः।
तत्सत्यमन्यान्मिथ्येति न सत्यद्वयकल्पना॥'

इति वार्तिकेन मतद्वयस्यापि निराकरणेन मतद्वयस्यापि नास्तिक्येऽसततया सिद्धे सर्वस्यापि वेदस्य एकविधप्रामाण्यमङ्गीकृत्य सिद्धान्तं

प्रदर्शयतां वृत्तिकाराणां, तदनुयायिनां श्रीभाष्यकाराणां च सिद्धान्त एव वेदानुकूलस्सिद्धान्त इति सिद्धम् । अतः निर्विशेषस्याप्रसिद्धत्वात् तद्विचारस्सुतरामप्रसक्त इति आद्यसूत्रं विवर्ताद्वैतवादे न समञ्जसमिति आचार्यपादोक्तदूषणमप्रकम्प्यमेव ।

यदपि च भूषणीकारः निर्विशेषे ब्रह्मशब्दप्रवृत्त्यर्थं प्रयतमानः लिखति 'अर्थविशेषे शक्तानां सर्वथा वाच्यार्थपरित्यागेन अर्थान्तरपरत्वं जहल्लक्षणया यथा 'गङ्गायां घोषः' इत्यादौ । 'काकेभ्यो दधि रक्ष्यतां' इत्यादौ अजहल्लक्षणा, तथा जहदजहल्लक्षणाऽपि संप्रतिपन्नैवेति वाच्यार्थौ यथावदेव वाक्यार्थे न विवक्षित इत्येतावता न प्रामाण्यहानिः इति सर्वदर्शनसंप्रतिपन्नमिति ।

तदिदं असिद्धस्य असिद्धेन साधनमेव । जहदजहल्लक्षणायाः जगदीशादिभिर्निराकरणात्, असंकीर्णोदाहरणस्यानुपलम्भात्, तदस्वीकारे बाधकाभावाच्च । ब्रह्मशब्दार्थविचारवेलायां वाक्यार्थे वाच्यार्थस्य भानं वर्तते वा न वा इत्यस्य विचारस्य काकदन्तपरीक्षावदसंगतत्वाच्च । निर्विशेषे ब्रह्मशब्दः सूत्रघटकीभूतः प्रवर्तते न वा इति विचारस्यैवात्र करणीयत्वात् । प्रवर्तते चेत् विचारप्रतिज्ञा युक्ता, नो चेद्विचारो नैव युज्येतेति विचारानुपपत्तिः तदवस्थैव । ब्रह्मशब्दप्रवृत्तिस्तु नैव भूषणीकारेण साधिता । लक्षणया निर्विशेषे ब्रह्मशब्दप्रवृत्तिरिति तु लक्षणाबीजभूतानुपपत्तेरभावादेव निरस्तम् । यदि च सूत्रकारैः उत्तरसूत्रे यत्र कुत्रापि निर्विशेषविचारः कृतस्स्यात् तर्हि तदन्यथाऽनुपपत्त्या अत्र विचारप्रतिज्ञापरे अस्मिन् सूत्रे ब्रह्मशब्देन निर्विशेषः लक्षणया बोध्येत, न चैवं सूत्रेषु कुत्रापि, यतः इमां वेदनामनुभवेम । अतोऽत्र भूषणीकारलेखनं सर्वं प्रकृतासंगतमेवेति निर्मत्सराः जानन्ति ।

यदपि चेदमुच्यते भूषणीकृता 'सविशेषवाक्यानां तात्पर्यवशात् विशेषणांशाविवक्षया विशेष्यमात्रे प्रामाण्यं न हीयत' इति ।

तदिदमाशामोदकमात्रम् । निर्विशेषविषयकबोधस्य शब्दात् कस्यापि दार्शनिकस्यासंमतत्वेन षड्विधतात्पर्यलिङ्गैरपि तत्र तात्पर्यनिर्धारणासंभवात् । अप्रामाणिकशशशृङ्गादितुल्यार्थे तात्पर्यनिर्धारणस्यासंभवात् । लोके हि कोटिद्वयस्यापि प्रमाणतस्सिद्धौ सत्यां तात्पर्यसन्देहे जाते तात्पर्यलिङ्गैः एकतरकोटितात्पर्यनिर्धारणं संभवति । निष्प्रकारकः निस्संसर्गकबोधश्च न कस्यापि संमतः । उक्तं चाचार्यसार्वभौमैः, 'तदेवं व्योमारविन्दसदृशवपुषि दृशि वेदान्तानां तात्पर्यवर्णनं वेदान्तायैव (वेदविनाशाय) स्या' दिति । अतः भूषणीप्रतिपादनं नैव घटते इति ।

यदप्युक्तं भूषणीकृता, 'अभिहितान्वयवादे तु 'पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनं' इति न्यायात् पदार्थाभिधानमात्रेण पदानां चारितार्थ्यात् वाक्यार्थबोधोपयोग्यर्थविशेषावधारणे अभिहितार्थानामेव स्वातन्त्र्यात् अभिहितैः अर्थैः विशेषतात्पर्यवशात् विशेष्यमात्रान्वयबोधसंभवात् वाक्यार्थघटकार्थविशेषाणां शब्दव्यापारसत्वासत्वशङ्का निरर्थिका । तथा च साक्षाद्ब्रह्मणि शब्दवृत्त्यभावेऽपि तस्य वाक्यगम्यत्वं न हीयत' इति ।

तदिदं अभिहितान्वयवादस्वरूपमज्ञात्वैव, तद्भूताधिकरणवार्तिकापरिलोचनेन च यत्किंचित् प्रलपनमेव । तथा हि– 'न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः' इति प्रतिपादयन् वार्तिककारः पदानां वाक्यार्थे न व्यापारः इति वदन्तं भूषणीकारं निष्करुणं किल मारयति । निर्भागमेव वाक्यं वाक्यार्थस्य प्रतिपादकं इति वदतो

निराकर्तुं 'तद्भूतानां क्रियार्थेन समाम्नायः अर्थस्य तन्निमित्तत्वात्' इति जैमिनिः पदार्थस्यैव वाक्यार्थे निमित्तत्वमाह । तत्र च वाक्यार्थं प्रति मूलभूताश्च पदार्थाः अवश्यं पदैर्नैवाभिधातव्याः । उक्तं च –

'अशाब्दे चापि वाक्यार्थे न पदार्थेष्वशाब्दता ।
वाक्यार्थस्येव नैतेषां निमित्तान्तरसम्भवः ॥'

(श्लो. वा. अधि. ७. २३० श्लो.) इति । स्थिते चैवं 'वाक्यार्थघटकार्थविशेषाणां साक्षाच्छब्दव्यापारसत्त्वासत्त्वशङ्का निरर्थिका' (शतभूषणी) इति भूषणीकारलेखनं तावत् वार्तिकविरुद्धं स्वभ्रान्तिमात्रमूलकम् । 'पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ।' इति च पदैश्च वाक्यार्थे प्रतिपत्तव्ये पदार्थानां व्यापाररूपतां बोधयति । न तु पदानां सर्वथा वाक्यार्थे अहेतुत्वम् । पदार्थानां अवान्तरव्यापाररूपत्वस्वीकार एव ज्वालादृष्टान्तस्य संगतिः । एवं च यथा अपूर्वेण यागगतकरणत्वस्य स्वर्गनिरूपितस्य निर्वाहेऽपि न यागस्याकरणत्वापत्तिः अपूर्वस्य अवान्तरव्यापारत्वात् । तद्वत् पदार्थानां पदैर्बोधनेऽपि न वाक्यार्थे प्रत्यकारणत्वं इति सिद्धम् । अन्यथा वाक्यार्थस्य अशाब्दत्वापत्तिः प्राभाकरैरापादिता दुष्परिहरैव हि स्यात् । अतः पदार्थानामभिधानमात्रेण पदानां चारितार्थ्यात्, अर्थानामेव वाक्यार्थे स्वातन्त्र्यमिति भूषणीकारवर्णनं हि वार्तिकापरामर्शनिबन्धनम् । उक्तं च–

'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथापि नैतास्मिन् पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥' इति ।

अतः पदार्थानां पदेषु व्यापारत्वमङ्गीकृत्य पदार्थद्वारा वाक्यार्थेऽपि तात्पर्यं वर्णनीयमित्येतत् पूर्वमीमांसकसंमतम् । विवर्ताद्वैतिभिस्तु सर्वमेवैतद्विरुद्धमिति तत्र वार्तिकसंवाददानं हि 'भक्ष्याशया हि हि मञ्जूषां दृष्ट्वाऽऽखुस्तेन भक्षितः' इति न्यायमेवानुसरति ।

'ब्रह्मशब्दार्थोपपत्तिस्तु' इत्यादिना ब्रह्मणः पदबोध्यतोपपादनार्थं प्रवृत्तः भूषणीकारः, वाक्यार्थस्य पदबोध्यताया अभावेऽपि न दोषः इति लिखन् असंबद्धलेखकाग्रेसरत्वं स्वस्य सम्यगावेदयति । न हि ब्रह्म वाक्यार्थः ।

यत्तूच्यते भूषणीकृता 'वस्तुतस्तु

'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंमितम् ॥'

इति स्मृत्या निर्विशेषस्य ब्रह्मणः सांकेतिकनिरूढिवशात् साक्षादेव ब्रह्मशब्दः वाचकः' इति ।

तदिदं विष्णुपुराणापरामर्शेनैव स्वभ्रमेणैव यत्किंचित् प्रलपनमात्रं, तथा हि । नात्र निर्विशेषस्य ब्रह्मणः प्रतिपादनं मनागपि घटते । न च 'प्रत्यस्तमितभेद' मित्यनेन निर्विशेषोपस्थितिरिति वाच्यम् । 'प्रत्यस्तमितभेद' मित्यतः पूर्वं हि,

'त्रिविधा भावना भूप विश्वमेतन्निबोधत ।
ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ॥'
(वि. पु. ६. ७. ४८.)

कर्मभावात्मिका ह्येका ब्रह्मभावात्मिकाऽपरा ।
उभयात्मिका तथैव अन्या त्रिविधा भावभावना ॥

बोधाधिकारयुक्तेषु विद्यते भावभावना ।
अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु ॥ (४९)

'विश्वमेतत्' इत्यत्र बद्धजीवसामान्यं कर्मक्षयशून्यमित्युक्तम् । तदनन्तरं च 'परं चान्यत् भेदभिन्नदृशां नृणाम् । प्रत्यस्तमितभेदं यत्' इति श्लोकक्रमः । एवं अस्मिन्नेव विष्णुपुराणे द्वितीयांशे जडभरतोपाख्याने,

'पुमांस्त्री गौरियं वाजी कुञ्जरो विहगस्तरुः ।
देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ॥
पुमान् न देवो न नरः न पशुर्न च पादपः ।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥'

इत्यत्र देवादिशब्दवाच्यत्वं देहवद्धस्यैवेति स्फुटमुक्तम् । तद्वदेवात्रापि देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचा देवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुञ्जनसो न गोचरः इत्युच्यते । अतो अत्र न भेदापलापः प्रतीयते । कथमिदमवगम्यते इति चेत् पूर्वं 'भेषजं भगवत्प्राप्तिः' इत्युपक्रम्य भगवत्प्राप्तिं प्रस्तुत्य,

'श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥
वाचको भगवच्छब्दः तस्याद्यस्याक्षयात्मनः ।
एवमेष महाशब्दो मैत्रेय भगवानिति ॥
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ।
विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ॥
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ।'

इत्युपसंहारे च परविद्याफलभूतभगवत्प्राप्तेः 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति विद्वान्' इति श्रुतिविवक्षितायाः पराशरेण स्थापनेन न भेदापलापः पराशरसंमतः। अतश्च 'प्रत्यस्तमितभेद' मित्यपि निर्विशेषबोधकं न भवति।

अतश्च प्रत्यस्तमिति श्लोकस्यायमर्थः। प्रत्यस्तमितभेदं — अशरीरत्वेन जात्यादिभेदरहितं। अत एव वचसामगोचरं। सत्तामात्रं — अपक्षयादिविकारपञ्चकरहितं, आत्मसंवेद्यं — स्वयंप्रकाशं। ज्ञानं— ज्ञानगुणैकनिरूपणीयं, तद्गुणसारत्वादिति ह्युक्तम्, ज्ञानस्वरूपत्वं तु आत्मसंवेद्यमित्यनेन दर्शितम्। ब्रह्मात्मकत्वात् ब्रह्मसंज्ञितमित्युक्तम्। यदेवं रूपं ज्ञानं तद्ब्रह्मसंज्ञितमित्यन्वयः। अतश्च श्लोकेऽस्मिन् परिशुद्धजीवस्वरूपप्रतिपादनमुखेन तस्य योगयुङ्मनसोऽनालंबनत्वमेवोच्यते इति, नात्र भूषणीकारभ्रान्तेरवकाशः, अन्यथा पूर्वापरग्रन्थविरोधात्। अत एव स्वगोष्ठीमात्रसिद्धसाङ्केतिकनिरूढेरपि नावकाशः। अतः ब्रह्मणि शब्दवृत्तेरनङ्गीकारादद्वैतिनां विचारप्रतिज्ञानं सर्वथा अयुक्तमेवेति विचारानुपपत्तिः आचार्यैरापादिता नैव परिहर्तुं शक्यते इति सिद्धम्।

निर्विशेषे निरतिशयबृहत्त्वस्य, बृंहणत्वस्यचासंभवादेव आद्यसूत्रानुपपत्तिः, जगत्कारणत्वस्यासंभवादेव च द्वितीयसूत्रस्याप्यनुपपत्तिः इति जन्मादिसूत्रमप्यनुपपन्नमेव। न चारोपितजगत्कारणत्वादिकमादाय 'यतो वे' त्यादिश्रुतेः, 'जन्माद्यस्य यतः' इति सूत्रस्य च निर्वाहो भवतीति वाच्यम्। वेदे आरोपाङ्गीकारे वेदस्य कृत्स्नस्याप्यप्रामाण्यापत्तेः वेदे आरोपकपुरुषाभावाच्च तथा वर्णनस्यानुचितत्वात्। उक्तं हि वार्तिककृता तत्सिद्धिपेटिकायां,

'यद्यध्यासेन वक्तॄणां गौणी वृत्तिः प्रकल्प्यते ।
वेदे सा न कथंचित्स्यादध्यारोपयितुर्विना ॥'

इति । खण्डदेवोऽपि कौस्तुभकारः तद्व्यपदेशाधिकरणे एवं ह्याह—'वस्तुतस्तु वेदे आरोपकपुरुषाभावान्न क्वापि रूपकम्' इति । अतः वेदे आरोपस्यानुचितत्वात् आरोपितजगत्कारणत्वमादाय श्रुतिसूत्रनिर्वाहस्यानुचितत्वात् मुख्यकारणत्वस्य निर्विशेषे अनङ्गीकारात् विवर्ताद्वैतिनां द्वितीयसूत्रं न कथंचिदप्यनुकूलम् ।

एतेन जन्मादिसूत्रं साक्षात् सविशेषमेव लक्षयति । ब्रह्मस्वरूपलक्षणं तु 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यादि । अतः 'जन्माद्यस्य यतः' इत्यस्य सविशेषपरत्वापादनमिष्टापादनम् ।' इत्यारभ्य .... कल्पिताकल्पिताकारविशेषमादाय न विरुध्यते' इत्यन्ता शतभूषणी परास्ता ।

कल्पितार्थबोधकत्वस्य वेदे क्वचिदङ्गीकारे सर्वत्राप्येवमेवेति वदतां बौद्धानां कथं निरासः ? अतः आरोपितार्थबोधकत्वं वा कल्पितार्थबोधकत्वं वा वेदप्रामाण्येत्सुभिः वेदस्य मनसाऽपि न शक्यशङ्कमिति । उक्तं हि वार्तिककृता तन्त्रवार्तिके स्मृतेर्लोभादिमूलकत्वनिराकरणावसरे—

'लोकायतिकमूर्खाणां नैवान्यत् कर्म विद्यते ।
यावत् किञ्चिददृष्टार्थं तद्दृष्टार्थं हि कुर्वते ॥
वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं जनयन्ति च ॥
तेभ्यश्चेत् प्रसरो नाम दत्तो मीमांसकैः क्वचित् ।
न च कश्चन मुञ्चेयुर्धर्ममार्गं हि ते तदा ॥

प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥
क्वचिद्दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धधामभिः ।
जीवितुं लभते कस्तैः तन्मार्गपतितः स्वयम् ॥'

इति । एवं वेदे क्वचित् कल्पितार्थबोधकत्वस्य स्वीकारे बौद्धानामेव विजयः स्यादिति बौद्धायुक्त्यादरेण विवर्ताद्वैतवादिनां जगत्कारणत्वस्य कल्पितत्ववर्णनमित्येतत् तेषां वादमवैदिकमेवावेदयेदिति ॥

किञ्च, जगत्कारणत्वस्येव आनन्दत्वज्ञानत्वादीनां ब्रह्मण्यस्वीकारादेव (तत्वतः) जगत्कारणत्वस्योपलक्षणलक्षणत्वं सत्यादिवाक्यस्य स्वरूपलक्षणपरत्वमिति विभागोऽपि नैव घटते । एतेन 'स्वरूपलक्षणं लक्ष्यात्यन्ताभिन्नं, तटस्थलक्षणं स्वकालावच्छेदेन स्वाश्रयनिष्ठ' मिति अखण्डार्थत्वोपपत्तौ विवेकमुक्त्वा ज्ञानत्वाद्युपपत्तौ 'ननु ज्ञानत्वानन्दत्वयोः कादाचित्कत्वे जगत्कारणत्वादिवत् अस्वाभाविकत्व' मिति चेन्न, इष्टत्वात् । एवमपि जगत्कारणत्वं तटस्थलक्षणं, आनन्दत्वाद्युपलक्षितव्यक्तिर्लक्षणया बोध्या, स्वरूपलक्षणमिति सिद्धान्ताव्याघातात् । जगत्कारणत्वादेः शुद्धे अनङ्गीकारपक्षे ज्ञानत्वादेरशुद्धनिष्ठत्वस्य ततो वैलक्षण्यसंभवाच्च' इति लघुचन्द्रिकायां ब्रह्मानन्दसरस्वत्युक्तिरप्यपास्ता । लघुचन्द्रिकाकृद्भिरेव शुद्धे न कोऽपि धर्मः इति पूर्वं निरूपितत्वादेव तद्विरुद्धतया अत्र ज्ञानत्वादेः शुद्धनिष्ठत्वोपगमे स्वोक्तिव्याघातात् । आनन्दत्वाद्युपलक्षितव्यक्तेः स्वरूपलक्षणत्ववत् जगत्कारणत्वोपलक्षितव्यक्तेरपि स्वरूपलक्षणत्वसंभवेन निष्प्रमाणकलक्षणद्वैविध्यस्यायोगात् । धर्मस्य प्रकारतया भानं हि जगत्कारणत्वबोधकवाक्ये सत्यज्ञानादिवाक्ये च समानम् ।

धर्मप्रकारकबोधश्च विवर्ताद्वैतिसंमतः सर्वानुभवविदूरः । अतः नैवं विभागकल्पनमुपपत्तिमत् । अन्यथा स्वप्रकाशत्वमपि ज्ञानत्वानन्दत्व-समानयोगक्षेममिति स्वप्रकाशतया निर्विशेषसिद्धेरपि नावकाशः स्यादिति शून्य एव पर्यवसानमिति जितं माध्यमिकेन । न च द्वितीयमिथ्यात्वनिरूपणोक्तदिशा स्वप्रकाशत्वस्य परप्रकाश्यत्वाभाव-रूपत्वमङ्गीकृत्य प्रभाकरमत इव अभावस्याधिकरणात्मकत्वेन ब्रह्म-रूपत्वोपपादनान्न दोषः इति वाच्यम् । धर्मस्य प्रकारतया अभाने हि परप्रकाश्यत्वभ्रमनिवर्तनासंभवेन तेन स्वप्रकाशतया चित्सिद्धेरेवा-संभवात् । अनयैव रीत्या जगत्कारणत्वादेरपि येन केन प्रकारेण अभावरूपत्वोपपादनसंभवेन दोषाभावात् । अतः शब्दसामान्यस्य धर्मप्रकारकबोधजनकत्वमेव स्वभाव इति न कुत्रापि निर्धर्मकवस्तु-विषयकबोधः इति वेदान्तवेद्यं ब्रह्म सविशेषमेव । उपलक्षणस्य प्रकारतया भानमेव सर्वदार्शनिकसंमतमिति उपलक्षणत्वाङ्गीकारेऽपि वा न निष्प्रकारकवस्तुसिद्धिः । अधिकं तु पूर्वमेवोक्तम् । इदमत्राव-धेयम् ।

आनन्दवल्ल्युपक्रमे हि 'ब्रह्मविदाप्नोति पर' मिति मुक्ति-साधनवेदनविषयत्वेन प्राप्यत्वेन च ब्रह्म प्रस्तुतम् । तच्च वेदन-मुपासनरूपमेवेति पूर्वमेवाभिहितम् । भाष्यादौ व्यक्तं च । अतः उपक्रमे सर्वगतस्य ब्रह्मणः प्राप्तिरुक्ता । सा च प्राप्तिः 'अस्मा-ल्लोकात्प्रेत्य, एतमानन्दमयमात्मानमुपसंक्रम्य, इमांल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्, एतत्सामगायन्नास्ते' इत्युपसंहारे देशविशेषा-वच्छेदेनैवेति निर्धार्यते । अत एव सूत्रकारोऽपि आनन्दमयाधिकरणे 'मान्त्रवर्णिकमेव च गीयते' इत्यत्र 'गीयते' इत्यनेन इममर्थं स्पष्टीचकार । एवं च देशविशेषावच्छेदेन प्राप्तेर्गतिसाध्यत्वेन गति-साध्यं च फलं अन्यत्र दहरविद्यादौ छान्दोग्यादौ उपासनस्येव

संप्रतिपन्नमिति आनन्दवल्यामपि 'ब्रह्मविदाप्नोति पर' मिति प्रथमतः संप्रतिपन्नं वेदनं उपासनमेवेति अङ्गीकर्तव्यं भवति । न त्वद्वैतिसंमतज्ञानमात्रं उत्तरश्रुतिसंदर्भविरोधात् । उपासनस्य गतिद्वारकमेव फलमिति परेषामपि संमतमेव । 'ब्रह्मविदाप्नोती-त्यस्यानन्तरं हि 'तस्माद्वा एतस्मा' दित्यादिना 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना च जगद्धेतुत्वमप्यभिहितम् । 'यतो वे' त्यादिवाक्येन हि आदौ उपास्यत्वेन प्रस्तुतब्रह्मण एव जगत्कारणत्वं लक्षणतया अभिधीयते । 'यतो वे' त्यस्मादनन्तरवाक्यं च 'तद्वि-जिज्ञासस्वे' ति वाक्यम् । एतद्वाक्यघटकपदार्थतात्पर्येणैव 'अथातो ब्रह्मजिज्ञासेति सूत्रे ब्रह्मजिज्ञासाशब्दप्रयोगः । 'तद्विजिज्ञासस्वे' ति वाक्ये तच्छब्दश्च जगत्कारणपरः, पूर्ववाक्ये तस्यैवोपस्थितेः तच्छ-ब्देन च सर्वनाम्ना तत्परामर्शस्यैव युक्तत्वात् । अतश्चैतदनुरोधेन 'अथातो ब्रह्मजिज्ञासे' ति पूर्वसूत्रेऽपि उपास्यं जगत्कारणं च यद्ब्रह्म तस्यैव ब्रह्मशब्देन बोधनात् तद्विषयकविचार एव प्रतिज्ञात इति निर्विशेषविचारप्रतिज्ञानमेव नास्तीति तद्विचारो वा लक्षण-कथनं वा सुतरामसंबद्धभाषणमेव भवेदिति अद्वैतिसंमत उपलक्षण-लक्षणकथनादिरूपकुकल्पनायाः न कथंचिदप्यवकाशः ।

किञ्च विवर्तोपादानत्ववादिनां शाङ्कराणां न केवलं श्रुत्यादि-प्रमाणविरह एव किं तर्हि ? दृष्टान्तविरहश्च । तथा हि विवर्तोपा-दानत्ववर्णने शुक्तिरजतादिदृष्टान्तः भामत्यादिपूक्तः । परंतु सोऽयं निरूपणानर्हः, अद्वैतिनां मते हि रजतं प्रति शुक्तिर्न विवर्तोपादानं, किंतु शुक्त्यवच्छिन्नचिदेव । एवमर्थे च न किञ्चिदन्यत्प्रमाणं स्वगोष्ठीनिष्ठसमयमन्तरा, न वा दार्शनिकसंमतिः इति । अतश्च काल्पनिकधर्मस्वीकारः जगत्कारणत्वादीनां लक्षणानां श्रौतानामपि

सूत्रकारैस्सत्यत्वेन सूचितानां असत्यलक्षणपरत्वमित्यादिकं वैदिकै-र्हेयमेवेति दिक् ।

यदपि चेदं भूषणीकारवचनं 'यदि तु कल्पितविशेषवत्त्वेनैव ब्रह्मणः सत्यकामत्वादिसर्वविशेषवत्त्वं श्रीभाष्यं स्वीकरोति, तर्हि किमनेन वृथा अद्वैतविरोधेने' ति तदिदं भ्रान्तवचनं निराकरणमपि न प्रयोजयति । श्रीभाष्यकाराणां सिद्धान्ते धर्माणां ब्रह्मणि कल्पित-त्वतया स्वीकारस्य का वा आवश्यकता ? जगत्कारणत्वादयः परमा-र्थतया किल स्वीक्रियन्ते, यैश्च धर्मैः जड, जीवादिव्यावृत्तिश्च निरूप्यते । अतः धर्माणां सत्यत्वात् भूषणीकारप्रलापोऽयं अनुक्तो-पालम्भः । धर्माणां सत्यतया स्वीकारेणैव वेदप्रामाण्यपरिरक्षणं भवति इति वैदिकसार्वभौमानां श्रीयामुनमुनिश्रीभाष्यकारादिमहानु-भावानां आशयः तद्ग्रन्थपरिशीलनवतां स्पष्टः । अन्यथा विवर्ता-द्वैतिनामिव श्रीभाष्यकारादीनामपि बौद्धमतप्रवेशापत्तिः किल अनिवार्या भवेत् । वेदे आरोपार्थबोधकत्वस्यायुक्तादेव सविशेषार्थ-बोधकत्वं परमार्थत एवेति सिद्धे यदत्र वार्तिकसंवाददानं भूषणीकृतः,

'अक्षमा भवतः केयं साधकत्वप्रकल्पने ।
किं न पश्यसि संसारं तत्रैवाज्ञा न कल्पितम् ॥ '

इति, तदप्यज्ञानकल्पितमेव । भवत्संमतस्य असत्यार्थकल्पनस्य प्रमाणं किमिति विचारे 'असदुक्तत्वमेवे' ति वर्णनस्य प्रामाणिकै-रसह्नीयत्वात् । वार्तिककृतोऽपि कल्पितविवर्तवादस्वीकर्तृकोटि-प्रविष्टत्वात् । 'शतमप्यन्धानां न पश्यति' इति हि लोकानुभवः ।

यदप्युच्यते भूषणीकृता, 'कल्पितविशेषवत्त्वे तल्लक्षितस्य ब्रह्मणोऽपि कल्पितत्वापत्तिशङ्का तु मिथ्याभूतस्यापि सत्यार्थक्रियाकारित्वान्नोन्मिषति' इति, तदिदमयुक्तमसंबद्धं च। असत्यस्य सत्यार्थसाधकत्वायोगात्। यथा च वार्तिकं निरालंबनादे—

'योऽधुना परमार्थेन नास्तीत्येवं प्रकाशते।
कथं पूर्वमसावासीत् असंश्चेत् साधनं कथम्॥
साधनं चेदवश्यं च परमार्थास्तिता भवेत्।
सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते॥
न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता।
बाष्पादिना ह्यधूमेन मिथ्यावह्न्यादिबोधनम्॥
तस्मादसत्यहेतोर्या परमार्थे मतिस्तव।
साध्यसत्या न सत्यं हि सत्याभासेन गम्यते॥'

इति। अधिकं तु असत्यात् सत्यसिद्धिभङ्गवादपरीक्षासमालोचने द्रष्टव्यम्। ब्रह्मणि सत्यत्वादेरनङ्गीकाराच्च असत्यात्सत्यब्रह्मणो सिद्धिरित्युक्तेरसंबद्धप्रलापत्वं चेत्यास्तामयं विस्तरः।

यदप्युच्यते भूषणीकृता, 'सत्यज्ञानादिवाक्यं लक्षविशेषणपरस्परान्वयमहिम्ना लक्षणया स्वरूपमात्रपरमपि वाच्यार्थपरस्परान्वयबलात् अनृतजडव्यावृत्तीनामर्थसिद्धत्वात् स्वरूपैक्येनाभेदे सामानाधिकरण्येन विरुद्धमितीष्टासिद्धौ व्यक्तम्। सामानाधिकरण्यत्रैविध्यमेव युक्तं, न तु पारिभाषिकापृथक्सिद्ध्यादिप्रक्रिया' इति।

तदिदं श्रुत्यनुभवादिविदूरं युक्तिविरुद्धं च। तथा हि– 'सत्यं ज्ञान' मिति वाक्यस्य पदानां केवलनिर्विशेषचिन्मात्रपरत्वे पदान्त-

वैयर्थ्यमेवेति भाष्यादिषु स्पष्टमुक्तम् । अज्ञातार्थज्ञापकतया हि प्रामाण्यं शास्त्रस्य वक्तव्यं, नान्यथा, धर्मस्य प्रकारतया भानाभावे हि शुद्धस्य एकेनैव पदेन प्रतिपन्नतया पदान्तरस्य अज्ञातार्थज्ञापकत्वासंभव इति भाष्यकारादीनामाशयः । किं च सत्यादिपदानां अर्थात् अनृतजडव्यावर्तकत्वमित्युक्तिश्च न विकल्पसहा, व्यावृत्तयः, सत्याः, उत मिथ्या– आद्ये व्यावर्तकानामपि सत्यत्वं स्यात्, व्यावृत्तिव्यावर्तकयोः एकसत्ताकत्वानियमात् । अनृतादिव्यावृत्तिश्च ब्रह्मणि पारमार्थिक्येवाङ्गीकार्या, अतश्च तद्व्यावर्तकानामपि पारमार्थिकसत्यत्वमपरिहार्यम् । तथा चाद्वैतहानिः । किं च व्यावृत्तीनां ब्रह्माभेदे हि एकेन ब्रह्मपदेनैव तत्सिद्धेः सत्यादिपदवैयर्थ्यं च । एवं, असत्यव्यावृत्तेरज्ञानव्यावृत्त्या अज्ञानव्यावृत्तेश्च असत्यव्यावृत्त्या चान्योन्यमभेदे सति सत्यपदेनैव अज्ञानादिव्यावृत्तेस्सिद्धत्वात् ज्ञानादिपदवैयर्थ्यं च । यदि तासां व्यावृत्तीनां परस्परं ब्रह्मणा च भेदस्वीकारः तर्हि सिद्धान्तहानिः यदि च, व्यावृत्तिर्मिथ्येति द्वितीयकल्पस्वीकरणं तर्हि, अनृतस्यापि ब्रह्मसमसत्ताकत्वापत्तिः यथा, शुक्तौ शुक्तितो व्यावृत्ते, मिथ्यात्वेन शुक्तित्वस्य शुक्तिसमानसत्ताकत्वं तद्वत् । अपि च असद्व्यावृत्तेर्व्यावहारिकत्वाङ्गीकारे च 'असद्वा इदमग्र आसीदि' ति वाक्येन निश्चितप्रामाण्येन असत्त्वस्य पारमार्थिकत्वं च स्यात् । किं च ब्रह्मणि प्रागज्ञातः अनृतजडादिव्यावृत्त्यादिशब्दवाच्यश्च धर्मः न कोऽपि अद्वैतिभिस्स्वीक्रियते। अतश्च कथं वा अनृतादि व्यावृत्तिस्स्यात् ? ब्रह्मस्वरूपमात्रं तु वाक्यान्तरेणैव ज्ञातमित्येतद्वाक्यवैयर्थ्यमपरिहार्यमेव । व्यावृत्तीनां द्वारत्वस्वीकारे वा, सत्यशब्देन असद्व्यावृत्तिद्वारा यद्बोधितं तदेव ज्ञानादिव्यावृत्तिद्वारा बोध्यते अन्यद्वा । नाद्यः ज्ञानादिपदवैयर्थ्यं,

न च द्वितीयः, सविशेषत्वापत्तेः, न च द्वारविकल्पः, एकस्मिन्नेव प्रयोगे व्रीहियवयोरिव एकस्मिन्नेव सत्याद्यनेकपदोपादानायोगात्। अनृतत्वादिभ्रान्तिनिवृत्तिरूपदृष्टप्रयोजनानां भिन्नत्वेन व्रीहियवादिवत् विकल्पप्रयोजकस्य एकप्रयोजनकत्वस्याभावाच्चेति। नापि समुच्चित्य द्वारत्वं, 'विज्ञानमानन्दं ब्रह्मे' त्यादौ अनृतादिव्यावृत्तेरबोधनेऽपि ब्रह्मप्रतीतेः। अतः न व्यावृत्तेर्द्वारत्वं। एतेन 'व्यावृत्तीनामुपलक्षणतयैव भानात् न सविशेषविषयत्व' मिति भूषणीकारवचनमपि निरस्तम् 'काकवद्देवदत्तगृह' मित्यादिवत् सखण्डार्थत्वापत्तेः। उपलक्षणात् प्रागेव ब्रह्मणो ज्ञातत्वेनोपलक्ष्यत्वायोगाच्च।

उक्तं चाभियुक्तैः,

'सत्यज्ञानादिकेष्वेवं न व्यावृत्या प्रयोजनम्।
व्यावर्त्यस्याविशेषत्वे तदखण्डं च खण्डित॥' मिति॥

अतश्चार्थिकेनापि विशेषणेन ब्रह्मणो अखण्डत्वहानिरेव। वस्तुतस्तु 'सत्यं ज्ञानमनन्त' मिति वाक्ये 'अनन्त' मिति पदेन अन्तवद्व्यावृत्तेश्शब्दत एवोक्तत्वमिति सुतरां सविशेषत्वम्।

तत्वं तु उपलक्षणस्याप्रकारत्ववादः शास्त्रविद्भिरुपेक्षणीय एव। यत्र स्वविशेष्यान्वयिन्यन्वयः तत्र विशिष्टान्वयबोधः, अन्यथा तु उपलक्षितान्वयः, इत्येव विशिष्टान्वयोपलक्षितान्वययोर्भेदः। 'दण्डी कुण्डली' इत्यादौ विशिष्टान्वयबोधः नैव। दण्डकुण्डलयोः परस्परमन्वयाबोधात्। किं तु उपलक्षितान्वयबोधः, उपलक्षणयोः दण्डकुण्डलयोः प्रकारत्वं वर्तत एव। अतः उपलक्षितबोधेऽपि सविशेषत्वमपरिहार्यमेवेति सिद्धम्।

यद्यपि सामानाधिकरण्यत्रैविध्यमेव युक्तं न तु पारिभाषिक्य-पृथक्सिद्धिप्रक्रियेति भूषणीकारवचनं, तदपि न । तथा हि-श्रीभाष्यकारसिद्धान्ते सर्वत्रापि एकविधमेव सामानाधिकरण्यं, न तु विवर्ताद्वैतिनामिव सामानाधिकरण्यचतुष्टयम् । सामानाधिकरण्यत्रैविध्यप्रक्रियेति भूषणीकारवचनं स्वसिद्धान्तग्रन्थानामेवा-परामर्शं द्योतयति । तृतीयाध्याये भगवत्पादाः सामानाधिकरण्यं चतुर्धा, अध्यासेन, अपवादेन, एकत्वेन, विशेषणत्वेन चेत्याहुः । तत्र च विशेषणानि कानिचित् स्वविशेष्यात् पृथक्स्थित्यनर्हाणि, कानिचिच्च पृथक्स्थित्यर्हाणि, तत्र पृथक्स्थित्यर्हाणां सामानाधिकरण्यं मतुबादिसापेक्षं, यथा दण्डी देवदत्तः इति । तदनर्हाणां च मतुबादि-निरपेक्षतयैव सामानाधिकरण्यव्यपदेशः । खण्डो गौः, शुक्लः पटः, इति जातिगुणयोः । उभयत्रापि प्रकारत्वं परमविशिष्टमेव । एवं च व्यक्त्या साकमपृथक्सिद्धाया जातेर्वाचकानां शब्दानामिव आत्मना साकमपृथक्सिद्धशरीरवाचकानां मनुष्यादिशब्दानामपि आत्मपर्यन्तत्वं अवश्यमङ्गीकार्यमेव । जातेश्च व्यक्तिं प्रति प्रकारता च सर्वशास्त्रेष्वङ्गीक्रियत एव । एवं शरीरस्यापि आत्मैकाश्रयत्वात् आत्मैकप्रयोजनकत्वाच्च तत्प्रकारत्वं जात्यादितुल्यम् । अतश्च देवमनुष्यादिशब्दानां विशेष्यविशेषणभावेनैव सामानाधिकरण्यमित्यपि अकामेनाप्यङ्गीकर्तव्यमेव । स्थिते चैवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया, तत्प्रकारत्वाज्जीवात्मवाचिनस्सर्वे शब्दाः परमात्मपर्यन्ता एवेति 'तत्वमसी' त्यादावपि विशेष्यविशेषणभावेनैव सामानाधिकरण्यम् । अतश्च श्रीभाष्यकारसिद्धान्ते सर्वत्रापि एकविधमेव सामानाधिकरण्यमिति नेदं पारिभाषिकं सामानाधिकरण्यमपृथक्सिद्ध्या निरूप्यमाणम्, अपि तु शास्त्रज्ञसमयाङ्गीकृतं

च । तथा हि, पूर्वमीमांसायां आकृत्यधिकरणे आकृतेः व्यक्त्या साकं अपृथक्सिद्धप्रकारत्वमभ्युपेत्यैव सिद्धान्तः प्रवर्तितः । तत्र जातौ शक्तिर्वा, जातिविशिष्टशक्तौ वा इति विचारस्त्वन्यः । जातेरपृथक्सिद्धप्रकारत्वं तु उभयत्र तुल्यम् । तथा हि, आकृत्यधिकरणघटकषट्सूत्रेषु प्रथमं सूत्रं 'प्रयोगचोदनाभावात् अर्थैकत्वमविभागात्' इति अविभागशब्दघटितम् । एवमन्तिमं षष्ठं च सूत्रं 'तदर्थत्वात् प्रयोगस्याविभागः' इत्यविभागशब्दघटितमेव । अत्रोभयत्राविभागपदेन जातिव्यक्त्योः विभज्य स्थित्यनर्हत्वात् जातिवाचकानामपि शब्दानां व्यक्तिवाचकत्वं इत्युक्तं भवति । एवं स्थिते 'अविभागेन दृष्टत्वात्' इति ब्रह्मसूत्रे मुक्तब्रह्मणोरविभागप्रतिपादकत्वेन परेषामपि संमते, ऐक्याभेदशब्दं विहाय अविभागशब्दं प्रयुञ्जता सूत्रकारेणायमर्थस्सूचितः, यथा– जीवब्रह्मणोर्नैक्यं, किं तर्हि, विभज्य स्थित्यनर्हस्सम्बन्ध इति । अयमेव च संबन्धः सामानाधिकरण्ये मूलम् । एतत्सम्बन्धधीन ऐक्यव्यवहारः । 'प्रयागचोदनाभावादर्थैकत्वमविभागा' दित्याकृत्यधिकरणे जैमिनिना जातिगुणयोः व्यक्तिगुणिनोश्चाविभागेन अर्थैकत्वप्रतिपादनेन तद्वदेव जीवब्रह्मणोरपि अविभागेनार्थैक्यमिति व्यासाशयः पूर्वमीमांसारसिकानां निर्मत्सराणां विदुषां स्फुटः । अतः सामानाधिकरण्यं वेदान्तेष्वपि 'तत्वमसी' त्यादौ, जातिगुणादिशब्देष्विव विभज्यास्थित्यनर्हसंबन्धरूपापृथक्सिद्ध्यैवेति, नात्र पारिभाषिकार्थः श्रीभाष्यकारादृतः । अपि तु शाङ्कराणां चतुर्विधसामानाधिकरण्यकल्पनमेव तथेति न भूषणीकारप्रलापस्य मनागप्यवकाशः । श्रुतिश्च 'सलिल एको द्रष्टाऽद्वैतो भवति' इति सुषुप्तौ जीवब्रह्माद्वैतप्रतिपादिका परिदृश्यते । सुषुप्तौ च अविद्यायाः अन्तःकरणस्य च

विद्यमानत्वेन जीवब्रह्मणोरद्वैतं परमतेऽपि नात्र संभवति । अतः तत्रैवमर्थो वर्णनीयः. तत्प्रकरणे 'यद्वै तन्न पश्यति' इति 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' इति च श्रूयते । अत्र च न द्वितीयसामान्यस्य प्रतिषेधः । 'न द्वितीयमस्ती' त्येतावतैव तदा उपपत्तौ 'तत्' इत्यस्य वैयर्थ्यात् । अतः 'तत्' इन्द्रियसंबद्धमित्यर्थः । इन्द्रियसंबन्धविशिष्टवस्तुनो अभावश्च, इन्द्रियसंबन्धरूपविशेषणाभावनिबन्धनः । अतश्चात्र न द्वैतमिथ्यात्वस्य कथंचिदप्यवकाशः । 'ततोऽन्यद्विभक्तं यत् पश्येत्' इत्युत्तरत्र च विभक्तवस्तुदर्शनमेव न संभवतीत्युक्तं, न तु अन्यवस्तुसामान्यदर्शनं न संभवतीति । एवं चात्र विभक्तशब्दप्रयोगेण परमात्मनो अन्यत् ततो अविभक्तमित्येवार्थस्सूच्यते । सुषुप्तौ परब्रह्मणो अन्यस्य जीवस्य परमात्माविभागसत्त्वे मुक्तावप्यविभाग इत्याशयेन 'अविभागेन दृष्टत्वात्' इति सूत्रे अविभागशब्दः । 'यस्सर्वेषु भूतेषु तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्यत्र बद्धमुक्तयोः परशरीरत्वस्योक्तेः । एवं चाकृत्यधिकरणन्यायेन जीववाचिशब्दानां परमात्मपर्यन्तत्वं इति सूत्रकृदाशयस्त्वप्रकल्प्यः । अतश्च 'नीलमुत्पल' मित्यादौ यथा विशेष्यविशेषणभावे सामानाधिकरण्यं, तद्वदेव 'तत्त्वमसि' 'सत्यं ज्ञानं' इत्यादावपि । वेदे अध्यासस्य स्वीकारे वेदवाक्यानां सर्वेषामपि अप्रामाण्यापत्तेः, नाध्यासे सामानाधिकरण्यम् । अत एव च अपवादे सामानाधिकरणस्यापि नावश्यकता । अध्यासस्यैवाभावे अपवादस्य सुतरां दूरे निरस्तत्वात् । निस्संसर्गकनिष्प्रकारकार्थविषयकशाब्दबोधस्य विवर्ताद्वैतिभिर्विना कैरपि दार्शनिकैरनङ्गीकारात्, नाखण्डार्थे सामानाधिकरण्यं, अपि तु विशेषणविशेष्यभावैकसिद्धमेव सामानाधिकरण्यमिति श्रीभाष्यकाराणां प्रक्रियैवं

गरीयसी । अतः एकविधेनैव सामानाधिकरण्येन सर्वत्रोपपत्तिरिति निर्धारितं भवति । विस्तरस्तु सामानाधिकरण्यभङ्गवादपरीक्षासमालोचने कृतस्तत्रैव द्रष्टव्यः ।

'शास्त्रयोनित्वात्' इति सूत्रमपि परेषां प्रतिकूलमेवेति पूर्वमेव सुदृढमस्माभिर्निरूपितम् । अत्र च पूर्वमधिकरणद्वयेन च अधिकारी, विषयश्च निरूपितः । अनन्तराधिकरणद्वयेन च संबन्धप्रयोजने निरूपयिष्येते । अस्मिंश्च शास्त्रयोनित्वाधिकरणे ब्रह्मणः वेदान्तानां च संबन्धः निरूप्यते । तत्र 'तं त्वौपनिषदं पुरुषं' (बृ) 'वेदैरनेकैरहमेव वेद्यः' (कैवल्य), 'वेदैश्च सर्वैरहमेव वेद्यः' (गी) इत्यादिश्रुतिस्मृतिभिः बोध्यबोधकभावसंबन्धः उपनिषदां ब्रह्मतात्पर्यकत्वे च प्रतिपाद्यते । अभेदप्रतीतिनिर्वाहकप्रवेशसहपठितसृष्ट्यन्तर्गतजन्मादिकारणत्वस्य 'यतो वे' ति वाक्यतात्पर्यविषयता पूर्वाधिकरणे साधिता । युक्तं चेदं– 'तत्वमसी' त्यतः पूर्वं 'सन्मूलास्सोम्येमा प्रजाः' इत्यत्रोपक्रमोक्तकारणत्वमेव विवक्षितम् । उपक्रमोक्तं कारणत्वं तु दृष्टान्तानुगुण्येन 'बहु स्यां प्रजायेये' ति अभेदस्य, प्रवेशस्य, स्वपर्यन्तनामरूपव्याकरणयोश्च प्रतिपादनेन उपादानत्वरूपमेव । तदेव च 'सन्मूला' इत्यत्र विवक्षितमिति 'तत्वमसी' त्यत्रापि सर्वशरीरत्वनिबन्धनसर्वोपादानत्वेनैव अभेदो विवक्षित इति श्रौतसिद्धान्तः । न तु जीवब्रह्मणोस्स्वरूपैक्यं परीत्या विवक्षितमिति । जगत्कारणं ब्रह्म विचारयिषितमिति यदुक्तं तन्न घटते, कुतः, 'ब्रह्मणः प्रमाणान्तर (अनुमान) गम्यत्वात्' इति नैयायिकादयः प्रत्यवतिष्ठन्ते । तेषां निराकरणाय च अधिकरणमिदं प्रवृत्तम् । तत्र च 'शास्त्रयोनित्वात्' इत्यत्र शास्त्रं योनिः कारणं प्रमाणं यस्येति व्युत्पत्त्या शास्त्रैकगम्यत्वं ब्रह्मणः

विवक्षितमिति ब्रह्मविषयकानुमानादेरप्रवृत्तेर्न प्रमाणान्तरगम्यत्वमिति ब्रह्मविषयकविचार आरम्भणीय एवेति निष्पन्नम् । अत्र च शास्त्रशब्दस्य वेद इत्येवार्थः । वेदस्य च स्वतः प्रामाण्यं पूर्वतन्त्र एव सिद्धम् । यथा 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः तस्य ज्ञानमुपदेशोऽव्यतिरेकश्च अर्थे अनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति । सूत्रे चास्मिन् जैमिनीये 'बादरायणस्ये'ति पदेन बादरायणस्यापि ब्रह्मसूत्रकर्तुः वेदस्य स्वतः प्रामाण्यं संमतमिति सिद्धम् । अतः नात्र शास्त्रस्य (वेदस्य) स्वतः प्रामाण्यं पृथक् साधनीयम् ।

एतेन 'अनेन सूत्रेण प्रथमवर्णकेन वेदकर्तृत्वात् ब्रह्मणः सर्वज्ञत्वं साध्यते' इत्यारभ्य, सर्वज्ञत्वनिरूपणव्याजेन वेदापौरुषेयत्वं वेदस्वतःप्रामाण्यं च साधितम्' इति शतभूषणी परास्ता ।

वेदापौरुषेयत्वतत्त्वस्य, पूर्वतन्त्रतर्कपादान्तिमाधिकरणेन, वेदापौरुषेयत्वस्य च औत्पत्तिकसूत्रेणैव च सिद्धत्वेन अत्र पृथक्साधनीयत्वाभावात् । कार्यकारणभावस्यैव सांवृतत्वेन शांकरमते वेदकर्तृत्वात् ब्रह्मणः सर्वज्ञत्वसाधनं चायुक्तं, अधिकं तु पूर्वमावेदितम् । ब्रह्मणि शास्त्रगम्यत्वाभावादेव च शाङ्करमते द्वितीयाऽपि योजना न युक्ता । वृत्तिमात्रव्याप्यत्वेन शास्त्रगम्यत्वव्यवहारस्तु पारिभाषिकः नैव युक्त इति च आद्यसूत्रानुपपत्तिप्रदर्शनवेलायामनुपदमेवोक्तम् । शांकराणां मते वेदबौद्धागमयोरुभयमपि ब्रह्मभिन्नत्वेन व्यावहारिकसत्यत्वं उत प्रातिभासिकसत्यत्वं वेति बौद्धागमतुल्यत्वादप्रामाण्यमवर्जनीयमेव वेदस्य स्यात् ।

एतेन 'तथा चेश्वरकर्तृके अपौरुषेये वेदे बौद्धाद्यागमतुल्यत्वेनाप्रामाण्यापादनं निर्विशेषपरत्वे नावसरतीत्येतदवधारणार्थं प्रथमं वर्णकं', इत्यारभ्य, 'शास्त्रागम्यत्वेऽपि निर्विशेषस्य तस्याविद्यानिवृत्तिमात्रेण पर्यवसानात् वृत्तिव्याप्यत्वाद्वा' इत्यन्ता शतभूषणी निरस्ता। ब्रह्मस्वरूपबोधकवाक्यानां अविद्यानिवृत्तिमात्रपरत्वस्य वर्णनायोगात्, तथात्वे वा ब्रह्मणः शास्त्रप्रतिपाद्यत्वस्य क्लिष्टत्वात्। 'ब्रह्म वेद', 'ब्रह्मवित्' इत्यादौ मुख्यार्थत्यागापत्तेश्च।

यदपि च भूषणीकारो लिखति— 'प्रमाणस्य व्यावहारिकत्वं पारमार्थिकत्वं वा विषयव्यावहारिकत्वनिबन्धनं, न तु प्रमाणव्यावहारिकत्वनिबन्धनं, भ्रमाभिलापकवाक्यस्यापि व्यावहारिकत्वात्, तद्विषयस्य च प्रातिभासिकत्वात्। अनेनैव न्यायेन व्यावहारिकस्य वेदान्तस्य पारमार्थिकब्रह्मणि न व्याहन्यते' इत्यादि।

तदिदं स्वोक्तिव्याहतं प्रमाणानुभवादिविदूरं च। तथा हि— पारमार्थिक, व्यावहारिक, विभागं सिद्धवत्कृत्यव्यवहारोऽयं तत्स्थापकप्रमाणाभावादनुपपन्नः। बौद्धैः प्रदर्शितोऽयं पन्थाः, तत्प्रियैः शाङ्करैराद्रियमाणः

'तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना॥'

इति वदद्भिर्वार्तिककारैरेव समूलमुन्मूलितः। 'प्रमाणस्य व्यावहारिकत्वं पारमार्थिकत्वं वा विषयव्यावहारिकत्वपारमार्थिकत्वनिबन्धनं' इति वदन् भूषणीकारः 'वेदान्तशास्त्रस्य व्यावहारिकस्य पारमार्थिकब्रह्मणि प्रामाण्यं न विहन्यते' इति स्वोक्त्या व्याहतिमपि हि न जानाति। पारमार्थिकब्रह्मविषयकत्वाद्वेदान्तस्य पारमार्थिक-

प्रमाणत्वं किल वक्तव्यं भवति । एवमनुमानस्यापि पारमार्थिकाद्वितीयाभावत्वरूपमिथ्यात्वसाधकत्वे पारमार्थिकत्वमेव स्यात्, न तु व्यावहारिकत्वम् । न केवलमत्र परं व्याहतलेखनं आमूलाग्रं भूषणीकारः एवमेव विलिखति । स्थालीपुलाकन्यायेन अयमेक उद्घाटितः । आस्तामयम् । अतश्च प्रामाण्यद्वैविध्यकल्पनस्यायुक्तत्वात् तदादरे च बौद्धमतप्रवेशापत्तेरनिवार्यत्वेन शाङ्करप्रदर्शितोऽयं पारमार्थिकव्यावहारिकविभागोऽनुपपन्न एव । विस्तरस्तु पूर्वमेव कृतः ।

यदपि चेदमुच्यते भूषणीकृता ' अतः सर्वतर्कानुपपत्तावपि वेदान्तशास्त्रानुपपत्तिर्न लेशतोऽपि यदि तर्कपदेन मननमात्रं विवक्ष्यते, व्याप्यारोपेण व्यापकारोपरूपस्तर्कस्तु न वेदान्तशास्त्रम् । वेदान्तशास्त्रं तु वाक्यरूपमेव ' इत्यादि ।

तदिदं पर्यालोचयामः, निर्विशेषे हि उपादानत्वरूपधर्मोऽपि नास्ति, ब्रह्मशब्दप्रवृत्तिनिमित्तभूतश्च धर्मः नैव । एवं च ' सत्यपि वेदान्तवाक्येषु जगज्जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्याय वेदान्तविरोधि प्रमाणं भवन्न निवार्यते । श्रुतेस्सहायत्वेनैव तर्कस्याभ्युपेयत्वात् । तथा हि ' श्रोतव्यमन्तव्यो ' इति श्रुतिः ' इति शाङ्करभाष्योक्तार्थः सविशेष एव पर्यवस्यति, न तु निर्विशेषे । अतश्च श्रुत्याविरोधितर्कस्यैव प्रमाणतया परैरभ्युपगतत्वेन श्रुतेर्निर्विशेषसाधकत्वे बौद्धतर्काणामेव शरणीकरणीयतया तेषां सविशेषपरवेदवाक्यविरोधित्वेन प्रामाण्यविरोधित्वान्निर्विशेषवस्तुतर्काणामप्रवृत्तिरेव । अतः मननरूपतर्कविवक्षायामपि तस्य सविशेषपरत्वेन विरोधो अपरिहार्य एव ।

वस्तुतस्तु व्याप्यारोपेण व्यापकारोपरूपतर्कस्तु न वेदान्तशास्त्रम्' इत्यादिना भूषणीकृता यदुच्यते तदप्यसंगतं, भामत्यादिविरुद्धं च तथा हि। प्रकृत्यधिकरणभामत्यां व्याप्यारोपेण व्यापकरूपतर्कस्यापि कार्यकारणभावविषयकस्य ब्रह्मस्थापतयोपन्यासात्। शंकरभाष्ये शास्त्रयोनित्वाधिकरणप्रथमवर्णके 'तस्य महतो भूतस्य निश्वसितमेतत् ऋग्वेदः यजुर्वेदः सामवेदः इत्यादिवाक्योत्कीर्तनमात्रेण बौद्धागमस्य शास्त्रत्वेन साम्यशङ्का कथं परिहृता भविष्यति? बाधनभ्युपगममात्रस्य परपक्षनिराकरणासमर्थत्वात्।

यदपि चेदं भूषणी वदति— निर्विशेषवस्त्वतत्त्वतायां तु इत्यादिना श्रीभाष्यमते तृतीयसूत्रं व्यर्थमेवेति, तत् स्वमते सर्वसूत्रवैयर्थ्यमपर्यालोच्य अभिनिवेशमात्रेण यात्किञ्चन प्रलपनम्। तथा हि— सर्वप्रमाणाविषयत्वेन स्वीकृतस्य निर्गुणब्रह्मणः शास्त्रजन्यप्रमाविषयत्वस्यापि दूरत एव निरस्तत्वात् निर्विशेषवस्तु (ब्रह्म) वादिनां मत एव सूत्रमिदं व्यर्थम्, न तु श्रीभाष्यानुयायिनां मते। सर्वप्रमाणतात्त्विकत्वस्य सिद्धान्ते स्वीकारात् अनुमित्यैव ब्रह्मप्रमायाः जातत्वेन ब्रह्मप्रमापकस्य वेदान्तभागस्य ज्ञातार्थज्ञापकत्वेन न प्रामाण्यम्। 'अर्थे अनुपलब्धे तत्प्रमाणं बादरायणस्ये' ति जैमिन्युक्तेरिति शङ्कायां तद्वारणाय 'शास्त्रयोनित्वा' दिति सूत्रस्यावश्यकत्वात्। विवर्ताद्वैतिनां तु ब्रह्मणि निर्विशेषे अनुमानादेरिव शास्त्रस्याप्यप्रवृत्त्या 'शास्त्रयोनित्वा' दिति सुतरां विरुद्धमेवेति। विस्तरस्तु पूर्वमेव कृतः। निर्विशेषस्थापकप्रमाणविरहादेव च अप्रामाणिकवस्तुसिद्धेरयोगात् ब्रह्मणः प्रथमकोटेरपि वक्तुमयुक्तत्वात् चतुष्कोटिविनिर्मुक्तत्वमेवेति अद्वैतिनां माध्यमिकमतप्रवेशः अनिवार्य एव। अत एव एतेषां परमसुहृदः बौद्धाः 'तेषामल्पाप-

राधं तु दर्शनं नित्यतोक्तितः ।' इति अद्वैतिनां अल्पापराधं सोढ्वा स्वपक्षप्रवेशं सम्यक् प्रकाशयन्ति ।

यदपि प्रोच्यते भूषणीकृता 'समन्वयः तात्पर्यज्ञानविषयत्वं तच्च निर्विशेषब्रह्मणोऽपि यावद्वृत्तिज्ञानं व्यावहारिकं वर्तते' इत्यादि तदिदं प्रलोभनमात्रं । अखण्डाकारसाक्षात्कारस्यैव श्रुत्यनुभवादिविरुद्धत्वात् । असिद्धत्वाच्च कस्यापि । समन्वयशब्दश्च संबन्धवाची न तु तात्पर्यविषयत्ववाची इति च पूर्वमेवोक्तम् । श्रीभाष्यकारानुगृहीतसूत्रार्थस्वीकारे हि शक्यार्थस्य न त्यागः, प्रत्युत पूर्वसूत्राद्यानुगुण्यं चेत्यपि प्रागेव निरूपितम् । निर्विशेषब्रह्मणः यावद्वृत्तिज्ञानसत्वं व्यावहारिकतात्पर्यज्ञानविषयत्वस्वीकारे च ज्ञानविषयत्वरूपधर्माक्रान्तत्वेन सविशेषत्वमपरिहार्यमेव स्यात् । अखण्डसाक्षात्कारानन्तरं निर्विशेषता निर्विषयता भेदाभावो वा इत्यादेरर्थस्य स्वोत्प्रेक्षामात्रमूलत्वेन केनापि सूत्रेणासूचितत्वात् अप्रामाणिकत्वेन अयुक्तत्वमिति समन्वयः सूत्रकारसूचितः भेदैकनियत इति भेदं निराकुर्वतां अद्वैतिनां प्राणघातकमेव चतुर्थसूत्रम् ।

यदपि च भूषणीकृदभिधानम्— 'प्राचुर्यादिति हेतुः आनन्दरूपे ब्रह्मणि नान्वेतुमलमिति, तत् प्राचुर्यरूपहेतोः ब्रह्मण्येवान्वयाद् अन्यत्रानन्वयाच्चापरामर्शनिबन्धनम् । अत एव शंकराचार्या अपि एतत्सूत्रभाष्ये 'आनन्दप्रचुरत्वं च ब्रह्मणः मनुष्यत्वमारभ्योत्तरस्मिन्नुत्तरस्मिन् स्थाने शतगुणित आनन्द इत्युक्त्वा ब्रह्मानन्दस्य निरतिशयत्वावधारणा' दिति प्राहुः । अतश्च भूषणीकृल्लेखनं स्वभाष्यविरुद्धमपि ।

यदपि चेदं कल्पनं भूषणीकृतः— श्रीभाष्यकारमते अकामहतश्रोत्रियानन्दवत्वमेव प्राचुर्यं, 'स एको ब्रह्मण आनन्दः' इति

श्रूयमाणत्वात् । अतश्च प्राचुर्यादिति हेतुः आनन्दमयभिन्ने अकामहतश्रोत्रियेऽपि विद्यमानत्वात् व्यभिचरितः । अतः श्रीभाष्यकृद्व्याख्या न युक्ता– अपि कल्पतर्वादिप्रदर्शितरीत्या पुच्छब्रह्मपरत्वैवेति ।

तदिदं श्रुति, श्रीभाष्याद्यपरामर्शेन स्वोत्प्रेक्षामात्रविलसितम् । आनन्दवल्यां श्रुतिसंदर्भो हि 'सैषा आनन्दस्य मीमांसा भवति' इत्यारभ्य 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् ।' इति ब्रह्मणः आनन्दातिशयं प्रतिपादयति । अत्र 'स एको ब्रह्मण आनन्दः' इत्येतस्मादनन्तरं श्रूयमाणं 'यतो वाचो निवर्तन्ते' इत्यादि वाक्यमपि आनन्दप्राचुर्यावगमकमिति सूत्रे 'प्राचुर्या' दित्यत्र विवक्षितं प्राचुर्यं वाङ्मनसापरिच्छेद्यत्वरूपं अत एव निरतिशयानन्दत्वरूपमिति च विज्ञायते । एतादृशं च प्राचुर्यं ब्रह्मण एवानन्दमयस्य, नान्यस्येति, जीवे व्यभिचारापादानं तावन्नितरामयुक्तम् । विस्तरस्तु निर्विशेषब्रह्मणः आनन्दत्वभङ्गवादपरीक्षासमालोचने कृतस्तत्रैव द्रष्टव्यः । अत एव भगवद्भाष्यकारैः वेदान्तदीपे एवमनुगृहीतम् – "अस्मिश्चानन्दे 'यतो वाचो निवर्तन्त' इति वक्ष्यमाणात् प्राचुर्यात् अयमानन्दप्रचुरः परमात्मैवे' ति ।

एतेन अभ्यासप्राचुर्यशब्दयोः एकार्थकत्वात् सूत्रद्वये अन्यतरस्य वैयर्थ्यापादानमपि न घटते । पूर्वसूत्रे हि अभ्यासः 'आनन्दमयः' इति पक्षवाचकशब्दबलात् अर्थाभ्यासपरः । 'विकारशब्दान्नेति चेन्न' ति सूत्रे तु विकारशब्दादित्याक्षेपपरिहाराय 'प्राचुर्या' दित्यत्रापि प्राचुर्यार्थकशब्दादित्येवार्थः । अतः प्राचुर्यार्थकमयट्प्रत्यययुक्तं आनन्दमयपदम् । अतः नात्र जीवस्य प्रतिपाद्यत्वशङ्केति एतत्सूत्रार्थः । अतः नात्र गतार्थतापादनं कथमपि घटते ।

यदप्युच्यते भूषण्याम्— भृगुवल्ल्यां 'अन्नं ब्रह्मेति' पञ्चमपर्यायगतानन्दमयपदस्थाने आनन्दपदमात्रस्य प्रयोगात् आनन्दमयप्रतिष्ठात्वेन ब्रह्मवल्ल्यां निर्दिष्टं पुच्छं ब्रह्मैव मुख्यं ब्रह्मेति प्रतिपादयतीति । तदिदं इष्टापत्त्या परिहरामः । 'पुच्छं ब्रह्मे' ति परं न मृष्यते । प्रियमोदप्रमोदादीनां पक्षत्वादेरिव ब्रह्मणि पुच्छत्वस्यापि निरूपणमात्रत्वात् । अत एव भगवान् सूत्रकारः 'प्रियशिरस्त्वाद्यप्राप्तिः उपचयापचयौ हि भेदे', 'आध्यानाय प्रयोजनाभावात्' इत्यादिसूत्रैः प्रियमोदादेः पक्षत्वादिकमिव पुच्छत्वस्यापि केवलध्यानार्थत्वं दर्शयति । अतः 'आनन्दो ब्रह्मे' ति भृगुवल्लीवाक्यं न पुच्छं ब्रह्म प्रतिपादयति, अपि तु आनन्दमयमेव । भृगुवल्ल्यां हि मयट्प्रत्ययरहिततया— अन्न, प्राण, मनो, विज्ञान, आनन्दा' दीनां परामर्शो वर्तते । तत्र अन्नादीनां चतुर्णां अब्रह्मत्वं 'तपसा ब्रह्म विजिज्ञासस्वे' ति पुनः पुनः वरुणेन पित्रा भृगोः ब्रह्मविजिज्ञासार्थं तपसे प्रेरणात् अवगम्यते । आनन्दे तु तपसे अप्रेरणात् 'सैषा भार्गवी वारुणी विद्या' इति अभ्युपगमसूचनाच्च आनन्दस्यैव ब्रह्मत्वमवगम्यते । यथा ब्रह्मवल्ल्यां 'अन्योऽन्तरात्मा' इति चतुर्णां अन्नादीनां अन्तरात्मान्तरस्योपदेशादब्रह्मत्वम्, आनन्दमये तु आत्मान्तराद्युपदेशात् ब्रह्मत्वं तद्वत् । अतश्च भृगुवल्ल्यामपि ब्रह्मवल्ल्यनुरोधेन आनन्दस्यैव (आनन्दमयस्यैव) ब्रह्मत्वमित्येव युक्तम् । न तु पुच्छब्रह्मणः पूर्वसंदर्भवैघट्यात् । अन्यथा, शांकररीत्या आनन्दमयस्य ब्रह्मवल्लीनिर्दिष्टस्य कोशत्वेनाब्रह्मत्ववत् स्थानात्मकप्रमाणेनात्रापि आनन्दपदस्य अब्रह्मकोशरूपानन्दमयप्रतिपादकत्वमेवेति न ब्रह्मप्रतिपादकत्वं, प्राणादिवत् इत्यनुपपत्तिरपरिहार्यैव । अतः पुच्छब्रह्मवादः न केवलं सूत्रेष्वसूचितः सूत्रविरुद्धश्च, अपि तु

श्रुतिविरुद्धोऽपि इति विमर्शकैर्विभावनीयम् । श्रुतिविरुद्धार्थस्य तदर्थनिर्णयार्थं प्रवृत्तैस्सूत्रैः बोधयितुमशक्यत्वात् । तथा चेत् व्याख्येयतया मुख्यभूतानां श्रुतीनामेव बाधापत्तेः गुणत्वमेव (अङ्गत्वं) सूत्राणां न संभवेत्, यथा चार्वाकबौद्धादिसूत्राणाम् । अतः श्रुतिविरुद्धं स्वसंकेतमात्रसिद्धं निर्विशेषवादं परिकल्प्य तदनुरोधेन सूत्रेषु अन्यथानयनं स्वीकृत्य अत्र गुणे 'ह्यन्याय्यकल्पने' ति न्यायाश्रयणं तावत्, गुणत्वासंभवादेव भग्नम् । अपि तु शाङ्कररीत्या विरोधाधिकरणन्यायेन श्रुतिविरुद्धानां स्मृतिरूपाणां सूत्राणां अत्यन्तं बाध एव स्यात् । न हि श्रुतिविरुद्धं ब्रह्मणः अनानन्दमयत्वं भगवान् सूत्रकारः गुणपक्षपाती मनसाऽपि स्मरेत् । अतः 'पुच्छं . . अभ्यासात्' इति सूत्रक्रमं विहाय 'आनन्दमयो अभ्यासात्' इति निर्दिशन् सूत्रकारः पुच्छब्रह्मवादिनां पुच्छमुच्छिनत्त्येव । विस्तरस्त्वन्यत्र ।

'ईक्षत्यधिकरणे तु जगत्कारणमवान्तरतात्पर्यविषयतया प्रस्तुतं मायोपहितं चैतन्यमेवाद्वैते गोचरयति' इत्यादि भूषणीग्रन्थः अनुवादमपि न प्रयोजयति । 'जन्माद्यस्य यतः' इति सूत्रकारैः कण्ठतः प्रतिपादितमपि जगत्कारणत्वं यदि मुख्यतात्पर्यविषयो न भवति, कस्य तर्हि मुख्यतात्पर्यविषयता ? अनेनैव न्यायेन ब्रह्मणोऽपि निर्विशेषस्य सविशेषस्य वा न मुख्यतात्पर्यविषयता, अपि तु शून्यस्यैवेति पक्षः कथं विनिवार्येत ? शून्यनिर्विशेषयोरुभयोरपि सूत्रासूचितत्वं श्रुत्यादिविदूरत्वं च समानमेव । पूर्वप्रपञ्चित एव विषयः अत्रापि भूषणीकृता पुनः पुनः प्रपञ्चितः इति तद्दूषणमपि प्रागेव प्रपञ्चितमतः नात्र पृथङ्निराकरणं क्रियते ।

आनन्दमयाधिकरणानन्तरमन्तराधिकरणं, 'धर्मोपदेशात्', 'भेदव्यपदेशाच्चान्यः' इत्यादिसूत्रघटितं, धर्मविद्वेषिणां, भेदमपलपतां च विवर्ताद्वैतिनां प्राणान्तकरमेव ।

आकाशप्राणाधिकरणादीनां अद्वैतमत एव स्वारस्यमित्युपपादनार्थं प्रवृत्तः भूषणीकारः, श्रीभाष्ये तदस्वारस्यनिरूपणं स्वमुख्यकृत्यं मन्वानश्च श्रीभाष्योक्तं अनुवदति 'श्रीभाष्यमते न पूर्वपक्षः न वा सिद्धान्तः घटते । तत्र आकाशशब्देन आकाशस्य सूक्ष्मावस्था माया गृह्यते । सिद्धान्ते ब्रह्म सर्वजगदभिन्ननिमित्तोपादानं आकाशशब्दबोध्यमवधार्यते' इत्यादिना । तद्दूषणं तु 'तत्र च मायामात्रोपादानत्वं, सूक्ष्मावस्थोपादानत्वं वेक्षत्यधिकरणेनैव निरस्तमिति न पूर्वपक्षस्योत्थितिः' इत्यादिना क्रियते ।

अत्र अनुवादोऽपि दुरनुवादः अयथार्थश्च । न हि श्रीभाष्ये आकाशाधिकरणे आकाशशब्देन सूक्ष्मावस्था माया उच्यते इति पूर्वपक्षः कुत्राप्युपलभ्यते । तत्र हि भूताकाश इति पूर्वपक्षः ब्रह्मेति च सिद्धान्तः श्रीभाष्यकारैः प्रदर्शितः । शंकराचार्यैश्चैवम् । एवं स्थिते, श्रीभाष्ये माया आकाशशब्देन अभिधीयते पूर्वपक्षे इति कथनं तावत् स्वाज्ञानप्रकाशनमेव वञ्चनया वा । श्रीभाष्यदृष्ट्या आद्यपादस्य अयोगव्यवच्छेदपरत्वात्, ब्रह्मानङ्गीकारेण पूर्वपक्षः ब्रह्मण एव जगत्कारणत्वसिद्धान्तश्चेति सैद्धान्तिकी स्थितिः । एवं च भूषणीकृता आकाशाधिकरणे पूर्वपक्षसिद्धान्तयोरैक्योपादानं तु स्वाविद्यामात्रनिबन्धनम् । अनुवादस्यैव भ्रमदुष्टत्वात् तदनुबन्धीनि सर्वाण्यपि दूषणानि गलहस्तितानि भवन्ति । यथावस्थितभाष्यार्थमपि ज्ञातुं अपारयतः भूषणीकारस्य शतदूषणीनिरासार्थं प्रवृत्तिः महते विस्मयाय भवति ।

आकाशाधिकरणं विवर्ताद्वैतिनामेव प्रतिकूलम् । तथा हि । 'तल्लिङ्गा' दिति सूत्रोक्तं लिङ्गं हि न तावद्ब्रह्मणि तत्वतो वर्तते तन्मते । यदि चारोपितं लिङ्गं तर्हि तत्साध्यता ब्रह्मताऽपि आरोपितैव भवेत् । ततश्च पूर्वपक्षस्यैव विजयः प्राप्नुयात् । विषयवाक्यमपि अनन्तत्वज्यायस्त्वादीनां प्रतिपादकं तन्मतप्रतिकूलमेव । न हि सोपाधिके परिच्छिन्ने ब्रह्मण्यनन्त्वादिकं भवति । नापि निर्विशेषे शुद्धे ज्यायस्त्वादिकम् । न च ज्यायस्त्वमपरिच्छिन्नत्वमेवेति शुद्धे तस्य न विरोध इति वाच्यम् । अनन्तः इत्यनेन पुनरुक्तेः । अतः आकाशाधिकरणं परेषां प्रतिकूलमेव । अत एव प्राणाधिकरणमपि, आकाशन्यायस्यैव तत्राप्यतिदेशात् । ज्योतिरधिकरणमपि परेषां प्रतिकूलमेव । तथा हि, औपाधिकब्रह्मभेदकल्पनायाः श्रुतिविरुद्धत्वेनायुक्तत्वात् सगुणब्रह्मण एव उत्क्रान्त्या अर्चिरादिगतिप्राप्यत्वस्य तात्विकत्वात् विवर्ताद्वैतिनां चैतत्सर्वं विरुद्धमिति 'ज्योतिश्चरणाभिधानादि' ति सूत्रं अद्वैतिनां मरणायैवेत्याचार्योक्तिरप्रकम्प्यैव । यथा चैतदधिकरणघटकीभूतानां सूत्रं श्रीवैकुण्ठादिदिव्यलोकस्थापनपरत्वं तथा व्यक्तं प्राचां ग्रन्थेषु ।

इन्द्रप्राणाधिकरणमपि सर्वथा प्रतिकूलमेव विवर्ताद्वैतिनाम् । अध्यात्मसंबन्धभूम्नः त्रिविधोपासनस्य च तत्र प्रतिपादनात् । परमते हि कस्यापि गुणस्य ब्रह्मण्यभावादेव संबन्धिनः एकस्याप्यभावे एकस्यापि संबन्धस्याभावात् 'संबन्धभूमा ह्यस्मिन्' इति सूत्रं कथं घटताम् । एवमुपासनस्य तन्मते अपरमार्थत्वात् 'उपासा त्रैविध्यादाश्रितत्वादिह तद्योगात्' इति सूत्रांशोऽपि न घटते ।

एतेन इन्द्रप्राणाधिकरणस्य अद्वैतिनां आनुकूल्यं निरूपयिष्यन् श्रीभाष्यकाराणां मते तद्विरोधं साधयिष्यंश्च भूषणीकारः यल्लिखति

"एतेन इन्द्रप्राणाधिकरणमपि व्याख्यातम् । तत्र हि 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' तीन्द्रेण शास्त्रदृष्टस्वीयपारमार्थिकस्वरूपोपदेशः क्रियते इति संप्रतिपन्नम् । शास्त्रेण तु श्रीभाष्यदृष्ट्या सूक्ष्मचिद्विशिष्टं ब्रह्मोपदिश्यते । इन्द्रस्तु स्थूलचित्, न तु सूक्ष्मचित् । इन्द्रशरीरकं ब्रह्म च न शास्त्रदृष्टं ब्रह्मतत्वम् । मुक्तात्मनामेव शास्त्रदृष्टं ब्रह्मतत्वं भासते" इत्यादि ।

तदिदं श्रीभाष्यकृन्मताज्ञानादेव स्वोन्मादमूलकतया असंबद्धलेखनम् । तथा हि, अत्र च शास्त्रं स्थूलसूक्ष्मचिदचिदन्तर्यामिब्रह्मबोधकमेव विवक्षितम्, न तु भूषणीकृदुक्तादिशा सूक्ष्मचिदचिद्विब्रह्ममात्रबोधकम् । अनुपयोगात्, अयुक्तत्वाच्च । अत एव 'शास्त्रदृष्ट्या तु' इति सूत्रश्रीभाष्ये 'एष सर्वभूतान्तरात्मा', 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा', 'य आत्मनि तिष्ठन्' इत्येवमादीनि शास्त्रवाक्यानि श्रीभाष्यकारैरुद्धृतानि । अतः भूषणीकारलेखनं भ्रान्त्येति सिद्धम् । किं च अत्र हिततमापेक्षिणं प्रतर्दनं प्रति प्रज्ञातजीवभास्येन्द्रस्य स्वात्मन उपास्यत्वेनोपदेशः कथं घटतामिति शङ्कापरिहारायैव 'शास्त्रदृष्ट्या तूपदेशः' इति सूत्रं प्रवृत्तम् । अतः स्थूलचिद्रूपेऽन्तर्यामिभूतपरमात्मैवात्र अस्मच्छब्देन 'मामुपास्स्व' त्यत्र विवक्षितः इति वक्तव्यम् । तदैव च मामित्यनेनापि जीवान्तर्गतपरमात्मनो विवक्षणात् नात्र जीवमात्रविवक्षेति शङ्कापरिहारो भविता । अतः भूषण्युत्प्रेक्षणं न घटते । 'इन्द्रशरीरकं ब्रह्म न शास्त्रदृष्टं' इति भूषणीकारवचनमपि भूषणीकृतः शास्त्राद्रष्टृत्वमेव ज्ञापयति । 'अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि', 'यस्यात्मा शरीर' मित्याद्यनेकैरबाधितैश्शास्त्रैः

सर्वान्तर्यामित्वे ब्रह्मण्यवगते इन्द्रान्तर्यामित्वमप्यवगतमेवेति इन्द्र-शरीरकं ब्रह्म न शास्त्रदृष्टमिति वक्तुमपि जिह्वा जिह्वेति ।

किंच 'तं मामायुरमृतमित्युपास्वे' ति वाक्यं तावत् कौषीतकीस्थम् । कौषीतकीब्राह्मणं च ऋग्वेदान्तर्गतम् । एतद्ब्राह्मणो-पसंहारे च 'स म आत्मेति विद्यात्' इति वाक्यं परिदृश्यते । तेन च परमात्मनः इन्द्रान्तर्यामित्वं स्पष्टं बोधितम् । तस्यैव च 'आनन्दो अजरो अमृतः' इत्यादिना आनन्दत्वं नित्यत्वं च विव-क्षितमित्यपि सर्वैविदितम् । 'स म आत्मेति विद्यात्' इत्यत्र आत्मन्शब्दः अन्तः प्रविश्य नियन्तुर्वाचकः । कथमिति चेत् 'न वक्तुरात्मोपदेशात्' इति सूत्रखण्डे 'वक्तुरुपदेशात्' इत्यनभि-धाय आत्मशब्दयोजनेन 'स म आत्मेति विद्यात्' इति श्रुतिः पूर्वपक्षे अभिप्रेतेति प्रतीयते । तत्र च पूर्वपक्षिणोऽयमाशयः । 'मामेव विजानीहीत्याद्युपक्रमानुसारेण आत्मन्शब्दस्य न व्यापक-चेतनार्थकत्वं, किंतु लोके प्रयुक्तेन 'मम आत्मा' इत्यनेन तुल्यतया लोकदृष्ट्या 'म आत्मा' इत्यस्य अहमित्येवार्थः । 'स' इत्यस्य च 'एष लोकपालः एष लोकाधिपतिः एष सर्वेश्वरः' इति पूर्ववाक्य-प्रतिपन्न एवार्थः इति प्रतीयते । अतः 'स म आत्मेति विद्या' दित्यत्र आत्मन् शब्दार्थोऽपि इन्द्र एवेति । 'मामेव' इत्यत्र इन्द्र एव विवक्षितः, इति (पूर्वपक्ष्याशयः) । सिद्धान्तस्तु 'अध्यात्म-संबन्धभूमा' इति सिद्धान्तप्रतिपादकसूत्रखण्डघटकीभूतात्मन्शब्दः 'एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणे अर्पिताः' इत्यारभ्य, 'एष सर्वेश्वरः' इत्यन्तभागेन प्रतिपन्नः यः स एव 'स म आत्मेति' इत्यत्र आत्मन्शब्दार्थः इत्यभिप्रेत्य प्रयुक्तः । सूत्रे संबन्धशब्दश्च 'मे' इत्यत्र संबन्ध एव षष्ठ्यर्थः । पूर्वं

सर्वेश्वरात्मनः तद्भिन्नानां च संबन्धानां बहूनां प्रतिपादनादिति तात्पर्येण प्रयुक्तः । एवं च 'स म आत्मेति विद्यात्' इत्यत्र आत्मन् शब्दस्य व्यापकचेतनार्थकतया इन्द्रान्तर्याम्येव विवक्षितः । 'एष सर्वेश्वरः' इत्युक्तत्वात्तस्य नियन्तृत्वं च । अयमर्थः शास्त्रदृष्ट्या तूपदेशो वामदेववत् इत्यनन्तरसूत्रेणापि स्थाप्यते । एतत्सूत्रघटक- 'वामदेववत्' इति पदेन 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च' इति वाक्यं प्रत्यभिज्ञाप्यते । तत्पूर्ववाक्यं च 'तदात्मानमेवावैत्' इति । तत्रापि आत्मन्शब्दस्य वैयर्थ्यान्यथा अनुपपत्त्या पूर्वोपपादितरीत्यैव अर्थो वक्तव्य इति वामदेवस्यात्मैव अनुसंधानविषयतया विवक्षितः । अत एव तदुत्तरसूत्रे परस्य त्रिविधोपासनं विवक्षितमिति व्याससंमतार्थो वृत्तिकारादिभिः प्रदर्शितः। एवं च 'स म आत्मा' इत्यत्र इन्द्रान्तर्याम्येव विवक्षितः इति 'इन्द्रशरीरकं ब्रह्म न शास्त्रदृष्टं' इति भूषणीकथनं विदुषां विस्मय- मावहति । विस्तरस्तु अस्मद्गुरुचरणानुगृहीतगूढार्थसंग्रहभाव- प्रकाशादौ ।

यदप्याह भूषणीकारः— 'मुक्तात्मनामेव हि शास्त्रदृष्टं ब्रह्म भासते ।' इत्यारभ्य 'प्राणोऽस्मि' इत्यादावपि 'अहं ब्रह्मास्मि' इत्यादिवत् 'सर्वं खल्विदं ब्रह्म' इत्यादिवद्वा बाधायां अभेदे वा सामानाधिकरण्यमित्येव युक्तम्' इति तदिदं गगनार- विन्देन समीरारविन्दसाधनम् । मुक्तानां हि अपरोक्षतयैव सर्वान्तरभूतं ब्रह्मतत्त्वं भासते इति न तत्र शास्त्रापेक्षा । अतस्संसा- रिणामेव ब्रह्मतत्त्वावेदकशास्त्रापेक्षेति सर्वान्तर्यामित्वबोधकशास्त्रं दृष्ट्वा इन्द्रेण प्रतर्दनाय स्वान्तरात्मोपदेश इति न संकटं किञ्चित्। अत्र हि लोकदृष्ट्या इन्द्रस्यैव जीवात्मनो उपास्यत्वेनोपदेशः इति

शङ्का, अन्तर्यामित्वबोधकशास्त्रपरीक्षणेन इन्द्रान्तर्यामिपरतत्वोपास्यत्वसमर्पणेन न दोषः इति परिह्रियते ।

एतेन 'शास्त्रदृष्ट्या' इत्यत्र दृष्टिशब्देन वाक्यजन्यमपरोक्षज्ञानमपि न विरुध्यते इति सूत्रकारः सूचयति' इति भूषणीकारवचनमपि परास्तम् । अत्र पूर्वपक्षः लोकदृष्ट्या प्राप्तः, न हि लौकिकदृष्टिः अपरोक्षज्ञानरूपेति वक्तुं शक्यते । अतः तमद्व्यावर्तकशास्त्रदृष्टिशब्देऽपि शास्त्रजन्यतत्वज्ञानमेव विवक्षितम् । न तु शब्दजन्यापरोक्षज्ञानमितीति कुसृष्टिः । सर्वदर्शनविरुद्धत्वात् । श्रुतिविरुद्धत्वाच्च । 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादात् महिमानमीशम् ।' (कठ, श्वेताश्व.) इत्यादि वाक्यैः ध्यानानन्तरकालिकभगवदनुग्रहस्यैव दर्शनहेतुत्वप्रतिपादनात् । 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति मुण्डकश्रुतिरपीममेवार्थमनुमनुते । यथा च 'औपनिषद' मित्यत्र ताद्धितप्रत्ययस्य अपरोक्षज्ञानवाचकत्वासंभवः तथा शब्दजन्यप्रत्यक्षभङ्गवादपरीक्षासमालोचने प्रकटीकृतम् । विस्तरस्तु तत्रैवावगन्तव्यः । अतः मुक्त्यवस्थाभावेऽपि वामदेववदुपदेशो युज्यत एव ।

'अहं ब्रह्मास्मि, सर्वं खल्विदं ब्रह्मे' त्यादौ बाधायां अभेदे वा सामानाधिकरण्यमिति भूषणीव्यवहारोऽप्ययुक्तः । सर्वत्रापि विशेष्यविशेषणभावे सामानाधिकरण्यमिति एकस्यैव सामानाधिकरण्यप्रकारस्याङ्गीकरणेन सामानाधिकरण्यवैविध्यकल्पनस्यैव निर्मूलत्वात् । विशेष्यविशेषणभावे सामानाधिकरण्यं च शरीरात्मभावनिबन्धनसामानाधिकरण्य एव पर्यवस्यति । विस्तृतश्चायं बाधार्थसामानाधिकरण्यभङ्गवादपरीक्षासमालोचने । 'अहं ब्रह्मास्मि'

इत्यतः पूर्वं हि 'तदात्मानमेवावैत्' इति आत्मन् शब्दः श्रूयते। तस्य च अन्तःप्रविश्य नियन्तृवाचित्वं अन्यत्र श्रुतिषु सिद्धम्। अत्रापि तथैवाङ्गीकर्तव्यम्। अन्यथा आत्मशब्दाभावेऽपि 'अहं ब्रह्मास्मि इत्यवैत्' इत्येतावन्मात्रेण वेदनाश्रयस्यैव ब्रह्मणः अहमित्यनेन प्रतीत्या आत्मन्शब्दवैयर्थ्यात्। अतः 'अहं ब्रह्मास्मी' ति वेदनं अन्तर्यामिविषयकमेवात्र विवक्षितम्। अत्रैव पूर्वं 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इति चतुर्मुखादिसर्वशरीरेषु प्रवेशस्य 'नानेन किञ्च नानावृतम्' इत्यादिवाक्यपर्यालोचनया चतुर्मुखादिजीवान्तर्बहिर्व्याप्तेः आत्मशब्दार्थतयापि विवक्षितत्वेन 'तदात्मानमेवावैत् अहं ब्रह्मास्मि' इत्यत्र चतुर्मुखादिसर्वान्तर्यामिवेदनमेव विवक्षितम्। तादृशान्तर्यामिवेदनस्य विवक्षितत्वादेव 'तस्मात् तत् सर्वमत्राभवत्' इत्यनन्तरवाक्यस्यापि संगतिः। अत एव 'तद्यो देवानां प्रत्यबुध्युत स एव तदभवत् यथर्षीणां तथा मनुष्याणां तद्धै तत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति। तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति। स इदं सर्वं भवति।' इति तदनन्तरश्रुतिरपि अन्तर्यामिवेदनाभिप्राया संगच्छते। अतः 'अहं ब्रह्मास्मीत्यत्रापि सामानाधिकरण्यमिति यदि शरीरशरीरिभावाभिप्रायेण, तर्हीष्टापत्तिः; यदि चाभेदाभिप्रायेण, तर्हि प्रमाणविरोधः' इति भूषणीकृदापादनं नैव घटते। विस्तरस्त्वन्यत्र।

यश्चायं उल्लेखः भूषणीकर्तुः 'इन्द्रप्राणयोः वामदेवमन्वाद्योश्च परस्परं शरीरशरीरिभावाभावात् सामानाधिकरण्यं दुरुपपादमिति। सोऽप्ययुक्तः। 'तद्धैतत् पश्यन् वामदेवः' इत्यस्य हि अयमर्थः— ह शब्दो वृत्तार्थस्मरणे तदेतत् ब्रह्म पश्यन् उपासीनः वामदेवः,

अहं मनुरभवं सूर्यश्चेति, मदात्मैव मन्वादीनामात्मेति प्रतिपेदे। मन्वादिना सर्वेण स्वस्यैकात्म्यं साक्षात्कृतवानित्यर्थः, इति।

यदपि चेदं भूषणी वदति 'प्राणोऽस्मि प्रज्ञात्मा' इत्यादौ इन्द्रपदलक्षितचिन्मात्रप्राणयोः बाधायां सामानाधिकरण्यं विना नान्या गतिः। न हि इन्द्रप्राणयोरपृथक्सिद्धिः, शरीरशरीरिभावो वेति। तदिदं स्वभ्रान्तिवासनया न तत्वतः, बाधायां सामानाधिकरण्यस्यैवायोगात्। अत्र हि 'प्राणोऽस्मि प्रज्ञात्मा' इत्यस्मिन् वाक्ये जीवविशिष्टतया, अचेतनप्राणविशिष्टतया च ब्रह्मोपासनं प्रतर्दनं प्रति देवेन्द्रेणोपदिश्यते। तत्र प्रज्ञारूप आत्मा जीवः तथा च जीवशरीरकपरमात्मेत्यर्थः। अनेन चेतनरूपशरीरवैशिष्ट्यं ब्रह्मणि प्रतिपादितम्। 'प्राणः' इत्यनेन प्राणशरीरकोऽहं इत्यर्थः। तादृशं प्राणशरीरकं मां आयुरमृतमित्युपास्वेति वाक्यार्थः। अतः लक्षणाप्रसक्तेरेवाभावात् इन्द्रपदलक्षितचिन्मात्रव्यक्तेरिति भूषणी तावत् केवलस्वाज्ञानादेव प्रवृत्तेति विभावनीयम्। इन्द्रप्राणयोरपृथक्सिद्धेः शरीरशरीरिभावस्य वा अनङ्गीकारादेव तद्दूषणाय प्रयासो विफलः। अतः इन्द्रप्राणाधिकं भेदमुपजीव्यैव प्रवृत्तं परेषां विवर्ताद्वैतिनां प्राणवियोगकारणमेव संजातम्। एतदधिकरणान्तिमसूत्रं 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्।' इति। अत्र उपासात्रैविध्या 'दित्यस्य त्रैविध्यप्रसङ्गादिति व्याख्या शंकरभाष्ये प्रथमं परिदृश्यते। अत्र प्रसङ्गशब्दस्याभावेन तथा व्याख्यानमनुचितं मत्वा शंकराचार्याः 'अथवा उपासात्रैविध्यात्। त्रिविधमिह ब्रह्मोपासनं विवक्षितं, प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण चे' ति वृत्तिकारसंमतार्थमनिरूपयामासुः। अयमेवार्थः युक्तः सूत्रकृद-

भिप्रेतश्च । उपासनं च ध्यातृध्येयभेदनिबन्धनमिति अभेदज्ञानस्य नास्मिन्नधिकरणे अवसरः ।

किञ्च अस्मिन्नधिकरणे सूत्रचतुष्टयं परिदृश्यते । तत्र चादिमं सूत्रं 'प्राणस्तथा अनुगमादि' ति । सूत्रेऽस्मिन् अनुगमादिति शब्देन परब्रह्मसाधारणैर्धर्मैः उपक्रमप्रभृत्युपसंहारपर्यन्तवाक्यावगतैः जीवे असंभवन्निवेशैश्च परं ब्रह्मैवात्र प्रतिपिपादयिषितमिति निर्णीयते । अत्र तथेति निर्देशेन तथाशब्दघटकीभूतथाल्प्रत्ययस्य प्रकारवाचित्वेन निर्विशेषविवक्षा संभवानर्हा इति सूचितम् । द्वितीयसूत्रं च 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्' इति । अत्र वक्तुरात्मोपदेशादित्यत्र वक्तृशब्देन आत्मशब्देन च 'स म आत्मेति विद्यात्' इति अन्तिमवाक्यमत्राभिप्रेतमिति प्रतीयते । लोके हि वक्ता उच्चारयिता अहमर्थः इति हि प्रसिद्धिः । अत्र पूर्वपक्षे आत्मन् शब्दः 'मृदात्मको घटः' इतिवत् स्वरूपपरः । अतश्च 'म आत्मे' त्यत्र 'मामेव विजानीहि । तं मा मायुरमृतमित्युपास्वे' त्युपक्रमे वक्ता य इन्द्रः स एव प्रतिपिपादयिषितः इति पूर्वपक्षिण आशयः । अत्र वक्तुरिन्द्रस्य रूपद्वयं, सोपाधिकं, निरुपाधिकं च । सिद्धान्तपर्यालोचनायां सोपाधिकस्य निरुपाधिकस्य च श्रुतितात्पर्यविषयता नास्तीति हि प्रतीयते । कुत इत्युक्तौ 'संबन्धभूमा ह्यस्मिन्' इति संबन्धबहुत्वं सिद्धान्ते पूर्वपक्षिसंमतेन्द्रव्यावर्तकत्वेनोक्तम् । संबन्धबहुत्वकथनेन 'स म आत्मेति विद्यात्' इति वाक्येऽपि इन्द्रसंबन्ध्येव विवक्षितः, नत्विन्द्रः' इति च स्फुटं प्रतीयते । एतेन सोपाधिकस्य निरुपाधिकस्य च व्युदासः ।

एवं 'स म आत्मेति विद्यात्' इत्यत्र या सिद्धान्तसरणिः सैव स म आत्मा अन्तर्याम्यमृतः' इति बहुधा अभ्यस्तान्तर्यामिब्राह्मणवाक्येष्वपि योजनीयेति स्फुटम् । इदं च वाक्यद्वयं 'तत्त्वमसी' ति वाक्यसमशीलतया उपदेशसाहस्र्यां उभयव्यपदेशाधिकरणे च शंकराचार्यैरुदाहृतम् । अतश्च ऐतदात्म्यमिदं सर्वं इति पूर्ववाक्योक्तार्थ एव 'तत्वमसी' त्यत्र उपसंहृत इति विवक्षितमित्यनेनैव निर्धारितं भवति ।

'शास्त्रदृष्ट्या तु' इति तृतीयसूत्रे 'तदात्मानमेवावैत्' इति आत्मन् शब्दघटितशास्त्रमेव विवक्षितम् । विस्तरस्तु पूर्वमेव कृतः । एतदनन्तरं 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासा त्रैविध्यादाश्रितत्वादिह तद्योगात्' इति सूत्रविन्यासेन 'आत्मेत्येवोपासीत, आत्मानमेव लोकमुपासीत' इत्युपासनाप्रकरणस्थमेव तद्वाक्यं विवक्षितमिति प्रतीयते ।

अतः ज्ञानविशेषरूपोपासनस्यैव प्रतर्दनविद्याप्रतिपाद्यतया सूत्रकारैरुपन्यासात् सर्वास्वप्युपनिषत्सु उपासनस्यैव मुक्तिसाधनतया विधानेन उपासनसाध्यगतिद्वारा मोक्ष एव वृत्तिकार तदनुयायि श्रीभाष्यकारादीनां संमत युक्तः इति इन्द्रप्राणाधिकरणं विशिष्टाद्वैतिनामेवानुकूलम् । न तु उपासनाविद्वेषिणां, अत एव अगतिकानां विवर्ताद्वैतिनाम् । विस्तरस्तु अस्मद्गुरुसार्वभौमानुगृहीत त्रय्यन्तसारामृतादौ द्रष्टव्यः । यथा चैतदधिकरणसूत्राणां विवर्ताद्वैतविघटकत्वं, तथा विस्तरशः अस्मदीये सूत्रार्थमणिदर्पणे अवगन्तव्यम् ।

एतेन 'अत्र अखण्डस्यात्मतत्वस्य प्रथमाध्यायप्रथमपादे सर्वाधिष्ठानस्यावधारणात् 'अथातो ब्रह्मजिज्ञासेति प्रस्तुतम्'

इत्यारभ्य 'जीवब्रह्मैक्यं च तत्वमस्यादिमहावाक्यसिद्धमपि' इत्यन्ता शतभूषणी परास्ता।

तथा हि– प्रथमाध्याये प्रथमपादे सर्वाधिष्ठानं ब्रह्म प्रतिपाद्यते इति तु इष्टमेव। परंतु ब्रह्मणः अधिष्ठानत्वं सर्वात्मत्वरूपमेव। न तु जगद्भ्रमाधिष्ठानत्वम्। भ्रमस्यायोगात्। 'आनन्दमयाधिकरणे ब्रह्मतत्वमेव जीवतत्वमपीति अवधारणात्' इति भूषणी आनन्दमयाधिकरणसूत्रापरामर्शेनैव। तत्र हि आनन्दमयो जीवाद्भिन्नः इति 'नेतरो अनुपपत्तेः' इति स्पष्टं जीवस्य आनन्दमयत्वनिषेधादवगम्यते। एवं 'अस्मिन्नस्य च तद्योगं शास्ति' इत्यादिसूत्राण्यपि ब्रह्मतत्वस्य जीवतत्ववादप्रतिकूलानि। अतः आनन्दमयस्य जीवत्वं सूत्रकार एव प्रतिक्षिपति इति सूत्रविरुद्धं इदं भूषणीकथनम्। 'ब्रह्मविदाप्नोति पर' मिति प्राप्यं ब्रह्मैव ब्रह्मवल्ल्यां प्रथमतः उपाक्षिप्तम्। 'आप्नोति' इति पदसमभिव्याहारात्। तस्यैव च जगत्कारणत्वं, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति प्रतिपादितम्। तस्यैव 'सर्वान् कामान्' इति अनन्तकल्याणगुणयोगः प्रतिपादितः। एवं प्रथमं प्राप्यतयाभिहितस्य ब्रह्मण एव अन्नप्राणमनोविज्ञानमयेभ्यः व्यतिरिक्तता आनन्दमयता च प्रत्यपादि। प्राप्यं च ब्रह्म ध्यानेनैव उपासनात्मकेन प्राप्यते नान्यथेति, 'यदा ह्येवैष एतस्मिन्नदृश्ये . . . अभयं प्रतिष्ठां विन्दते' इत्यभ्यधायि। यथाचास्य वाक्यस्य ध्यानप्रतिपादकत्वं तथा पूर्वमेव स्पष्टमभिहितम्। तस्यैव च ध्येयस्य जगत्कारणस्य जीवविलक्षणस्य अपरिच्छिन्नानन्दत्वं प्रतिपाद्यते 'सैषानन्दस्य मीमांसा भवति' इत्यारभ्य 'यतो वाचो निवर्तन्ते' इत्यन्तवाक्यजातेन। तादृशापरिच्छिन्नानन्द(मय)ब्रह्मज्ञानादेव भयाभावोऽप्यभिहितः। भृगुवल्यामपि वरुणेनैव भृगुं स्वपुत्रं

प्रति अन्नादिव्यतिरिक्त आनन्द आत्मा प्रतिपादितः । भृगुवल्ल्यन्ते च ब्रह्मप्राप्तिः, 'अहमन्नादः' इत्यादिना ब्रह्मानुभवः सर्वलोकसंचारादिरूपमुक्तिफलं चेत्यादिकं विशदं निरूपितम् । अत एव च सूत्रकारः 'मान्त्रवर्णिकमेव च गीयते' इत्यस्मिन् सूत्रे 'सत्यं ज्ञानमनन्तं ब्रह्मे' ति मन्त्रवर्णप्रतिपादितं ब्रह्मैव 'एतत्साम गायन्नास्ते' इत्यादिवाक्यैः मुक्तैः प्राप्यत्वेन गीयते इत्याह । एवमर्थाङ्गीकार एव गीयत इति पदस्वारस्यम् । एतत्सर्वं विवर्ताद्वैतभञ्जकम् । तन्मते ब्रह्मणः प्राप्यत्वाभावात्, उपासनायाः भ्रमत्वात्, जीवब्रह्मणोः भेदाभावात्, ब्रह्मणो निर्गुणत्वात्, जगत्कारणत्वस्य सांवृतत्वात्, आनन्दमयस्याब्रह्मत्वात्, ब्रह्मानुभवस्याप्यभावाच्चेति । अतः आनन्दवल्ली विवर्ताद्वैते दुःखवल्ल्येवेति तद्विषयमानन्दमयाधिकरणमपि परेषां दुःखमयमेव । सूत्रकारोऽपि भगवान् आद्यसूत्रे 'अथातो ब्रह्मजिज्ञासे' ति प्राप्यं ब्रह्मैव सूचयामास । 'मुक्तोपसृप्यव्यपदेशाच्चे' त्याद्यनेकैस्सूत्रैः उत्तरत्र ब्रह्मणः प्राप्यत्वस्य कण्ठत एवोक्तेः । तस्यैव च जगत्कारणत्वलक्षणं 'जन्माद्यस्य यतः' इत्यसूत्रयत् । परमते आद्यसूत्रे निर्विशेषाखण्डब्रह्मविचारप्रतिज्ञायां द्वितीयसूत्रस्य तिलाञ्जलिरेव । तात्त्विकस्य जगत्कारणत्वस्य तन्मते अभावात् । एवं सर्वाण्यपि प्रथमपादघटकीभूताधिकरणानि विवर्ताद्वैतप्रतिकूलान्येवेति सूत्रकार एव स्पष्टं सूचयति । उपास्यब्रह्मण एव विचारविषयतेत्यङ्गीकर्तृवृत्तिकारतदनुयायि श्रीभाष्यकाराणां मते उपक्रमोपसंहारस्वारस्यम् । 'उपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति हि प्रथमाध्यायोपसंहारसूत्रम् । तदिदं ब्रह्मोपासाविद्वेषिणां कथं घटताम् ? न केवलं प्रथमपादोपसंहारसूत्रं परं अद्वैतिनामननुकूलं, किं तर्हि, मुक्तैश्वर्यप्रतिपादकशारीरकशास्त्रान्तिमाधिकरणमपि ।

तत्र प्राप्यस्य उपास्यस्य ब्रह्मणः प्राप्त्यनन्तरं यादृशं ऐश्वर्यं उपासकस्य मुक्तस्य भवति तदेव किल प्रतिपाद्यते । तादृशं चैश्वर्यं विवर्ताद्वैतिनामनिष्टमेवेति शास्त्रोपसंहाराधिकरणमपि प्रतिकूलमेव । मध्यघटकीभूतानां विरोधस्तु स्पष्ट एव तत्तत्सूत्रपर्यालोचनायामिति नैकमपि सूत्रं विवर्ताद्वैतानुकूलम् । विस्तरस्तु अस्मदीये सूत्रार्थमणिदर्पणे । अतः शतभूषणीकारभ्रान्तेः सर्वथा नैवावकाशः ।

'ब्रह्मपदात्मपदयोरेकार्थकत्वेन 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' ।' इति ब्रह्मात्मनोरैक्योपदेशः उपपद्यते ।' इति भूषणीवचनं चायुक्तम् । ब्रह्मात्मन्शब्दयोः एकार्थत्वं सिद्धान्तेऽपि संमतमेव । तत्र आत्मन्शब्दः व्यापकवस्तुवाचकः, तत्र ब्रह्मणः स्वरूपेणैव सर्वत्र व्याप्तिः, जीवस्य आत्मन्शब्दव्यपदेशस्तु प्रभया दीपस्येव धर्मभूतज्ञानद्वारा व्याप्तिनिबन्धनः । अत एव,

'यच्चाप्नोति यदादत्ते यच्चास्ति विषयानिह ।
यच्चास्य सन्ततो भावः तस्मादात्मेति गीयते ॥'

(लिंगपुराणं.)

इति स्मृतिनिरुक्तात्मशब्दनिर्वचनं संगच्छते । स्मृतौ चास्यां जीवात्मैव निरुच्यते । तस्य च 'यश्चायं सन्ततः' इत्यनुक्त्वा 'यश्चास्य सन्ततो भावः' इत्युक्त्वा, धर्मभूतज्ञानघटितव्यापकतैव विवक्षितेति प्रतीयते । अत एव च भावशब्दसार्थक्यम् । एवं च जीवपरयोरुभयोरपि आत्मन्शब्देन व्यपदेशे समाने कुत्रचित् व्यावृत्तिं परमात्मनि बोधयितुं परशब्देन विशेष्यते यथा 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।' (गी.) 'परमात्मा च सर्वेषामाधारः परमेश्वरः ।' इत्यादौ । एवं यत्र परपदसमभिव्याहाराभावः

तत्र प्रकरणविशेषादेव विशेषनिर्णयः । यथा सैन्धवशब्दादौ । तत्र 'आत्मन आकाशः संभूतः' इत्यादौ ब्रह्मण एव प्रधानतया प्रस्तुतत्वात् तद्वाचकत्वमेव, न तु जीववाचकत्वम् । सूत्रेष्वपि स्पष्टमेतत् । यथा 'आत्मगृहीतिरितरवदुत्तरात्, 'आत्मेति तूपगच्छन्ति' इत्यादौ आत्मन्शब्दस्य परब्रह्मवाचकत्वेऽपि 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इत्यादौ जीववाचकत्वस्य आत्मन्शब्दे अङ्गीकारात् । अत बहुतरप्रमाणसिद्धजीवब्रह्मभेदः नात्र प्रच्यावयितुं शक्यते । प्रत्युत एतत्प्रकरणविरुद्धत्वं च । 'उपसंक्रम्य' उपसंक्रामति, इत्यादिना प्राप्तेः भेदैकनियततायाः प्रतिपादनेन तद्विरुद्धाभेदकल्पनायाः निर्मूलत्वात् । आनन्दमयपर्याये 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' इत्यस्य चायमर्थः । पूर्वस्य विज्ञानमयान्तपदार्थस्य आत्मभूत एष आनन्दमय आत्मा, तस्य आनन्दमयस्य आत्मेत्यर्थः । ततश्चानन्यात्मत्वमेवोक्तं भवति । न च पूर्वेषु पर्यायेषु 'तस्यैष एव शारीर आत्मे' त्यस्य अनन्यात्मप्रतिपादकत्वादर्शनात् अस्मिन् परं तदाश्रयणे अर्थवैरूप्यं संभवेदिति वाच्यम् । पूर्वेषु पर्यायेष्वनुक्तस्य ब्रह्मावयवत्वस्येह निरूपणात् 'तस्माद्वैतस्मादानन्दमयात्, अन्योऽन्तर आत्मे' ति निर्देशाभावाच्च एतत्पर्यायगतस्य 'तस्यैष शारीर आत्मे' त्यस्य अनन्यात्मत्वमेवार्थः । अतः जीवब्रह्मणोरैक्योपदेश इति कथनं उपनिषदपरामर्शनैव ।

'स यश्चायं पुरुषे । यश्चासावादित्ये । सः एकः ।' इति अभेदः ब्रह्मवल्ल्यां स्पष्टमुपदिश्यते ।' इति भूषणीकृदभिधानमपि नैव घटते । अत्र आदित्यमण्डले विद्यमानस्य पुरुषपदवाच्यजीवे विद्यमानस्य च अभेदः प्रतिपाद्यते, न तु जीवब्रह्मणोरैक्यम् । तादृशपदाभावात्,

सप्तमीविरोधात्, 'एतमानन्दमयमात्मानं उपसंक्रामति' इत्युत्तरवाक्यप्रतिपादितप्राप्तिसूचितप्राप्यप्राप्तृभावविरोधाच्च । अतश्चैतद्वाक्यस्यायमर्थः । 'यो वेद निहितं गुहाया' मिति पूर्वं उपासनं अभिहितम् । ज्ञानसामान्यवाचिनः विदिधातोः ध्यानरूपविशेषपरत्वस्य पूर्वमेव स्थापनात् । एवं च तादृशोपास्यः कीदृशविग्रहविशेषविशिष्टः को वा देवताविशेषः इत्याकांक्षायां 'स यश्चाय' मित्यादिवाक्यं प्रवृत्तम् । छान्दोग्यान्तरादित्यविद्यायां 'य एषो अन्तरादित्ये .... तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादिना आदित्यमण्डलान्तर्वर्तिकमनीयविग्रहयुक्तो यः पुण्डरीकाक्षः स एव हृदयगुहावर्ती विज्ञानमयादनन्तरः । ततश्च पुण्डरीकाक्षादिविग्रहोपेतः नारायण एवेत्यर्थः । एवं चोपास्यविशेषसमर्पणमप्यनेन कृतं भवति । उत्तरवाक्ये 'एवं वित्, अस्माल्लोकात् प्रेत्य' इत्यनेन सर्वेषां ब्रह्मविदामर्चिरादिमार्गः उक्तो भवति । 'आनन्दमयमात्मानं उपसंक्रामति' इति मुक्तिदशायां ब्रह्मजीवयोरुपास्योपासकयोः भोग्यभोक्तृभावप्रतिपादनेन जीवब्रह्मैक्यपक्षः निरस्तो भवतीति 'स यश्चाय' मित्यादिवाक्यस्य ऐक्यसाधनाय भूषणीकारलेखनं 'भक्ष्याशया हि मञ्जूषां दष्ट्वाखुस्तेन भक्षितः' इति न्यायमेवानुसरति ।

'जीवब्रह्मैक्यं च तत्वमस्यादिसिद्धमपी' ति भूषणीकारवचनमपि छान्दोग्यश्रुत्यपरामर्शेनैव प्रवृत्तम् । 'तत्वमसी' ति वाक्यं उपसंहारवाक्यम् । अतः उपक्रमोक्तार्थं एवात्रोपसंह्रियत इति तावदङ्गीकर्तव्यम् । उपक्रमे 'ऐतदात्म्यमिदं सर्वं' इति श्रूयते । ऐतदात्म्यमित्यत्र च 'एतत् सत् आत्मा यस्य सर्वस्य, तत् एतदात्म । एतदात्मनो भावः ऐतदात्म्यम्' इति शांकरभाष्यम् ।

अतश्च ऐतदात्म्यं एतदात्मकं, एतदन्तर्यामिकमित्यर्थः । अत्र हि सर्वमित्यत्र 'सन्मूलास्सोम्येमाः प्रजाः' इति पूर्ववाक्ये सन्मूलत्वेनोक्तप्रजासामान्यमर्थः । प्रजाशब्दश्च न जनिमदचेतनमात्रबोधकः, किंतु जीवार्थकोऽपि । 'इमाः सर्वाः प्रजाः सति संपद्य न विदुः, इमाः प्रजाः सत आगम्य न विदुः' इति इत्युत्तरवाक्यानुरोधात् । संमतश्चायमर्थः परेषामपि । अत्र च प्रजाशब्दः बद्धचेतनसामान्यवाची । 'सो आत्मानं अभिध्यात्वा बह्वीः प्रजा असृजते' ति मैत्रायण्यनुसारात् । एवं च बद्धचेतनसामान्यस्य 'स आत्मा' इत्यत्र स अन्तर्यामी इत्यर्थः । 'तत्वमसि श्वेतकेतो' इति च प्रागुक्तार्थनिगमनम् । 'श्वेतकेतो' इत्यस्यापि नवकृत्वः अभ्यासो वर्तते । श्वेतकेतुश्च शरीरभिन्नात्मज्ञानवानेव । द्वादशवर्षं साङ्गवेदाध्यनानन्तरं प्रतिनिवृत्तस्य श्वेतकेतोः शरीरात्मभावासंभवात् । अतश्च श्वेतकेतुशब्दः तत्संयुक्तजीवपरः । श्वेतकेतुरप्येवमेव हि जानाति । एवं संबोधनस्य इदं तात्पर्यम्– यथा जीवस्य शरीरान्तःप्रवेशरूपसंयोगात् श्वेतकेत्वादिशब्दाः तत्संयुक्तजीवाभिधायकाः, तथा 'ऐतदात्म्यं इदं सर्वं' इत्यत्र सर्वस्य सदन्तर्यामिकत्वबोधनेन संबोध्यार्थकः 'तत्वमसि श्वेतकेतो' इत्यत्र युष्मच्छब्दः जीवान्तर्यामिणं परमात्मानमेव प्रतिपादयतीति । 'ऐतदात्म्यमिदं सर्वं' मित्येतत्पूर्वकमेव 'तत्वमसी' त्यस्य नवकृत्वः अभ्यासो वर्तते । अतश्च जीवब्रह्मणोर्भेदेन ब्रह्मणो जीवान्तर्यामितया श्वेतकेतुशब्दस्येव त्वमित्यस्यापि तदन्तर्यामिपरता स्फुटं प्रतीयते निर्मत्सराणां विदुषाम् । अत अत्रैक्यविवक्षणं तावत् शरीरात्मनोरभेदज्ञानमिव सर्वथा असंगतमेव । विस्तरस्तु ऐक्योपदेशान्यानुपपत्तिभङ्गवादपरीक्षासमालोचने अवगन्तव्यः । यथा च सामानाधिकरण्यमेकविधमेव ।

तच्च शरीरात्मभावनिबन्धनमेव । अन्तर्यामिब्राह्मणस्य अन्यस्य वा श्रुतिजातस्य तत्रैवानुकूलत्वादिस्थादिकं सम्यगुपपन्नं भवति, तथा आनन्त्यनिरूपणवादपरीक्षासमालोचने विस्तरेण कृतः तत्रैवाव- गन्तव्यः ।

वाक्यं लक्षणया स्वरूपमात्राभेदपरमपि इति भूषणी अनुवादमप्यनर्हति, धर्मापुरस्कारेण स्वरूपमात्रस्य शब्देन लक्षणया शक्त्या वा बोधयितुमशक्यत्वात् । विस्तरस्तु अखण्डवाक्यार्थखण्डन- परीक्षासमालोचनादावसेयः । अतः प्रथमाध्यायप्रथमपादस्याद्वैत- प्रतिकूलत्वे सिद्धे, द्वितीयादिपादत्रयमपि 'मुक्तोपसृप्यव्यपदेशाच्च, उभयेऽपि हि भेदेनैनमधीयते, सुषुप्त्युत्क्रान्त्योर्भेदेन, त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इत्यादि भेदविषयकानेकसूत्रघटितं विवर्ता- द्वैतविरुद्धमेव । अत्र एतद्विषयस्य भूषण्यामप्रपञ्चितत्वात् नास्माभि- रपि तत्र प्रयत्यते । अस्मदीये सूत्रार्थमणिदर्पणे तु स्पष्टं तत् ।

अविरोधाध्यायस्तु विवर्ताद्वैतविरोधावहः इति सुप्रसिद्धम् । अस्मिंश्चाध्याये सांख्यकाणादसौगतजैनपाशुपतानां दर्शनेषु असा- मञ्जस्यं प्रतिपाद्यते । तत्र सौगतानां मतनिरासः याभिर्युक्तिभिः क्रियते, ताभिरेव विवर्ताद्वैतिनामपि निरासो भविष्यत्येव । उभयोरपि सत्यद्वयाङ्गीकरणस्य असत्त्वात् सत्यासिद्धेः प्रपञ्चस्य स्वाप्निकतुल्यत्वादेश्च समानत्वात् । अतश्च भगवान् सूत्रकारः तर्कपादे (अविरोधाध्यायद्वितीयपादे) 'वैधर्म्याच्च न स्वप्नादिवत्', 'न भावोऽनुपलब्धेः, सर्वथा अनुपपत्तेश्च' ब्र. सू. २. २. २८, २९, ३०. इत्यादिभिस्सूत्रैः वासनास्वीकारेण सर्वशून्यतावादिनां सौग- तानां मतमिव अविद्यास्वीकारेण प्रपञ्चापलापं कुर्वतां प्रपञ्चस्य

'स्वप्ने मयि यथा दृष्टे' (गौडपादः) 'स्वप्नव्यवहारस्येव प्राक् प्रबोधात्' (शं. भा.) इत्यादिना स्वप्नतुल्यत्वं च वदतां विवर्ताद्वैतिनां मतमपि निरस्यत्येवेति, अविरोधाध्यायः अद्वैतिनां विरोधमेवावहति। विस्तरस्तु पूर्वमेव कृतः (२६–३०) तत्रैवावगन्तव्यः। अतश्चाविरोधाध्यायः विवर्ताद्वैतस्य अन्तरङ्गः बहिरङ्गश्च परिपन्थी। एवं विवर्ताद्वैतिभिः जीवात्मनि ज्ञातृत्वकर्तृत्वादेर्वस्तुतः अनङ्गीकारेण तत्प्रतिपादकज्ञाधिकरणकर्त्रधिकरणादीनामपि अविरोधाध्यायतृतीयपादघटकीभूतानां तन्मतविरुद्धत्वात् अविरोधाध्यायस्य तन्मतपरिपन्थिता बोध्या। जगत्कारणत्वस्य पूर्वाध्याये ब्रह्मनिष्ठतया जन्मादिसूत्रैर्निरूपितस्य विरोधपरिहारार्थं प्रवृत्तत्वात् किलैतदध्यायस्य अविरोधाध्यायत्वेन व्यवहारः। शांकराणां दृष्ट्या जगत्कारणत्वादेः ब्रह्मनिष्ठस्य सविशेषापत्तिभिया तैरनङ्गीकारात् तद्विरोध एव तेषामनुकूल इति, तदविरोधप्रदर्शकः सूत्रकारः सर्वथा परिपन्थी, न संशयः। विस्तरस्त्वन्यत्र।

यच्चात्र भूषणीकारो वदति—'अविरोधाध्यायश्च श्रीभाष्यकाराणां अन्तरङ्गो बहिरङ्गश्च विरोधी तत्र च प्रधानं निदर्शनं अविरोधाध्यायद्वितीयपादे सांख्ययोगवैशेषिकनैयायिकसौगतार्हतपाशुपतदर्शनानामिव पाञ्चरात्रदर्शनस्यापि सूत्रकारैर्निवेशन'मित्यादि।

तदिदमसंबद्धं श्रीभाष्यकृद्विद्वेषैकमूलकम्। तथा हि—तर्कपादे योगदर्शननिराकरणं वर्तते इति भूषणीकारलेखनं भूषणीकर्तुः ब्रह्मसूत्रादर्शनमेव ज्ञापयति, योगमतनिरासकस्यैकस्यापि सूत्रस्य तर्कपादे अनुपलंभात्। सूत्रकृता भगवता बादरायणेन अन्यत्र महाभारतादौ,

'गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः ॥'

इत्यारभ्य महता प्रबन्धेन पञ्चरात्रप्रक्रियां प्रतिपाद्य,

'इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥' इत्यादिना पञ्चरात्रप्रामाण्यं साधयन् अत्र परं कथं तदप्रामाण्यं ब्रूयात् । अतः पाञ्चरात्रप्रामाण्यमेव एतदधिकरणे सिषाधयिषितम् । न च कथं तर्हि इतरदर्शननिराकरणपरैतत्पादे निवेश इति वाच्यम् । ब्रह्मनिष्ठश्रौतोपादानत्वपरिपन्थिदर्शनानामेवात्र निरसनीयत्वेन पाशुपतपर्यन्तदर्शनानामेव तथात्वेन तेषामेव निरसनीयकोटिप्रवेशः, न तु तदनुकूलपञ्चरात्रदर्शनस्य । ब्रह्मोपादानत्वादेरत्रापीष्टत्वात् ।

एतेन 'सांख्यपाशुपतादिप्रायपठितं पाञ्चरात्रदर्शनमपि वेदविरुद्धांशे ब्रह्मोपादानत्वादौ अप्रमाणमेवेति मन्यते' इति भूषणी परास्ता । अत्र 'वेदविरुद्धांशे ब्रह्मोपादानत्वादौ' इति लेखनं अज्ञानैकमूलकं, ब्रह्मोपादानत्वस्य वेदविरुद्धत्वाभावात् ।

अतः ब्रह्मानुपादानत्वादाविति भाव्यम् । तदप्ययुक्तम् । पाञ्चरात्रे ब्रह्मोपादानत्वस्यैवाङ्गीकारेण तदनुपादानत्वावर्णनात् । संमतं चैतत् शंकराचार्याणामपि । यथा उत्पत्त्यसंभवाधिकरणारम्भभाष्ये 'येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमेवेश्वरः अभिमतः तेषां पक्षः प्रत्याख्यातः । येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणं ईश्वरो अभिमतः तेषां पक्षः प्रत्याख्यायते' इति भाषणात् । अतः भूषणीकारपंक्तिरनुपपन्नैवेति स्वपंक्त्यर्थमपि भूषणीकारो न जानाति । एवं च पाञ्चरात्रस्य वेदाविरुद्धत्वं नास्ति इति तदप्रा-

माण्यं न सूत्रकारसंमतम् । अतः श्रीभाष्यकाराणां तत्प्रामाण्य-साधनप्रवृत्तिरपि न विरुद्धा । केवलं संगतिलोभवशात् इतरप्रमाण-विरुद्धपाञ्चरात्राप्रामाण्यस्य साधयितुमशक्यत्वात् अयुक्तत्वाच्च ।

अथवा श्रौतब्रह्मोपादानत्वप्रतिपादकपाञ्चरात्रस्य अप्रामाण्यं ये प्रतिपादयन्ति, तेषां पक्षोऽपि परपक्ष इति परपक्षनिराकरणपरे अस्मिन् पादे संगतिरपि सुलभैव । विस्तरस्तु अस्मद्गुरुचरणानुगृहीत-हयशिरोरत्नभूषणदीधित्यादाववसेयः । शांकरमते 'विज्ञानादिभावे वा तदप्रतिषेधः' इति सूत्रं सिद्धान्तसूत्रत्वसूचक वाशब्दघटितं अस्वरसम् । तद्रीत्या 'विज्ञानादिभावेऽपि' इति अपिशब्दस्यैव युक्तत्वात् ।

'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि च ॥'

इत्युक्तिरपि न प्रतिकूला । वेदव्यतिरिक्तसांख्यादिचतुर्षु दर्शनेषु पाञ्चरात्रव्यतिरिक्तानां त्रयाणां वेदाविरुद्धांशे अप्रामाण्यम् । तदवि-रुद्धांशे तु प्रामाण्यमित्येतदिष्टमेव । पाञ्चरात्रस्य कस्मिन्नप्यंशे वेदविरोधाभावात् न प्रामाण्यहानिः । वेदविरुद्धतया प्रतीयमानानां केषांचिदंशानां समीकरणायैव चैतस्याधिकरणस्य प्रवृत्तिरिति, न पाञ्चरात्राप्रामाण्यं मनसाऽपि शक्यशङ्कम् । 'श्रीभाष्यस्य प्राणबन्धुः पाञ्चरात्रं' इति भूषणी 'प्रकाशमयः आदित्यः' इतिवदस्मिन्नंशे परं सत्यैव ।

अविरोधाध्यायः श्रीभाष्यस्य प्राणघातकः इति शतभूषणीकार-वचनं तु मौढ्यादेव। सर्वथा श्रीभाष्यस्यैव अविरोधाध्यायानुकूल्यात्। शांकराणामेवाविरोधाध्यायः प्राणघातकः । यथा 'उपसंहारदर्शना-

त्मेति चेन्न क्षीरवद्धि' इति सूत्रं परिणामकारणवादमेव हि पुष्णीरोति, न तु विवर्तवादम् । एवं अधिकं तु भेदनिर्देशात्' इति भेदसत्यताज्ञापकं, 'सत्त्वाच्चापरस्येति' कार्यस्यापि सत्यताज्ञापकं 'सर्वधर्मोपपत्तेश्चे' ति सर्वधर्माणां उपपत्तिप्रतिपादकं चेत्येवमादि-सूत्रजालं, सर्वधर्मानुपपत्तिं जीवब्रह्मणोरभेदं, कार्यासत्यतां, श्रुत्याद्य-सूचितविवर्तोपादानत्वं च स्वीकुर्वतां शांकराणां पक्षं समूलमुन्मूल-यतीति अविरोधाध्यायः विवर्ताद्वैतिनामेव प्रतिकूलः, न श्रीभाष्य-काराणामित्यास्तामयं विस्तरः ।

एवं तृतीयचतुर्थाध्यायावपि जीवपरमात्मनोर्भेदनियतसाधन-फलप्रतिपादकावद्वैतिनां परिपन्थिनौ । निरूपितं चैतत् शतदूषण्या-माचार्यसार्वभौमैः । तत्परिहर्तुकामः शतभूषणीकारः यदाह– तत्र वैराग्यपादे संसरतो जीवस्यान्तःकरणतादात्म्यमाश्रित्य गत्यागति-विचारः, न तु मुक्त्यवस्थस्ये' त्यारभ्य 'नाद्वैते वैरस्यं सूत्रकारस्ये' त्यन्तेन ग्रन्थेन, तदिदमयुक्तम् । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पत्तिः, अनावृत्तिश्च अहमर्थस्यैव प्रतिपाद्यते सा च न संसरतो जीवस्येति शतभूषणीकारलेखनमसम्बद्धम् । जीवस्यान्तः करणतादात्म्यमाश्रित्ये' त्यादिव्यवहारोऽपि अहमर्थस्य नात्मत्वं, अपि तु चिदचिद्ग्रन्थिरूपत्वमेवेति इतरसर्वदर्शनविरुद्धस्वकूटस्थ-कल्पनामाश्रित्यैव । इदं च युक्तिविरुद्धम् । तथा हि, अहमर्थस्य संभिन्नेदंरूपत्वं हि न कथंचिदपि वक्तुं शक्यते । अनुभव-विरुद्धत्वात् । 'अहं जानामि' इत्यत्र अहमित्यत्रान्तःकरणावच्छिन्न-चितः जानामीत्यत्रापि कस्याश्चित् चितः भानमिति द्वेधा चिद्भान-स्यनुभवाभावात् । उभयत्रापि चितः चित्वेन भानस्य कस्याप्यनु-भवासिद्धत्वात् ।

अहमर्थस्य सुषुप्त्यादौ नाशश्च पञ्चपादिकायां 'स च सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कुतस्त्यः' इति कण्ठत उक्तः। एवं सिद्धान्तबिन्दुटीकायां 'अहंकाराभावाच्च नैका विशिष्टवृत्तिः' इति। अहंकारत्वं च स्थूलावस्थत्वं, अहमाकाराविद्यावृत्तित्वं वा इति चोक्तम्। परंतु सूत्रकारः भगवान् बादरायणः एतेषां मुख्यवैरी भवति। 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इति अहमर्थस्य सुषुप्त्यनन्तरं उत्थानं प्रतिपादयन् विवर्ताद्वैतिनां दैनंदिनमरणं करुणया वारयति। अत एव चाहृदयं शांकरं भाष्यं तत्सूत्रे 'इतश्च स एवोत्तिष्ठति। यत् कारणं अतीतेऽहनि अहोमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात् स्मरणे अन्यस्योत्थाने नोपपद्यते। न ह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति। सोहमस्मीति चात्मानुस्मरणं आत्मान्तरोत्थाने नावकल्पते' इति। एवं प्रत्यभिज्ञाप्रत्ययश्च अहमर्थानात्मत्ववादे न स्वरसः स्यात्। य एवाहं सुप्तः स एव जागर्मि इति प्रत्ययः सुषुप्तावहमर्थो नास्तीति मते कथं स्वरसः? अतः अहमर्थस्य प्रत्यक्त्वरूपाहंत्वेन भानस्यानुभवासिद्धत्वेन परोक्तरीतिरनुभवविरोधादनुपादेया। अतः जीवस्यान्तःकरणतादात्म्यमाश्रित्येत्यादिभूषणीपक्षः अयुक्त एव। एवं च प्रत्यग्रूपस्याहमर्थस्य जीवात्मनः परमात्मनश्च भेदः श्रुत्यादिसिद्धः सूत्रकाराभिमतश्च नापह्नोतुं शक्यत इति विवर्ताद्वैतिनां तृतीयचतुर्थाध्यायौ सर्वथा प्राणहरौ। निर्विशेषचितः प्रमाणान्तरतः सिद्धौ सत्यां किल, तत्वमसीत्यादौ लक्ष्यार्थयोरेवाभेदः अद्वैतिसंमतः। वाच्यार्थलक्ष्यार्थयोः लक्ष्यार्थवाच्यार्थयोः वाच्यार्थयोर्वा भेदस्तु अद्वैतिभिरपि नैवापलप्यते इत्यादिकुकल्पनायाः प्रसक्तिः। तदेव चासिद्धम्। 'तत्वमसी' त्येतत् उपसंहारवाक्यं, अतः उपक्रमानुरोधेनैवात्र अर्थः वर्णनीय इति

उपक्रमे 'ऐतदात्म्यमिदं सर्वं' मित्यादौ यश्शरीरात्मभावः प्रस्तुतः स एवात्र उपसंह्रियते इति, 'तत्वमसी' त्यत्रापि श्वेतकेतोः परमात्मशरीरत्वेन शरीरात्मभावे एव सामानाधिकरण्यमिति, न भूषणीकारस्य तत्कूटस्थानां वा कुकल्पनायाः अत्र मनागप्यवकाशः।

यच्चेदं शतभूषणीकारलेखनं– श्रीभाष्यमते संसरतो असंसरतो वा जीवस्यापृथक्सिद्धत्वात् तदुक्तरीत्या न्यायबलेन स्वतन्त्रभेद-सिद्धिः, तस्य शिरश्शूलं, तदनुयाचिनां कर्णज्वरः' इति – तदिदं सर्वथा भूषणीकारस्य आग्रहपूर्णतां दर्शनशक्तिविकलतां चावेदयति। किमिह अपृथक्सिद्धयोः शरीरात्मनोः स्वतन्त्रभेदो नास्ति! ओमिति चेत् शरीरात्मभाववादस्य तर्हि कुतो निरासः घटघटा-काशयोरभेदः कथं निवार्यते। चार्वाकस्य वा कुतो निराकरणम्? अतः भेदे सत्येव पृथगुपलंभाभावादेव हि तत्रापृथक्सिद्धत्वम्, तद्वदेव जीवपरमात्मनोरपि 'अज्ञो जन्तुरनीशोऽयं, यस्सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः' इत्यादिप्रमाणसहस्रबलात् स्वभावतः भेदे सत्यपि जीवस्य परमात्मानमन्तरा उपलब्धुं स्थातुं चाशक्यत्वात् अपृथक्-सिद्धत्वमिति न संकटं किञ्चित्। अत एव 'नेह नानास्ति किञ्चने' ति श्रुतिः परमात्मासहभूतं (पृथग्भूतं वस्तु) वस्त्वेव प्रतिषेधति, न तु भेदसामान्यम्। नानाशब्दस्य पृथगित्यस्यैव पाणिन्यादेस्संमतत्वात्। अत एव 'विनञ्भ्यां नानाञौ नसह' (पा. सू. ५. २. २७) इति पाणिनिसूत्रं, 'विनञित्येताभ्यां असह-वाचिभ्यां नानाञौ भवतः' कस्मिन्नर्थे? स्वार्थे इति महाभाष्यं च संगच्छते। अतश्च 'नेह नाने' ति श्रुतेरयमर्थः. इह भूतभव्य-नियन्तृत्वेन आत्मत्वेन आकाशाद्याधारत्वेन च पूर्वोक्ते ब्रह्मणि नाना – असहभूतं – विनाभूतं, किञ्चन नास्तीति। अत एव च

'न तदस्ति विना यत्स्यात् मया भूतं चराचर' मिति गीताचार्योऽपि इममेव सिद्धान्तमुपोद्बलयति । न तु ब्रह्मव्यतिरिक्तसर्वमिथ्यात्वम् । विस्तरस्त्वन्यत्र । सूत्रेषु च भगवता भेद एव सूचितः जीवपरयोः, तत्र भेदे स्वातन्त्र्यपारतन्त्र्ये सूत्रकारेष्टे । अतः शतभूषणीकथनमसंबद्धम् ।

गुणोपसंहारपादः भूषणीकारस्य तदनुयायिनां च संहारायैव । गुणोपसंहारपादे विद्यमानानि सर्वाण्यप्यधिकरणानि सगुणपराण्येवेति भूषणीकारस्य 'सविशेषविशेषविषयकत्वस्य प्रायिकत्वादिति कथनं, भूषणीकारप्रायणायैव । निर्विशेषपरस्य एकस्याप्यधिकरणस्य सूत्रकारेणानारचनात् । 'अभावादिधर्मोपसंहारे एव तात्पर्यात्' इति शतभूषणी भ्रान्त्यैव । अभावस्य धर्मत्वाभावात् । अभावरूपचिदेवाङ्गीक्रियताम्, येन माध्यमिकस्तुहल्लभ्येत ; इत्याक्षेपे समाधेरभावात् । 'आनन्दादयः प्रधानस्य' इत्याद्यधिकरणे आनन्दादीन् भावरूपानेव धर्मान् सूत्रे निर्दिशन् सूत्रकारः धर्माणां अभावरूपत्वं जल्पतां शतभूषणीकारतत्कूटस्थानां च जिह्वां निष्करुणं किल लुनाति ।

एतेन 'अक्षरधियामवरोधः' इति चतुरध्याय्यां मध्यममधिकरणम् । तत्र 'शाखाभेदेनाम्नाता अक्षरविद्या' इत्यारब्धा— न च तद्वस्तुगत्या निर्विशेषत्वविरोधि' इत्यन्ता शतभूषणी निरस्ता । तथा हि ; 'अक्षरधियां त्ववरोधः' इति तु शब्दघटित एव सूत्रपाठः, न तु भूषणीकारसंमतरीत्या तु रहितपाठः । यथावस्थितसूत्रपाठमपि शतभूषणीकारो नैव जानाति । आस्तामिदम् । एतत्सूत्रे 'अस्थूलमनण्वह्रस्व' मित्यादिबृहदारण्यकवाक्यं, 'यत्तद्रेश्यमग्राह्य'

मित्यादि मुण्डकोपनिषद्वाक्यं च विषयवाक्यतया स्वीकृतं शांकर-रामानुजीयभाष्ययोः । तत्र उक्तवाक्याभ्यां ब्रह्मणि सर्वविशेष-निराकरणं तस्यैव च निर्विशेषस्य अन्यत्राप्यवरोधः, इति शाङ्कर-व्याख्या । भगवद्भाष्यकारास्तु ब्रह्मणः सकलेतरव्यावृत्तत्वज्ञानाय एतद्विद्याप्रतिपाद्यास्थूलत्वादीनां सर्वासूपसंहार आवश्यकः, आनन्द-त्वादिकं हि प्रत्यगात्मनोऽपि वर्तते । तावतोपास्यस्य सकल-व्यावृत्तत्वेन श्रैष्ठ्यं नोक्तं भविष्यति । स्थूलत्वादिविपरीतत्व-रूपास्थूलत्वादीनामत्र प्रतिपादने हेयप्रत्यनीकत्वमेवोक्तं भवति । प्रत्यगात्मनः स्वतो हेयविरहिणोऽपि हेयसंबन्धयोग्यता वर्तते । ब्रह्मणस्तु तदपि नास्तीति तात्पर्यार्थः, इत्यभिप्रयन्ति । निर्धर्मकस्य श्रुतिसिद्धत्वे शाङ्करव्याख्या युज्येत, तदेव त्वसिद्धमिति पूर्वमेव सप्रमाणमावेदितम् । 'अस्थूल' मित्यादिपदानां स्थूलादिभिन्न-बोधकत्वमेव । न तु धर्मराहित्यरूपात्यन्ताभावबोधकत्वम् । अत एव शङ्कराचार्याः उपनिषद्भाष्ये 'अस्थूलं तत्, स्थूलादन्यत्, एवं तर्हि अणु? अनणु । अस्तु तर्हि ह्रस्वं, अह्रस्वम् । एवं तर्हि, दीर्घं, नापि दीर्घम्। अस्तु तर्हि लोहितो गुणः, ततोऽप्यन्यत् अलोहितम् । अस्तु तर्हि सङ्गात्मकं जतुवत्, असङ्गम् । अस्तु तर्हि छिद्रवत् अन्तरवत्, अनन्तरं नास्यान्तरमस्ति । संभवे तर्हि बहिस्तस्याबाह्यम् ।' इत्याहुः । अत्र स्थूलादन्यत् अस्थूलमिति शंकराचार्यविवरणेन धर्मराहित्यबोधकत्ववादिनस्सर्वेऽपि शङ्कराचार्यैरेव निरस्ताः । अत एव 'न विद्यते स्थूलं यत्र तदस्थूल' मित्यादिक्रमेण मधुसूदन-व्याख्यानं (अद्वैतरत्नरक्षणे) असङ्गतमिति बोधितम् ।

स्थूलभिन्नबोधकत्वरूपार्थस्य स्वीकार एव व्युत्पत्तिसामिचीन्यम्। धर्मराहित्यरूपार्थस्य नवीनसंमतस्याङ्गीकारे व्युत्पत्तिविरोधश्च ।

तथा हि, 'परिमाणवाचिपदसमभिव्याहृतस्थूलादिपदेभ्यः परिमाणवत एव बुद्धिस्थेन अनुभवसिद्धतया अस्थूलमित्यादावपि स्थूलभिन्नमित्यर्थस्यैव झटिति प्रतीतेः। विना पदान्तरसमभिव्याहारं धर्म्यंवबोधकविशेष्यवाचिपदसमभिव्याहृतनञः धर्मवाचकविशेष्यपदसमभिव्याहृतनञ इव नात्यन्ताभावबोधकत्वम्। किन्तु अन्योन्याभावबोधकत्वमेवेत्यनुभवसिद्धं ह्येतत्। अतः 'अस्थूल' मित्यादिवाक्यस्य न धर्मराहित्यबोधकता।

किञ्च बृहदारण्यके 'अस्थूल' मित्यादिवाक्योत्तरं 'एतस्य वा अक्षरस्य प्रशासने गार्गिसूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिना धारणादिकमभिधीयते। इदं च धारणं 'अथ य आत्मा स सेतुविधृतिः एषां लोकानामसंभेदाय' इति दहरविद्यावाक्येऽप्युक्तम्। अत एव च सूत्रकारैः दहराधिकरणे 'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः।' (ब्र. सू १. ३. २६) इति धारणं महिमत्वेनोक्तम्। अतः सगुणविद्यात्वेनाभिमतायां दहरविद्यायां धारणश्रवणवत्, निर्गुणविद्यायामपि 'अस्थूलं अद्रेश्य' मित्यादिवाक्यप्रतिपादितायां धारणादेः श्रवणात् उभयोरपि सगुणविद्यात्वमेवेति निर्गुणविद्यास्वीकारसूत्रश्रुतिप्रभृतिपरिपन्थी शाङ्कराणामबार्हदारण्यकत्वमेवावेदयति। अत एव 'अक्षरान्तमम्बरान्तधृतेः, सा च प्रशासनात्' इत्यादिना सूत्रकारः प्रशासनरूपगुणयोगेनैव प्रपञ्चधारकत्वं अक्षरविद्याप्रतिपाद्यस्य ब्रह्मणः बोधयन् अक्षरविद्यायाः निर्धर्मकवस्तुबोधकत्ववादिनां मतं समूलमुन्मूलयति। विस्तरस्तु अस्मदीयसूत्रार्थमणिदर्पणे।

किञ्च 'अक्षरधियां त्ववरोधः' इत्यधिकरणात् पूर्वं 'अनियमः सर्वासां (सर्वेषां) अविरोधः शब्दानुमानाभ्या' मित्यत्र

गतिचिन्तनस्य सर्वविद्याङ्गत्वं सूत्रकारेण स्पष्टमुक्तम् । अगतिकानां चाद्वैतिनां इदं प्राणघातकम् । 'सर्वासां' इत्युक्त्या सगुणविद्यानां इति शांकरव्याख्यां बहिष्करोति । ततश्च तत्सूत्रं प्रामाणिकसगुण-विद्यापरमेव । 'इयदामननात्' इति सूत्रमपि शंकराचार्यैः अधिकरणान्तरपरतया योजितं 'जीवब्रह्मभेदं साधयति' इति शाङ्करी व्याख्या । तदपि न परेषामनुकूलम् । एवमुत्तराधिकरणेषु सर्वत्रापि सगुणमेव प्रतिपाद्यम् । अतश्च मध्ये 'अक्षरधिया' मित्यत्र प्रमाणपरिपन्थिनिर्गुणवस्तुप्रतिपादनमिति शाङ्करव्याख्यानं सूत्रानारूढं अयुक्तं च । अपि तु अभिक्रमणन्यायेनास्यापि सगुण-परत्वमेव ।

यदत्र शंकराचार्यैः 'यावदधिकारमवस्थितिः' इति सूत्रस्य ('अक्षरधियां त्वि' ति पूर्वसूत्रस्य) अधिकरणान्तरपरतया योजनं कृतं, तदपि नोचितमेव । तत्र शंकराचार्यप्रदर्शितश्चायमर्थः 'विदुषः तद्देहपातानन्तरं देहान्तरमुत्पद्यते न वेति संशयः, ब्रह्मविदा-मपि वसिष्ठादीनां इतिहासपुराणादिषु देहान्तरोत्पत्त्यवगमात् विद्यायाः पाक्षिकमेव मोक्षहेतुत्वं, अथवा अहेतुत्वमेवे' ति पूर्वपक्षः वर्तमानब्रह्मविदां प्रारब्धभोगक्षय इव आधिकारिकपुरुषाणामपि प्रारब्धाधिकारहेतुकर्मक्षये मोक्ष इति न पाक्षिकहेतुत्वाहेतुत्वे इति सिद्धान्त इति । तच्चेदमयुक्तम् । प्रत्यक्षश्रुत्या विद्यायाः मोक्षहेतुत्वे श्रुते तद्विरुद्धेतिहासपुराणवचसां विरोधाधिकरणन्यायेनाप्रमाणत्वेन पूर्वपक्षस्यैवानुत्थानात् । किंच यावदधिकारमवस्थितिरित्युक्ते कथमहेतुत्वशङ्कापरिहारः, यावदधिकारमवस्थाने वर्तमानदेहानन्तर-मपि अपवर्गाभावस्यैव सिद्धत्वेन अहेतुत्वमेव हि समर्थितं भवति ।

अतः पूर्वाधिकरणशेषतां अस्य सूत्रस्याङ्गीकृत्य श्रीभाष्यकारैराहत-योजनैव ज्यायसी । एवं च पूर्वाधिकरणे न निर्विशेषविद्योपस्थिति-रिति अक्षराधिकरणे तत्प्रस्ताव अयुक्त एव ।

अक्षरधियां त्वित्यस्य शांकरव्याख्याऽपि न सूत्रानुगुणा । 'सामान्यतद्भावाभ्यां' प्रतिषेधमुखेन प्रतिपादनप्रकारस्य समान-त्वात् अक्षरस्य ब्रह्माभिन्नतया प्रत्यभिज्ञानाच्च' इति हि तद्योजना । तर्हि औपसदवत्तदुक्त' मिति सूत्रखण्डोक्तदृष्टान्तवैघट्यात् अङ्गानां प्रधानानुवर्तित्वे हि निदर्शनोपन्यासः । नान्यथा । अतः सूत्राक्षर-योजनाप्यनुपपन्नेति 'अक्षरधिया' मित्यधिकरणं न निर्विशेष-साधकं भवति ।

एतेन 'अक्षरविद्या हि आथर्वणे श्रूयमाणा प्रपञ्चाभाववत् ब्रह्म प्रस्तुत्य भूतयोनित्वं सर्वज्ञत्वादिकं धर्मं भावयन्ती तदभाववति तत्प्रकारकज्ञानत्वरूपं भ्रमत्वमेव विकल्पांशे ज्ञापयति ।' इति शतभूषणी निरस्ता ।

उपनिषदां भ्रमज्ञापकत्वं इति वादः भ्रान्ताग्रेसराणामेव शोभते । न प्रामाणिकानाम् ।

लोके तदभाववति तत्प्रकारकज्ञानस्यैव भ्रमत्वमिति शास्त्रज्ञ-संमतम् । अक्षरविद्यायां हि 'यत्तदद्रेश्य' मित्यादिना यादृशधर्मा-भावविशिष्टतया ब्रह्म प्रतिपादितं, न हि 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनि' मित्यादिना तादृशधर्मप्रकारकतयैव ब्रह्मप्रतिपादनं, येन अत्र भ्रमः स्यात् । अपि तु निषिद्धधर्मभिन्न-नित्यत्वादिरूपधर्मवत्वेन हि ब्रह्म प्रतिपाद्यते । एवं च कथं अत्र भ्रमः इति संभावना । रजतत्वाभाववति रङ्गे रजतत्वावगाहिज्ञान-

स्यैव हि लोके भ्रमत्वेन प्रसिद्धिः, न हि रजतत्वभाववति रजते रजतत्वावगाहिज्ञानस्यापि ' इति आगोपालं प्रसिद्धत्वात् । अत्र च निषेध्या धर्माः दृश्यत्वादयः ' विधेयाश्च नित्यत्वविभुत्वभूतयोनित्वादयः ' इति अत्र भ्रमप्रसक्तेरेवाभावात् एतद्वाक्यं विकल्पांशे भ्रमप्रतिपादकमिति कथनं स्वभ्रमाविष्करणमेव ।

किञ्च नित्यत्वादीनां धर्माणामपि निषेधे शुद्धचित्सिद्धिरेव न स्यात् । भूतयोनित्वनिषेधे, ' जन्माद्यस्य यतः ' इति सूत्रमारभ्य सर्वेषामपि जगत्कारणत्वप्रतिपादकसूत्राणां तिलाञ्जलिः । ' अक्षरविद्या निर्गुणविद्या ' इति परसिद्धान्तः । परं तु एतदारंभे ' यया तदक्षरमधिगम्यते ' इति प्राप्तिः प्रतिपादिता । प्राप्तिश्च सगुणविद्याफलमिति निर्गुणद्वैतिनः । अतः उपक्रम एव तेषां विरुद्ध इति प्रणव एव विस्वरः । अत एव भगवान् सूत्रकारः ' अदृश्यत्वादिगुणको धर्मोक्तेः, विशेषणभेदव्यपदेशाभ्यां च नेतरौ ' इति सूत्राभ्यां अक्षरविद्याविचारपराभ्यां अक्षरविद्याप्रतिपाद्यस्य सर्वज्ञत्वादिधर्मैः अचेतनजीवैतदुभयवैलक्षण्येन च परब्रह्मत्वं स्थापयति । गुणकत्वं, धर्मवत्वं, भेदव्यपदेशश्चे ' त्येतत्त्रयमपि सूत्रे निर्दिश्यमानं, निर्गुणनिर्धर्मकाभिन्नत्ववादिनां मतमुन्मूलयति । अतः शाङ्करपक्षः सूत्रानारूढः श्रुतिविरुद्धश्चेति हेय एव । अधिकं त्वन्यत्र ।

एतेन ' स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वं मिथ्यात्वं ' इति अद्वैतसिद्धिरपि पराहता । ब्रह्मणि जगत्कारणत्वादिधर्मप्रतियोगिकात्यन्ताभावाधिकरणत्वस्य केनापि प्रमाणेनाप्रतीतेः ।

यत्तूक्तं भूषण्यां— ' परविद्याविषयमक्षरं ब्रह्म तु ' अक्षरात् परतः परः ' इति अक्षरपदवाच्यायाः प्रकृतेः पृथगेव सिध्यति '

इति ब्रह्मणः प्रकृत्यपृथक्सिद्धिवादः परविद्याविरुद्धः ' इति । तदिदं शब्दतः अर्थतश्च अनुवादानर्हं असंबद्धं च । विषयशब्दः नियतपुल्लिङ्गः, न तु विशेष्यनिघ्नः । एवं च ' परविद्याविषयं ब्रह्म तु ' इति निर्दिशन् भूषणीकारः शब्दसाधुत्वमपि न जानाति इति का कथा तस्य अर्थज्ञाने । आस्तामिदम् । अर्थं विमृशामः । ' अक्षरात्परतः परः ' इति श्रुतिः प्रकृतिवैलक्षण्यं कामं ब्रह्मणि बोधयेत् । तावता प्रकृत्यपृथक्सिद्धस्य का वा क्षतिः । न ह्यपृथक्सिद्धवस्तूनां भेदाभावः इति शक्यशङ्कम् । ' प्रकृतिपुरुषसंयोगाः ' इति सांख्यसंमतार्थः शङ्कराचार्या अप्यङ्गीचक्रुः । सांख्यमतेऽपि प्रकृतिपुरुषयोर्नित्यसंसर्गेऽपि न तयोरभेदः इष्टः, दृष्टो वा । एवं विभुद्वयसंयोगस्वीकर्तॄणां नव्यनैयायिकानां मते, आकाशादिविभुद्वयस्य परस्परं नित्यसंसर्गेऽपि न तयोरभेदः । किं बहुना घटस्य आकाशसंयोगस्तावत् सार्वदिकः इति सर्वैरिष्यते, तावता न हि घटाकाशयोरभेदशंका संभवति । अतः उक्तोदाहरणे अपृथक्सिद्धिसत्वेऽपि भेदानपह्नववत् प्रकृते ब्रह्मापृथक्सिद्धत्वेऽपि तद्वैलक्षण्यमक्षतमेवेति तद्वैलक्षण्यबोधका याः ' अक्षरात् परतः परः ' इति परविद्याश्रुतेः न कोऽपि विरोधः श्रीभाष्यकारमते । विस्तरस्तु अस्मद्गुरुचरणानुगृहीतत्रय्यन्तसारामृतादौ स्फुटमवसेयः ।

वस्तुतस्तु ' अक्षरात् परतः परः ' इति श्रुतिघटकीभूताक्षरशब्दः जीववाची न तु प्रकृतिवाची । अत एव ' वेदान्तसारे भगवता भाष्यकृता ' अथवा सामानाधिकरण्येन परतोऽक्षरात् पञ्चविंशात् परः ' इत्युक्तम् । मधुसूदनसरस्वतयोऽपि गीतार्थविवरणे ' अक्षरादपि चोत्तम ' इति, गीता ' अक्षरात् परतः परः ' इति श्रुतिविवरणरूपेत्यङ्गीचक्रुः । गीतायां चाक्षरशब्दस्य जीववाचित्वं

स्पष्टम् । शांकरभाष्येऽपि 'अक्षरात् परतः परः' इति सामानाधिकरण्यनिर्देशः' इति भाषणात् अक्षरशब्दः जीववाच्येवेति भूषणीकृल्लेखनं स्वमतपरमतोभयदृष्ट्याप्ययुक्तमेव । श्रीभाष्ये अक्षरशब्दस्य प्रकृतिवाचित्वकथनं तु संभवाभिप्रायेण, न तु तत्र नैर्भर्यम् । वैयधिकरण्यापत्तेः । विस्तरस्त्वन्यत्र ।

गुणोपसंहारपाद इति गुणपदेनाख्यानं तु प्रायिकत्वाभिप्रायमिति शतभूषणीकथनं गुणानुपसंहारपरस्यैकस्याप्यधिकरणस्याभावात् अनुपादेयमेव । अत एव सृष्टिन्यायस्य वा छत्रिन्यायस्य वा नात्र प्रसक्तिः । गुणोपसंहारपराधिकरणानां बहुत्वे वैदिकस्य सृष्टिन्यायस्य, अल्पत्वे छत्रिन्यायस्य लौकिकस्य प्रसक्तिः । शंकरभाष्यदृष्ट्यापि गुणोपसंहारपराणामेवाधिकरणानां बहुत्वेन छत्रिन्यायस्य नैवात्र प्रसक्तिः । अतश्छत्रिन्यायेनेति कथनमयुक्तमेव । सृष्टिमन्त्राणां चयनप्रकरणे उपधेयेष्टकाप्रकाशकानां चतुर्दशत्वात्, असृष्टिमन्त्राणां च त्रित्वसंख्याकत्वात्, भूमाख्यगौणीनिमित्तेन असृष्टिमन्त्राणामपि 'सृष्टीरुपदधाति' इति वाक्ये 'सृष्टिपदेन ग्रहणं संभवति' इति सृष्टिन्यायः प्रथमचतुर्थान्ते जैमिनिना सूचितः । प्रकृते च गुणोपसंहारपादे एकस्याप्याधिकरणस्य गुणानुपसंहारपरस्याभावात् तन्यायकथनमत्रान्याय्यमेव । 'गुणोपसंहारपादे उपसंहारापवादन्यायानामपि बहूनां सत्त्वात्' इति शतभूषणीकथनमप्यपरामर्शेन । अपवादस्यापि व्यतिरेकविधया स्विषाधयिषितार्थोपयोगित्वमेवेति सर्वे जानन्ति । अत एव च पौर्णमास्यधिकरणाधाराग्निहोत्राधिकरणपशुसोमाधिकरणानां अभ्यासापवादभूतानामपि कर्मभेदप्रमाणोपन्यासपरे द्वितीयाध्याये द्वितीयपादे संगतिः । तावता च न तत्पादे भेदप्रमाणनिरूपणं प्रायिकमिति

कश्चनानुन्मत्तो ब्रवीति । अतस्सर्वथा गुणविरोधिनां शतभूषणीकारादीनां तत्कूटस्थानामेव च गुणोपसंहारपाद इति नाम शिरःशूलम् । कर्णज्वरो वा । न तु शतदूषण्या इति आचार्यपादोक्तदूषणमप्रकम्प्यमेव ।

'उपासनस्य मोक्षसाधनत्वमभ्युपगच्छतां वृत्तिकारादीनां तदनुयायिनां श्रीभाष्यकाराणां च दर्शने एव कर्मोपासनयोरङ्गाङ्गिभाव उपपद्यते । अत एव च अङ्गपादस्यापि श्रीभाष्यकृन्मत एवाञ्जस्यम् । न तु कर्मकाण्डस्यातात्विकत्वं, उपासनस्य च भ्रमत्वं वर्णयतां विवर्ताद्वैतिनां मते । ब्रह्मप्राप्तेरेव तेषामभावेन, तत्साधनतदुपकारादेस्सुतरां वर्णयितुमयुक्तत्वात् । अतः तृतीयाध्यायचतुर्थपादोऽपि परेषां प्रतिकूल एव ।

एतेन 'अङ्गाङ्गिभाववादस्तु इत्यादि– 'शेषत्वात् पुरुषार्थवादः यथाऽन्येष्विति जैमिनिः' इति जैमिनिपक्षेण पूर्वपक्षः कथं श्रीभाष्यानुयायिनां न शिरश्शूलम्, न वा कर्णज्वरः' इत्यन्ता शतभूषणी परास्ता ।

ऐकशास्त्र्याङ्गीकारेऽपि कर्मण एव प्राधान्यं स्वीकुर्वतोजैमिनेर्मतेन पूर्वपक्षकरणे बाधकाभावात् । यद्वा विपक्षनिरासार्थस्य जैमिनेः अभ्वारुह्यवादस्य तथोपन्यासप्रतिक्षेपोपपत्तेः । अन्यथा 'परं जैमिनिः' इत्यादिसूत्राणां मिथो विरोधः, भारतोक्तिविरोधश्च । जैमिनेरन्वारुह्यवादमजानतां तु तदुक्तेस्तत्त्वबुद्धिस्स्यादिति तन्निवारणाय ब्रह्मसूत्रे तदुपन्यासनिरासौ कृतौ । अध्ययनस्यार्थज्ञानार्थत्वमेवाद्वैतिसंमतमिति शतभूषणीकृल्लेखनं पञ्चपादिकातद्विवरणादिविरुद्धत्वादनुपादेयमेव । यदाह पञ्चपादिकाकारः– 'स्यादेतदेवं

यद्यर्थावबोधफला अध्ययनक्रिया स्यात् । सा हि अधीयमानावाप्ति-फलकत्वात् अक्षरग्रहणान्ता ।' इत्यारभ्य, 'ततः अवश्यं कल्पनीया अक्षरग्रहणान्तता' इत्यन्तम् । अतः भूषणीकारः स्वीयप्राचीनग्रन्थ-मपि अजानन् वञ्चनया वा यल्लिखति तदिदमसंबद्धमिति सिद्धम् । 'शेषत्वात् पुरुषार्थवादः' इति सूत्रं अङ्गाङ्गिभावपादप्रथमसूत्रं इति तु सूत्राज्ञानमावेदयति । 'पुरुषार्थोऽतः शब्दा' दिति सूत्रस्यैव तत्पादादिमसूत्रत्वात् । अतः पञ्चपादिकारीत्या यो निर्वाहः स श्रीभाष्यकाराणां रीत्याऽपि अक्षत एव ।

वस्तुतस्तु अध्ययनस्य अर्थज्ञानार्थत्वस्य भामत्यादिसंमतस्याङ्गी-कारेऽपि नैव काचित् क्षतिः । अक्षरग्रहणपर्यन्ततावादिभिरपि अध्ययनस्य अर्थपरत्वे विवादाकरणात् । अतः 'द्रव्यगुणकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्' इति चातुर्थिकन्यायेन वेदान्तकर्मकर्तृस्तावकत्वमिति पूर्वपक्षस्य बाधकाभावात् ।

'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' इति सिद्धान्त-सूत्रं चिवर्ताद्वैतभञ्जकमेवेति स्पष्टम् । अत्र हि 'अधिकं तु भेद-निर्देशात्' इत्यत्र स्थापितमेवाधिकत्वं विवक्षितमिति भेदविद्वेषिणां शशशृङ्गसहोदरनिर्विशेषस्वीकर्तॄणां कथमिदं घटताम् । किञ्च, 'पुरुषार्थोऽतः शब्दात्' इत्येतदधिकरणसूत्रे 'पुरुषेणार्थ्यमानं फलं अतः' इति चोक्तम् । तच्च पुरुषाणामेव मिथ्यात्ववादिनां असंगतमिति उपक्रमविरोधश्च । कर्माधिकारिणः कर्तुः, शारीराद् भोक्तुः संसारिणश्चात्मनो अधिकस्य चिन्मात्रस्य निर्विशेषस्य वेदान्तेषूपदेशात्' इति शाङ्करार्थश्च प्रलोभनमात्रमेव । तथा हि-शाङ्करभाष्ये 'तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः,

यः सर्वज्ञः सर्ववित्, भीषाऽस्मात् वातः पवते, एतस्य वा अक्षरस्य प्रशासने गार्गि इत्यादयः' इत्युक्तम् । अत्र ब्रह्मनिष्ठतया सर्वज्ञत्व-प्रशासितृत्वादीनां वास्तविकानामनङ्गीकारात्, एतैर्धर्मैः अधिकत्वेनोपदेशः इति कथनं शाङ्कराणां वञ्चनार्थमेव । अतः कर्मसु कर्तुः जीवादधिकस्य अर्थान्तरभूतस्य ब्रह्मणो उपदेशात्' इति श्रीभाष्या-दृतयोजनैव गरीयसी ।

यदाह शतभूषणीकारः 'अत्राधिकपदेन संसार्यपेक्षया उत्तमत्वं संसारातीतत्वं वा विवक्ष्यते तस्य चोपदेशमात्रगम्यत्वं उपदेशादित्यनेन सूच्यते' इत्यारभ्य 'अत असंसारिचिन्मात्रस्य अन्यतो अज्ञातार्थत्वात् शास्त्रेणैव ज्ञातार्थत्वाच्च प्रामाण्यं' इत्यन्तम् ।

तदप्यसमीचीनम्– वस्तुद्वयसद्भाव एव आधिक्यन्यूनता-विचारः युज्यते, नत्वेकचिन्मात्रवादे । अतः जीवपरमात्मभेद-स्वीकर्तॄणां श्रीभाष्यकाराणां विवरणमेव सूत्रारूढम् । निर्विशेषचितः प्रमाणासिद्धायाः सिद्धवत् कृत्य व्यवहारश्च अप्रामाणिकत्वादयुक्तः । निर्विशेषस्य इदंतया निर्देशानर्हत्वादेव उपदेश्यत्वायोगः । 'घटोऽस्ति, पटोऽस्ति' इत्यादि प्रत्यक्षादिस्थलेऽपि सद्रूपब्रह्मण एव प्रत्यक्षविषयत्वस्वीकर्तॄणां अद्वैतिनां मते अन्यतो अज्ञातार्थत्वं चासिद्धं, प्रत्यक्षेणैव ज्ञातत्वात् । यदाह सर्वज्ञात्ममुनिः– 'अस्स्य-स्यसीति च तिङन्तपदानि सन्ति वेदान्तवाक्यनिलयानि तथाऽपि तानि । नाख्यानशब्दनिजशक्तिधुरं वहेयुः अस्तित्वमात्रविषया हि निषक्तिरेषाम् ॥ (सं. शा. १. ४९१) पूर्वापरीभूतपदार्थनिष्ठं आख्यातमाख्यानविदो वदन्ति । कूटस्थसत्तावगतिप्रधानं आख्यात-वत्साधु तिङन्तमाहुः ॥ (१९२) अद्वैतसिद्धावपि– सत्सामान्य-

व्यतिरिक्तगोत्वादिसामान्यानभ्युपगमात् । गोत्वाद्यभ्युपगमेऽपि गोत्वादिव्यञ्जकतावच्छेदकसामान्यानभ्युपगमात् व्यक्तिविशेषाणामेवाननुगतानां सास्नादिमत्वाद्युपाध्यनुगतानां वा तद्व्यञ्जकत्ववत् व्यक्तिविशेषविशिष्टत्वेन सत्सामान्यस्यैव तत्तद्व्यवहारजनकत्वोपपत्तेः' इत्याद्युक्तम् । अतः उपदेशो व्यर्थ एवेति अधिकोपदेशादिति सूत्रमसमञ्जसमद्वैतिनामिति दिक् ।

यच्चेदं शतभूषणीकारकल्पनं 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' इति पारमार्थिकाभेदस्याधीयानत्वमुक्तम् । भेदस्तु व्यपदेशपदादिना, विनैवोपदेशपदं अतः स केवलमनूद्यते, न त्वज्ञातवदुपदिश्यते' इत्यादि ।

तदिदं न केवलं प्रमाणयुक्तिविरुद्धमात्रं अपि तर्हि शांकरभाष्यादिविरुद्धमपि । तथा हि— व्यपदेशादिति सूत्रखण्डः, नाना इत्यत्र, अन्यथा चेत्यत्र चान्वेति । अतः भेदस्य अभेदस्य च व्यपदेशात् इत्येवार्थः । अधीयते इत्यत्र च 'दाशकितवादित्वमित्यस्यैवान्वयः अतश्च अभेदस्यापि भेदवद्व्यपदिश्यमानत्वमेव सूत्रकारेण भगवतोक्तम् । न त्वधीयमानत्वम् । तथा च शांकरभाष्यम्— 'न च नानाव्यपदेशादेव केवलात् अंशत्वप्रतिपत्तिः, किं तर्हि अन्यथा चापि व्यपदेशो भवति अनानात्वस्य प्रतिपादकः' इति । एवं भूषणीकारलेखनं स्वभाष्यविरुद्धमपि ।

वस्तुतस्तु व्यपदेशो वा उपदिश्यमानत्वं वा, अधीयमानत्वं वा, न वस्तुतात्विकत्वातात्विकतया प्रयोजकम् । बाधाभावे अतात्विकत्वप्रसक्तेरेवाभावात् । 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र

धर्माणां उपदेश्यत्वकथनेन धर्माणां तात्त्विकत्वं कुतो नाङ्गीक्रियेत। तात्त्विकत्वप्रयोजकस्य उपदिश्यमानत्वस्य धर्मेष्वक्षतत्वात्। यदि च व्यपदेशमात्रेणातात्त्विकत्वमित्युच्येत, तर्हि फलाधिकरणे 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' इत्यनेन सूत्रेण ब्रह्मण एव फलप्रदत्व-सिद्धान्तसिद्धिर्न स्यात्, व्यपदिश्यमानत्वेन अनुवादत्वादप्रामाण्यस्य तत्राप्यवारणात्। तथा च जैमिनिपक्षस्यैव विजय इति फलाधिकरणं व्यर्थं इति भूषणीकारदिभागकथनं नितरामयुक्तम्।

याचेयं कुकल्पना विवर्ताद्वैतिनां 'भेदव्यपदेशाच्चान्यः, भेदव्यपदेशात्' इत्यादिसूत्रेषु भेदस्य व्यपदिश्यमानत्वेन निर्देशः सिद्धवदनुवादः अतश्च न तत्र प्रामाण्यस्वीकार इति। साऽपि श्रुतिपथविपरीता। सर्वेष्वपि सूत्रेषु श्रुतिसिद्धस्यैवार्थस्य निर्देशेन सर्वेषामपि सूत्राणां सिद्धवदनुवादकत्वमेवेति विवर्ताद्वैतिनां मते सर्वसूत्राणामप्यप्रामाण्यापत्तिः। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (श्वे) इत्यादिश्रुतिषु भेददर्शनस्यैव शोकापनोदनसाधनत्वेन विधानात्, सूत्रकृतापि तथैव संसूचनात्, भेदाप्रामाण्यताया अयोगात्। श्रुतिषु सिद्धस्यैव भेदादेरर्थस्य सूत्रेषु सूचनं प्रामाण्यदृढीकरणायैवेति सूत्रेषु भेदादेर्व्यपदेश्यत्वोक्तिः अप्रामाण्यायेति शतभूषणीकृदुक्तिर्न समीचीना।

किञ्च 'आकाशो अर्थान्तरत्वादिव्यपदेशादि' त्यस्मिन्नधिकरणे 'आकाशो ह वै नामरूपयोर्निर्वहिते' त्यादिवाक्ये आकाश-पदं भूताकाशपरं उत ब्रह्मपरं इति संदिह्य भूताकाशपरमिति पूर्वपक्षं प्रापय्य 'अर्थान्तरत्वव्यपदेशात् परब्रह्मपरत्वं सिद्धान्तितम्। तत्रापि अर्थान्तरत्वस्य व्यपदिश्यमानत्वोक्तेः व्यावहारिकत्वेनापि

तद्व्यपदेशोपपत्तेः न तस्य परब्रह्मत्वं सिध्येत् इति पूर्वपक्षनिराकरणमसंगतमिति तदधिकरणविरोधः । एवं तदुत्तराधिकरणे 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इत्यत्र 'व्यपदेशा' दित्यस्य पूर्वसूत्रादनुषङ्गेनैव शङ्करभाष्येऽप्यर्थो वर्णितः । तत्रापि भेदेन व्यपदिश्यमानत्वं न तत्वत इति तदधिकरणविरोधोऽपि । एवं परश्शतमधिकरणानि शतभूषणीकारशिरोभञ्जकानि इति निर्मत्सराः पण्डिताः विभावयन्तु ।

यच्चेदं शतभूषणीकारस्यासंबद्धपरिकल्पनं– 'तत्वंपदलक्ष्यार्थवाच्यार्थयोः, त्वंपदवाच्यार्थलक्ष्यार्थयोश्च भेदोऽपि नाद्वैतविरुद्धः' इत्यादिकं,

तदिदं न केवलमसङ्गतमात्रं सर्वप्रमाणविधुरं श्रुतिविरुद्धं च भवति । तथा हि लक्षणा हि— शक्यार्थान्वयानुपपत्त्या उत तात्पर्यानुपपत्त्या वेति प्रसिद्धचरम् । 'तत्वमसी' ति छान्दोग्यवाक्यं च 'तत् . त्वं' इति पदद्वयघटितम् । तत्र लक्षणबीजभूतायाः अनुपपत्तेरेवाभावात् न लक्षणाश्रयणमिति आनन्दमयाधिकरणश्रीभाष्यादौ व्यक्तमुपपादितम् । स्पष्टीकृतं चैतदस्माभिरप्यस्मिन्नेव ग्रन्थे पूर्वम् । 'तत्वमसी' त्यत्र तदिति नपुंसकलिङ्गनिर्देशेन अयमर्थः सूचितः 'तदैक्षत बहुस्यां प्रजायेये' त्यत्र अभेदः यादृशः तादृश एवात्रापीति । अतश्चात्र अन्तर्यामित्वनिबन्धन एवाभेदव्यपदेशः स्वीकर्तव्यः, न त्वत्र अव्युत्पन्नलक्षणादिस्वीकारेण । 'श्वेतकेतो' इत्यस्यापि नवकृत्वो अभ्यस्तत्वेन पित्रा स्वावयवसंबद्धशरीरे जीवस्य कर्ममूलकतया प्रवेशे तन्निबन्धननामकरणं श्वेतकेतुरिति कृतम् । इमं चार्थं श्वेतकेतुरपि जानाति । 'अनेन जीवेनात्मने' ति श्रुत्यनुरोधेन परमात्मनः जीवशरीरप्रवेशेन

श्वेतकेतुबोधकशब्दः परमात्मवाच्येवेति च श्वेतकेतुः ज्ञातुं शक्नोति। पितुः शरीरावयवानां श्वेतकेतुशरीरावयवत्वेऽपि पितुः श्वेतकेतोश्च नाभेदव्यवहारः। परमात्मनश्च जीवज्ञानविकासार्थं जीवशरीरप्रवेशकालिकप्रवेशस्य, उभयोः पितृपुत्रभावस्य च श्रुतिसिद्धतया उद्दालकरूपपित्रपेक्षया परमात्मनि महाराजे विद्यमानं पितृत्वं विलक्षणमिति श्रुतितात्पर्यम्। एतद्बोधनायैव 'तत्त्वमसि श्वेतकेतो' इति श्वेतकेतुशब्दघटिततयैव 'तत्त्वमसी' त्यस्य नवकृत्वो अभ्यासः। अतश्चाभेदवाक्यानां परिणामनिबन्धनोपादानोपादेयभावनिर्वाह्यार्थकत्वेनाप्राधान्यम्' इत्यपि स्वीकर्तव्यम्। अतश्च, तत्वमसीत्यत्र नैव परसंमताभेदः स्वीकर्तुं शक्यते इति लक्षणा तावद्दूरत एव निरस्ता।

किं च 'तत्वमसी' ति वाक्यं च नापूर्वार्थबोधकम्। अपि तु उपसंहाररूपत्वात् प्राप्तार्थनिगमनरूपम्। अत्र च 'तत्' इति नपुंसकलिङ्गनिर्देशेन 'तदैक्षत बहु स्यां' इत्यत्र ब्रह्मभेदो यादृशः तादृशस्यैव 'तत्वमसी' त्यत्र विवक्षितत्वस्य स्फुटतया 'तदैक्षते' त्यत्रोक्तस्यैवार्थस्य 'ऐतदात्म्यमिदं सर्वं' मित्यत्र विशदीकरणेन 'तत्वमसी' त्यस्य चोपसंहाररूपत्वमेव, न त्वपूर्वत्वं इति निर्णीयते।

अपि च 'तत्वमसी' त्यत्र तत् – तस्मात् कारणात् सर्वस्यैतदात्मकत्वात्, सर्वान्तःपाती त्वं असि — सत्ताश्रयः, परमात्मकत्वेनैव जीवस्यापि सत्ता, न त्वन्यथा इत्यप्यर्थः संभवति। एवं 'असि' इति मध्यमपुरुषेणैव त्वमित्यर्थस्य लाभेन 'तत्वं' परमात्मभूतोऽसि, सर्वस्यैव तदात्मकत्वं पूर्वमभिधाय सर्वान्तः-

पातिनः श्वेतकेतोरपि परमार्थत्वं संभवतीति अन्यथासिद्धिद्वयमप्यत्र संभवति इति इदं सामानाधिकरण्यवाक्यमेव न भवति इति एतदनुरोधेन अन्यश्रुतिवाक्यानां पीडनं सर्वथा अयुक्तमेव । यथा च सद्विद्यायाः 'यद्यपि सच्चित्तः' इति द्रमिडभाष्याद्युक्तदिशा सगुणविद्यात्वमेव न तु निर्गुणविद्यात्वं, तथा अस्मद्गुरुचरणानुगृहीतगूढार्थसंग्रहत्रय्यन्तसारामृतादौ व्यक्तम् । 'अन्तर्गुणा भगवती परदेवतेति' इत्यादि संक्षेपशारीरकादिकमपि तत्रैव पर्यालोचितमिति नेह विस्तरः । एवं च, तत्त्वं पदलक्ष्यार्थयोरेवाप्रसिद्धेः, तयोरेवाभेदः वाच्यार्थयोः वाच्यार्थलक्ष्यार्थयोः लक्ष्यार्थवाच्यार्थयोश्च भेदः इत्यादिशतभूषणीकथनं अभित्तिचित्रमनुपादेयमेव । जीवेश्वरयोर्भेदप्रतिपादकसूत्रेषु लक्ष्यार्थवाच्यार्थयोर्भेदः इत्याद्यप्रामाणिककुकल्पनायाः मनागवकाशसत्त्वेऽपि 'आकाशो अर्थान्तरत्वादिव्यपदेशा' दित्यादौ जडाकाशाद्यपेक्षया ब्रह्मणो भेदस्य निरूपणात् न तस्या कल्पनाया अवकाश इति विस्तृतमन्यत्र जीवेश्वरैक्यभङ्गवादपरीक्षासमालोचनादौ ।

यदप्याह शतभूषणीकारः 'उभयेऽपि हि भेदेनैनमधीयते' इत्यत्र अधीयत इत्यस्य एनमित्यनेनैव संबन्धः, न तु विप्रकृष्टेन 'भेदेन' इत्यनेने'ति । तदप्यसमीचीनम् । अस्मिन् ह्यधिकरणे परमात्मैव अन्तर्यामी 'यः पृथिव्यां तिष्ठन्' इत्यादिवाक्येषु अन्तर्यामिप्रतिपादकेषु विवक्षितः इति पूर्वं सूत्रद्वयेन व्यतिरेकपुरस्सरं स्थापनानन्तरं प्रवृत्ते अस्मिन् सूत्रे परमात्मसद्भावप्रतिपादनं न युक्तं पूर्वमेव कृतत्वात्तस्य, अपि जीवात्मनो भेदेन अधीयमानत्वमेव अत्र वक्तव्यम् । अतश्चात्र विशेषणीभूते भेदे एव अधीयमानत्वं सूत्रकृत्तात्पर्यविषयभूतम् । यथा 'लोहितोष्णीषाः

ऋत्विजः प्रचरन्ति ' इत्यत्र विशिष्टविधानेऽपि विधितात्पर्यं अप्राप्ते लौहित्ये। यथा 'दध्ना जुहोति' इत्यादौ दधिहोमाद्यवच्छिन्नायां भावनायां विहितायामपि विधितात्पर्यं विशेषणीभूतदध्यादौ तद्वत्। अतश्च भेदेन अधीयमानतैव परमात्मनि विवक्षितेति भेदस्य न कथंचिदप्यविवक्षितत्वं शक्यशङ्कम्।

यत्तु शतभूषणीकारो लिखति– श्रीभाष्यमते अध्ययनस्य अक्षरग्रहणपर्यन्तत्वस्यैव सिद्धान्तत्वे वर्णनीये 'अधिकोपदेशात्तु' इति सूत्रं 'अस्मान् पृष्टः कोविदारानाचष्टे' इति न्याय एव ' इत्यादि।

तदिदं श्रीभाष्यकाराणामाशयापरिज्ञानेन स्वमते विद्यमानदोषस्य अन्यत्रारोपणात् भ्रमैकविलसितम्। तथा हि, अस्मिन्नधिकरणे 'पुरुषार्थोऽतः शब्दादि' ति प्रथमसूत्रेण विद्याया एव ब्रह्मविषयिण्याः मोक्षसाधनत्वे प्रक्रान्ते 'शेषत्वा' दिति द्वितीयसूत्रं कर्माङ्गजीवान्यब्रह्मणो अभावात् ब्रह्मप्रतिपादकवेदान्तभागस्य 'द्रव्यगुणकर्मसु' इति चातुर्थिकन्यायेन जीवस्तावकत्वमेति जैमिनिमतेन पूर्वपक्षः शांकरश्रीभाष्योभयसंमतम्। तत्र सिद्धान्तसूत्रं 'अधिकोपदेशात्तु' इति, अत्र श्रीभाष्यदृष्ट्या वेदान्तेषु जीवाद्भिन्नस्य (जीवादधिकस्यैव) उपदेशात् तस्य च कर्मकर्तृजीवापेक्षया सर्वांशेष्वपि विलक्षणत्वात्, तत्प्रतिपादकवेदान्तभागस्य न जीवस्तावकसंभवः इति सूत्रार्थः अञ्जसा उपपद्यते, नात्रापृष्टोत्तरत्वशङ्का कथमप्युन्मिषति।

शांकरदृष्ट्या 'अधिकोपदेशात्तु' इति सूत्रमसंगतमेव। जीवभिन्नपरमात्मनो अभावेन व्यक्त्यैक्येन जीवस्तावकत्वमेवोपनिषदामिति शंकायाः कथमप्यपरिहारात्। लोके च पूर्वापात्तधर्मै-

स्साहित्येन अतिरिक्तानां धर्माणां संभव एव अधिकशब्दप्रयोगः दृष्टचरः, न तु पूर्वधर्मविरुद्धधर्मयोगे, इति हि प्रसिद्धचरम् । शांकरमते तु जीवे पूर्वं विद्यमानकर्तृत्वज्ञातृत्वादिधर्मैस्साकं शुद्धदशायां कस्याप्यनुपदेशात् 'अधिकोपदेशा' दित्यसंगतमेव । अपितु कर्तृत्वादिविरुद्धत्वात् शुद्धत्वादीनां 'विरुद्धोपदेशा' दित्येव वक्तव्यमापद्येत । अतः अधिकोपदेशादिति सूत्रयन् सूत्रकारः शातयति भेदविरुद्धं शांकरदर्शनम् । अधिकस्य च शुद्धस्य उपदेश्यत्वासंभवादपि 'अधिकोपदेशादि' ति सूत्रमसंगतमेवेति सूत्रानारूढं शांकरकल्पनम् । जीवभिन्नपरमात्मनो अभावात् कर्मकर्तृस्तावकत्वमेवार्थवादविधयोपनिषद्भागस्येति शङ्कायां जीव-भिन्नपरमात्मानमनङ्गीकृत्योच्यमानं सर्वं समाधानं 'आम्रान् पृष्टः कोविदारानाचष्टे' इति न्यायमेवानुसरेत् । धर्माधिक्याङ्गीकारेऽपि व्यक्तिभेदाभावान् पूर्वपक्षानिरासादित्यास्तामयं विस्तरः ।

यदपि च शतभूषण्यां 'सविशेषब्रह्मवादस्य षोडशलक्षण्यैव गतार्थत्वात् 'अधिकोपदेशात्तु' इति कर्मकर्तुरेवाधिकं असंसार्या-त्मतत्त्वं ब्रह्माभिन्नमुपादिश्यते इति वक्तव्य' मित्यादि लिखितम् । तदपि चर्वितचर्वणमेवेति पूर्वमेव निरस्तत्वात् नेदानीं पुनर्निरस-नीयमास्ते । ब्रह्माभिन्नमुपदिश्यते इति सूत्रानारूढतया स्वोत्प्रेक्षा-मात्रसिद्धम् । कस्यापि धर्मस्यभावात् अधिकोपदेश इति रिक्तं वचः । सन्मात्रग्राहिप्रत्यक्षवादे च ब्रह्मणः सद्रूपस्य प्रत्यक्षेणैव गृहीतत्वात् न हि शास्त्रेणोपदेश्यं किञ्चित् परिशिष्यते इति अद्वैतिनां वेदान्त-शास्त्रप्रमेयस्यान्यस्याभावात् तद्वैयर्थ्यमिति निर्मत्सराः जानन्ति । सिद्धान्ते तु जीवात्मनि संसारदशायां अनभिव्यक्तानां ज्ञानवैश-द्यादीनां धर्माणां मुक्तावङ्गीकारात् सर्वथा जीवव्यतिरिक्तस्य

प्रमाणान्तरानधिगतस्य ब्रह्मणः अङ्गीकारात् न कस्यापि प्रमाणस्य वैयर्थ्यमिति स्पष्टम् ।

एतेन 'मुक्तात्मस्वरूपं तु 'ब्राह्मेण रूपेण जैमिनिरुपन्यासादिभ्यः, आत्मा प्रकरणात्' इत्यादिन्यायैः निर्विशेषब्रह्मस्वरूपमिति फलाध्याये व्यक्त' मित्यादि शतभूषणी परास्ता । निर्विशेषस्यैव गगनकुसुमायमानत्वात् । इदमत्र विस्मयावहं शतभूषणीकाराज्ञानस्य परमनिदानभूतं किञ्चित् पाठकानां पुरतः विज्ञापयामः – ब्राह्मेण रूपेण जैमिनिरुपन्यासादिभ्यः' इति सूत्रानुपूर्वी शतभूषणीकृता लिख्यते । परंतु सा अदृष्टचरा । 'रूपेणे' ति पदरहितयैव 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्येव सूत्रपाठात् । आस्तामिदम् । 'ब्राह्मेणे' ति सूत्रं निर्विशेषब्रह्मस्वरूपपर' मिति शतभूषणीकृतः लेखनं शांकरभाष्यविरुद्धमिति स्वीयं भाष्यमप्यजानतो भूषणीकारस्य परमतनिरसने प्रवृत्तिः कलिलीला, उत धार्ष्ट्यं वा । एतत्सूत्रे शांकरभाष्यं हि – 'स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादि सत्यसंकल्पत्वावसानं, तथा सर्वज्ञत्वं सर्वेश्वरत्वं च, तेन रूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते । कुतः ? उपन्यासादिभ्यः तथात्वावगमात्' इत्यारभ्य — तथा स तत्र पर्येति जक्षन् क्रीडन् रममाणः । सर्वज्ञः सर्वेश्वरः इत्यादिव्यपदेशाश्चैवमुपपन्ना भविष्यन्ति' इति । अत्र च शंकराचार्यनिरूपितं च ब्राह्मरूपं तद्रीत्या आविद्यकं व्यावहारिकं चेति । ब्राह्मरूपं निर्विशेषब्रह्मस्वरूप' मिति शतभूषणीकृद्वदन् स्वदर्शनशक्तिविकलतां सम्यक् प्रकाशयति । यदि 'ब्राह्मेण जैमिनि' रिति सूत्रे निर्विशेषविवक्षा 'चिति तन्मात्र' मित्यौडुलोमिमतस्य कथं भेदेनोपन्यासः घटताम् ? एवं तदुत्तरसूत्रविरोधोऽपि । 'आत्मा प्रकरणात्' इति सूत्रमपि परेषामनु-

कूलम् । अत्र शंकराचार्यैः 'परं ज्योतिरुपसंपद्ये' ति छान्दोग्य-वाक्ये श्रूयमाणं ज्योतिःपदं भौतिकज्योतिषो वाचकं उत ब्रह्मणो वाचकं इति सन्दिह्य भौतिकज्योतिरिति पूर्वपक्षयित्वा ब्रह्मपरतया सिद्धान्तः प्रदर्शितः । परं तु 'ज्योतिर्दर्शनात्' इति सूत्रेणैवास्य गतार्थत्वात् अत्र शंकाया अनुन्मेषाच्च शांकरव्याख्यानमयुक्तम् ।

चतुर्थाध्यायान्तिमपादप्रथमाधिकरणे 'मुक्तः प्रतिज्ञानात्' इति सूत्रानन्तरं 'आत्मा प्रकरणात्' इति सूत्रम् । अस्मिंश्च स्वरूपाविर्भावः कथ्यते । एवं च 'मुक्तोपसृप्यव्यपदेशाच्चे' ति प्रथमाध्यायसूत्रप्रतिपादिता मुक्तप्राप्तिः, मुक्तस्वरूपाविर्भावश्च एक-पदार्थ इति प्रतीयते । प्रजापतिविद्यान्ते 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' इत्युपसंहार-दर्शनात्, सर्वलोककामचारः सगुणविद्याफलमेव, न तु निर्गुण-विद्याफलमिति, नानेन सूत्रेण निर्विशेषात्मस्वरूपप्रतिपादनम् ।

इदमत्र औपनिषदरहस्यम्— 'संपद्याविर्भावः स्वेन शब्दात्' इति एतत्पादादिमसूत्रे (यादृशं विद्याफलमुक्तं, तदेव तद्विद्या-निष्ठस्यैव फलं, 'जगद्व्यापारवर्जं' इति तत्पादान्तिमाधिकरण-प्रथमसूत्रेऽपि विवक्षितमिति वक्तव्यम् ) 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति वाक्यमेव विवक्षितमिति अद्वैतिनामपि संमतम् । इदं च वाक्यं दहरप्रजापति-विद्ययोर्वर्तते । तत्र च दहरविद्या सगुणोपासनं अपरब्रह्मविषयक-मप्रमात्मकं अर्चिरादिद्वारा अपरमुक्तिफलकम् । प्रजापतिविद्या निर्गुणविद्या परब्रह्मविषयिणी प्रमात्मकज्ञानरूपा परमुक्तिफला चेति परेषां मतम् । 'अस्माच्छरीरात् समुत्थायेत्यत्र आसनादुत्थानवत्

नात्रोत्थानं विवक्षितम् । किं तु आत्मनः शरीरात् विवेकज्ञानमेवेति च'। परं त्वयमर्थः न सूत्रकृत्संमतः । 'भोगेन त्वितरे क्षपयित्वा अथ संपद्यते' इति चतुर्थाद्यपादान्तिमसूत्रे 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' इति श्रुत्युक्तं निर्गुणविद्यात्वेन परसंमतायाः सद्विद्यायाः फलं प्रादर्शि । अनन्तरं उत्क्रान्तिपादे छान्दोग्यषष्ठगतसद्विद्यायामेवोत्क्रान्तिनिरूपणेन अथशब्दार्थानन्तर्यं व्यवधानसहमिति निरूप्य तत्रैवाष्टमप्रपाठके दहरविद्यायां 'य एष संप्रसादो अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य' इत्यत्रोत्क्रान्त्यादिकं संग्रहेणाभिधाय 'अथ यत्रैतस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स वामिति वाह्रोद्वामीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्' इत्यत्रा 'स्माच्छरीरात्समुत्थाये' त्यत्रोत्क्रान्तिरेव विवक्षितेति प्रकटीकृत्य प्राक् छान्दोग्ये उपकोसलविद्योक्तार्चिरादिगतिः ब्रह्मप्राप्तिफलका संग्रहेण प्रदर्शिता ।

एतेन प्रजापतिविद्यायां 'अस्माच्छरीरात्समुत्थाय' इत्यत्रोत्क्रान्तिगत्यादिकं दहरविद्यावाक्यानुसारेणापि विवक्षितमिति स्फुटं निर्मत्सराणां विदुषाम्। 'संपद्याविर्भावः स्वेन शब्दात्' इति चतुर्थचतुर्थप्रथमाधिकरणविवक्षितविद्याविशेषनिष्ठस्य 'जगद्व्यापारवर्ज' इत्यन्तिमाधिकरणप्रथमसूत्रे विवक्षितत्वादेव 'अनावृत्तिश्शब्दा' दिति तदन्त्यसूत्रे उक्तविद्यानिष्ठस्य 'अप्रतीकालंवनान्नयतीति बादरायणः उभयथा च दोषात्तत्क्रतुश्चे' ति चतुर्थतृतीयान्तिमाधिकरणसूत्रोक्तार्चिरादिगतिद्वारकब्रह्मप्राप्त्यनन्तरमनावृत्तेः श्रुत्युक्तायाः सिद्धान्तकरणं संगच्छते । एवं च दहरविद्याफलमेव गत्यनन्तरकालिकस्वरूपाविर्भावरूपं 'संपद्याविर्भावस्स्वेन शब्दात्' इत्यत्रोक्त-

मिति वृत्तिकृताऽपि निर्धारितम् । अतः एतदधिकरणघटकीभूतस्य 'आत्मा प्रकरणात्' इत्यस्य परसंमतनिर्विशेषबोधकत्वं नोचितमिति शतभूषणीकारोक्तिरनादरणीयैव ।

'यथा च 'आत्मा प्रकरणात्' इति सूत्रघटकीभूतात्मन् शब्दस्य 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावः तस्मादात्मेति गीयते ॥'
इति स्मृतिवशात् धर्मभूतज्ञानद्वारा व्याप्तिविशिष्टचेतनवाचित्वं तथा व्यक्तं अस्मद्गुरुचरणानुगृहीतगूढार्थसंग्रहभावप्रकाशादौ इत्यलं पल्लवितेन ।

'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति ब्राह्मेण रूपेण जीवात्मनो नित्यत्वं निर्धार्यते' इति शतभूषणीकारलेखने ब्राह्म-रूपस्य शांकरभाष्योक्तदिशा अपहतपाप्मत्वादि सत्यसंकल्पत्वान्त-धर्मविशिष्टजीवात्मरूपत्वे तस्य च नित्यत्वं सिद्धान्तेऽप्यभि-मतमेवेति नानुपपत्तिः । यदि च ब्राह्मरूपं निर्विशेषस्वरूपमिति शतभूषणीकारस्य भ्रमः, तर्हि तस्य अप्रसिद्धत्वश्रुतिसूत्रादिविरो-धादिरूपदूषणजातं पूर्वं प्रपञ्चितमेव ।

'अहमर्थो हि जीवः जननमरणशाल्यनित्यः । अत एव 'जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ।' इति गीता, 'ब्रह्महत्यादिप्रायश्चित्तादिविधयश्चे' त्यादि शतभूषणी च श्रुत्याद्य-परामर्शेनैव । 'अनुस्मृतेश्चे' ति सूत्रशंकरभाष्ये 'अपि च दर्शन-स्मरणयोः कर्तर्येकस्मिन् प्रत्यक्षः प्रत्यभिज्ञाप्रत्ययः सर्वस्य लोकस्य प्रसिद्धः । अहमदो अद्राक्षमिदं पश्यामी' ति । यदि तयोर्भिन्नः कर्ता स्यात् 'ततोऽहं स्मरामि, अद्राक्षीदन्यः' इति प्रतीयात् ।

नत्वेवं प्रत्येति कश्चित्' इत्यारभ्य 'य एवाहं पूर्वेद्युरद्राक्षं स एवाहमद्य स्मरामीति निश्चिततद्भावोपलम्भात्' इति । एवं 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इति सूत्रशंकरभाष्येऽपि 'इतश्च स एवोत्तिष्ठति । यत् कारणं अतीतेऽहनि अहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात् स्मरणं अन्यस्योत्थाने नोपपद्यते । न ह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति ।' इत्यादिचोक्तम् । अतः अहमर्थस्यानित्यत्ववादः भूषणीकारस्य स्वीयभाष्येणैव निरस्तः । अद्वैतरीत्या 'अहं जानामी' त्यत्र अहमित्यत्रापि अन्तःकरणावच्छिन्नचितः 'जानामि' इत्यत्रापि चितः भानमिति वक्तव्यम् । तदिदं अनुभवविरोधादनुपादेयम् । उभयत्र चितः चित्वेन भानस्य कस्याप्यनुभवासिद्धत्वात् । अतोऽहमर्थस्य प्रत्यक्त्वरूपेण भानस्य अनुभवसिद्धत्वेन प्रमाणबलाच्च तस्य नित्यत्वमङ्गीकृत्य यास्सिद्धान्तः श्रीभाष्यकाराणां, स एव युक्तः, न त्वद्वैतासिद्धान्तः । अत एव 'आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज' इति विष्णुपुराणवचनमपि संगच्छते । विस्तरस्तु अहमर्थात्मत्वसमर्थनवादपरीक्षासमालोचने महान् कृतः तत्रैव द्रष्टव्यः । 'नात्मा श्रुतेर्नित्यत्वाच्चे' ति सूत्रे व्राह्मेण रूपेण जीवात्मनो नित्यत्वं निर्धार्यते इति समीचीनमेव । नात्राक्षेपः कश्चनोदेतुमर्हति । अपहतपाप्मत्वादिधर्मविशिष्टस्य जीवात्मनः कदापि अनित्यत्वशंकाया अभावात् । 'अहमनुरभवं सूर्यश्च' इत्यादिवामदेववाक्यं अहमर्थस्य अनित्यतावादिनां विनाशकम् । 'अजो नित्यः शाश्वतोऽयं पुराणः' इति जीवनित्यत्वाम्नानं तु ब्रह्माभिन्नासंसारिमुक्तात्मस्वरूपमभिप्रेत्य' इति भूषणीवचनमपि न युक्तम् । गीताद्वितीयाध्याये देहात्मविवेकरहिततया शोचन्तं अर्जुनं प्रति आत्मनित्यत्वोपदेशेनैव तच्छोकस्य निवर्त-

नीयत्वेन ब्रह्मप्रसक्तेरेवाभावात्, जीवनित्यत्वप्रतिष्ठापनानन्तरमेव भक्त्यादेरुपदेश्यत्वात् 'देही नित्यमवध्योऽयं' इति देहिन एव जीवस्य प्रस्तुतत्वात् 'अस्मिन्नेव श्लोके पूर्वार्धे, 'न जायते' इत्यादिना जननादीनां निषिद्धत्वात् तस्य च शुद्धचिति प्रसक्त्यभावाच्च । 'अजो नित्य' इति केवलमुक्तजीवपरमेवेति भूषणी नितरामसंबद्धैव । 'अजो नित्यः – अयं पुराणः' इत्यत्र 'अय' मिति शब्दस्य पूर्वपरामर्शिसर्वनामशब्दत्वात् पूर्वत्र च संसारिण एव प्रस्तुतत्वात्, ब्रह्मणः, मुक्तात्मस्वरूपस्य वा प्रसक्तेरेवाभावात् शतभूषणीकथनमयुक्तम् । अत एव पूर्वश्लोके 'य एन' मित्यत्र 'एनं - प्रकृतं देहिनं' इति शांकरभाष्यम् । एवं चास्मिन् श्लोकेऽपि 'अयं' इति शब्दः प्रकृतदेहिवाच्येवेति न ब्रह्मप्रसक्तिरित्यास्तामयं विस्तरः । 'अधिकोपदेशात्तु' इति सूत्रे ब्रह्माभिन्नासंसारिजीवः विवक्षितः, इति कथाया अबद्धत्वं पूर्वमेवास्माभिस्साधितमिति तद्दृष्टान्तेन शतभूषणीकारस्य गीतार्थसाधनमपि तेनैव निरस्तमेव ।

एतेन 'चराचरव्यपाश्रयस्तु व्यपदेशो भाक्तः' इति जीवानित्यत्वश्रुतीनां भाक्तत्वं सूत्र्यते' इति भूषणी निरस्ता ।

अत्रापि सूत्रानुपूर्व्यां शतभूषणीकारः नितरां भ्रान्तः । 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्' इति सूत्रानुपूर्वी, न तु शतभूषणीकारदर्शितरीत्या 'चराचरव्यपाश्रयस्तु व्यपदेशो भाक्त' इत्येवमिति । आस्तामिदम् । जीवानित्यत्वस्थापनानन्तरं हि तद्विरुद्धानित्यत्वश्रुतीनां भाक्तत्वप्रदर्शनं युक्तं स्यात्, न तु ततः पूर्वम् । जीवनित्यतास्थापकं च 'नात्मा श्रुते' रिति उत्तरसूत्रम् । अतः शांकरव्याख्या सूत्रकाराशयविरुद्धा । 'तद्भाव-

भावित्वात्' इति सूत्रखण्डे तच्छब्दस्य अप्रस्तुतशरीरपरत्वं च सुतरामयुक्तम् । ब्रह्मपरत्वं तु युक्तं प्रकृतत्वात् । 'नात्मा श्रुते'रित्यधिकरणं च शांकराणां व्यर्थमेव, 'चराचरे' ति सूत्रेणैव आत्मनित्यतायाः प्रतिपादनात् । एवं 'एक आत्मनः शरीरे भावात्' इत्यधिकरणेनापि पौनरुक्त्यं शांकरमते । अतः श्रीभाष्यकार-प्रदर्शितयोजनैव गरीयसी । चराचरवस्तुसंबन्धितत्तद्वाचकः शब्दः ब्रह्मणि अभाक्तः मुख्य एव । 'अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि' इति सर्वस्य वस्तुनः नामरूपभाक्त्वस्य, आत्मतया ब्रह्मानुप्रवेशभावभावित्वात् । लौकिकास्तु एवमजानन्तः वाच्यैकदेशे प्रयुञ्जते' इति च सूत्रार्थः भगवता वेदान्तदीपे प्रदर्शितः । एवं चानेन सूत्रेण 'तत्त्वमसी' त्यादिसामानाधिकरण्यवाक्येषु अखण्डार्थे सामानाधिकरण्यं इति स्वमनीषामात्रसिद्धकुकल्पनया ये विवर्ता-द्वैतिनः जीवब्रह्मणोरभेदं वदन्ति, ते श्रुतिसूत्रपरिपन्थिनः इति स्फुटं सूत्रकारेणोक्तं भवति । तथा हि– देवादिशब्दाः देवादिशरीरसंयुक्त-जीवबोधकाः इति 'चराचरव्यपाश्रयस्तु' इति सूत्रशंकरभाष्ये स्पष्टम् । तत्रेयान् विशेषः, जातिशक्तिवादे व्यक्तेर्लक्षणया भानाङ्गी-कारे देवादिशब्दाः आत्मनि लाक्षणिकाः । व्यक्तावपि शक्त्यङ्गीकारे शक्ता एवेति । एवं च 'ऐतदात्म्यमिदं सर्वं' मित्यत्र, अन्तर्यामि-ब्राह्मणे 'स त आत्मा अन्तर्याम्यमृतः, एष त आत्मा अन्तर्या-म्यमृतः' इत्यत्र चात्मन्शब्दः न स्वरूपवाची, किं तर्हि ? व्यापक-चेतनवाची (अन्तःप्रविश्य नियन्तृवाची) । ततश्चाविभागघटित-शरीरशरीरिभावसंबन्धनिबन्धनमेव 'तत्त्वमसी' त्यादौ सामाना-धिकरण्यम् । इत्थं च जातिगुणयोरिव जीवस्यापि पदार्थैकदेशतया अंशत्वाभ्युपगम एव एकविधप्रामाण्याभ्युपगमात् भेदाभेदयो-

स्संगतिर्नान्यथा । अत एव च 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' इति एतत्पादीयान्तिमाधिकरणसूत्रमपि संगच्छते । अतश्च 'तत्त्वमसी' त्यादौ सामानाधिकरण्यं अन्तर्यामित्वनिबन्धनमेवेति सूत्रेणानेन बोधितम् । विस्तरस्तु जीवेश्वरैक्यभङ्गवादपरीक्षासमालोचने द्रष्टव्यः ।

'असंभवस्तु सतो अनुपपत्तेः' इति सूत्रं त्वंपदवाच्यस्य सोपाधिशरीरसंयोगवियोगाभ्यां' इत्यारभ्य सूत्रद्वयमपि तत्त्वंपदलक्ष्यार्थनित्यत्वनिरूपणपर' मिति शतभूषणीकारकथनमप्यसंबद्धमेव । वाच्यत्वलक्ष्यत्वकथाया एव अप्रस्तुतत्वात् अयुक्तत्वाच्च तत्पदलक्ष्यार्थ त्वंपदार्थलक्ष्यार्थयोर्वस्तुतः अभिन्नत्वेन तत्पदलक्ष्यार्थनित्यत्वनिरूपणादेव त्वंपदलक्ष्यार्थनित्यत्वस्यापि सिद्धत्वेन 'नात्मा श्रुते' रित्यादीनां वैयर्थ्यम् ।

'ज्ञोऽत एव, कर्ता शास्त्रार्थवत्वात्, अंशो नानाव्यपदेशात्' इत्यादिसूत्राणि स्वरूपतश्चिन्मात्रत्वं औपाधिकमेव ज्ञातृत्वकर्तृत्वादिकं उपपादयन्तीत्यादिशतभूषणीलेखः परिपूर्णोन्मादादेव । सूत्रे ज्ञातृत्वकर्तृत्वादेरुपपादनेऽपि अनुक्तचिन्मात्रपरत्वं, उक्तकर्तृत्वापरत्वमित्यादिकल्पनं हि श्रुतिसूत्रपीडनायैव । श्रुतीनामेवापार्थमविद्यमानार्थं च वर्णयतां शाङ्कराणां सूत्रपीडनं सूत्राण्यथाकरणं वा नाश्चर्यकरम् । 'एष द्रष्टा श्रोता, अदृष्टो द्रष्टा' इत्यादि श्रुतयो हि आत्मनः निरुपाधिकमेव ज्ञातृत्वं चाहुः ।

'कर्ता शास्त्रार्थवत्वात्' इत्यादिन्यायाः पूर्वमीमांसयैव शरीरातिरिक्तकर्तृनित्यात्मज्ञानस्य जातत्वात् औपाधिकं कर्तृत्वादिकं अनुसंधेयमिति निरूपणार्थं प्रवृत्ता' इति शतभूषणीकारो निर्लज्जं

लिखति । उपाधिवाचकपदस्याभावेऽपि कर्तृत्वमौपाधिकं बोध्यते इत्युच्यते यदि, तर्हि पदनिर्देशेऽपि शून्यमेव तदर्थ इति माध्यमिकमतमेव सूत्रकारैर्विचार्यते इत्युक्तौ न किमपि बाधकं पश्यामः । अविद्यमानार्थविचारस्योभयत्र तुल्यत्वात् । अन्तःकरणतद्धर्मवृत्त्यध्यासेन ज्ञातृत्वमात्मनः इति सांख्यवासनया कथनं तु अन्तःकरणवृत्तेः तदध्यासस्य वा स्वरूपं निरूपयितुं न शक्यते इति पूर्वमेव निराकृतम् । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिप्रमाणैः ब्रह्मणः ज्ञानबलक्रियादिकस्य स्वाभाविकत्वप्रतिपादनात् तेषां औपाधिकत्ववादः अवैदिकः इति निश्चीयते । यदि 'स्वाभाविकी' इत्यस्य 'औपाधिकी' इत्यर्थकल्पनं, तर्हि विलक्षणव्युत्पत्तिः । शब्दार्थज्ञानमपि नास्तीत्येव तर्हि सिध्येत् । जीवस्य 'ध्यायतीव लेलायतीवे' त्यादिप्रमाणैः कर्तृत्वं निषिध्यते इति चेत्, स्वायत्तकर्तृत्वस्यैव निषेधेन दोषाभावात् ।

जीवात्मनो अणुत्वं सूत्रकारैः 'नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात्, उत्क्रान्तिगत्यागतीना' मित्यादिसूत्रैः स्पष्टं प्रत्यपादि । विभुत्वं तु मनागपि कुत्रापि न सूचितम् । अतः 'एषोऽणुरात्मा' इत्यादिश्रुतिसिद्धमणुत्वमेवोचितं जीवस्य, न विभुत्वमिति श्रीभाष्यकारीयः पक्षः । सर्वव्याप्तिस्तु जीवस्य, प्रकाशेन दीपस्येव स्वधर्मभूतज्ञानेन न दुष्यति । अत एव 'यच्चास्य सन्ततो भावः' इति स्मृतौ 'अस्य भावः' इति निर्देशः घटते ।

ब्रह्ममीमांसायां तु यद्यपि धर्मभूतज्ञानद्वारा आत्मनः सर्वगतत्वश्रुतेः धर्मभूतज्ञानव्याप्त्योपपत्तिः न भाष्यते' इति शतभूषणी-

कथनमपि ब्रह्ममीमांसापरिशीलनादेव । 'प्रदीपवदावेशस्तथा हि दर्शयति' इति (४. ४. १५) सूत्रं हि यथा प्रदीपस्यैकस्मिन् देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः तथा आत्मनोऽपि एकदेशस्थितस्य स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः इत्यर्थकं, धर्मभूतज्ञानद्वारा सर्वव्याप्तिं जीवस्याणोरुपपादयतीति व्यक्तम् । एवं गुणाद्वाऽऽलोकवदित्यादि सूत्रमपि । अधिकं तु संविदात्मत्वभङ्गवादपरीक्षासमालोचने प्रपञ्चितम् । कर्ममीमांसायां हि आत्मनः शरीरातिरिक्तत्वं नित्यत्वं च अवगत्य कर्मसु प्रवृत्तिस्सञ्जाता । तस्य च ब्रह्माधीनत्वं परायत्तकर्तृत्वं उपासनेन गतिद्वारा मुक्तिरूपफलभाक्त्वं चेत्यादयश्चार्थाः ब्रह्ममीमांसयैवावसेया इति ब्रह्मविचारे जीवनिरूपणं संगच्छते । अद्वैतिनां तु जीवात्मतत्त्वस्यैव अभावात् उपासनादेश्च भ्रमत्वेन अननुष्ठेयत्वात् अगतिकत्वात् गतिसाध्यमुक्तिभाक्त्वाभावाच्च जीवात्मतत्त्वविचारस्सर्वोऽपि काकदन्तपरीक्षावत् व्यर्थ एव तेषां संपद्यते । स्वप्नाद्यवस्थासु स्वाप्निकपदार्थस्रष्टृत्वरूपमहिम्नः ब्रह्मणि प्रतिपादनेन प्राप्यतृष्णाप्रतिपादनमुखेन निरूपयिष्यमाणोपासनोपयोगित्वं, जीवात्मनश्च तादृशमहिमाभावात् नोपास्यतेति निरूपणार्थमेव जीवस्य स्वप्नावस्था परीक्षिता तृतीयद्वितीयपादे । एवं तदुत्तराधिकरणादावपि सुषुप्त्याधारत्वेन ब्रह्ममहिमप्रतिपादनमेव । अत एव बृहदारण्यके 'स हि कर्ता' इत्यादिना ब्रह्मणः स्वाप्निकपदार्थसृष्टिकर्तृत्वं कण्ठत एवोक्तम् । सर्वमिदमद्वैतिनां प्रतिकूलमेवेति ।

एतेन 'आत्मन्यध्यासेनैव स्वाप्निकानामिव जागरिकाणामपि सत्ता, न तु स्वरूपतः, आत्मव्यतिरिक्तानां केषामपि सत्तेति ज्ञायते' इति शतभूषणी परास्ता । प्रसिद्धरथादिविलक्षणरथादि-

स्रष्टृत्वनिरूपणमात्रेण अध्यासप्रसक्तेरभावात् । 'स हि कर्ते' ति स्रष्टृत्वाख्यानस्यायुक्तत्वापत्तेश्च ।

यदपि चेदं शतभूषणीकारचोद्यं श्रीभाष्यमते जागरिकतावस्थो जिज्ञासाधिकारी स्वप्नाद्यवस्थावत् कथं न विचारित इति तदिदं स्वाज्ञानप्रकाशनमेव । द्वितीयाध्यायतृतीयपादे ज्ञाधिकरणकर्त्रधिकरणादीनां जाग्रदवस्थानिरूपणपरत्वात् । एवं तृतीयाध्यायप्रथमपादे 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्या' मित्यारभ्य समग्रेण तेन पादेन जीवात्मनः जाग्रदवस्था किल विचारिता । एतादृशदुःखभाक् जीवः स्वदुःखपरिहारायैव ब्रह्मोपासनायामधिकरोति इति किल तत्र सूत्रकारहृदयम् । अतः शतभूषणीचोद्यं मौढ्यादेव । अत एव तदन्तरप्रतिपत्त्यधिकरणे शंकरभाष्येऽपि 'अथेदानीं उपकरणोपहितस्य जीवस्य संसारगतिः' इति, 'तत्र प्रथमे पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिभेदः प्रदर्श्यते वैराग्यहेतोः' इति चोक्तम् । 'जागरिकसत्यत्वादिविचारेऽपि कथं न कृतः' इति शतभूषण्याक्षेपस्तु, जागरिकसत्यतायां संदेहाभावात् तत्र असत्यताकथाया एव अभावात्, संदिग्धस्य, अज्ञातस्यैव वा विचार्यत्वाच्च नावसरं लभते इति आबालगोपालं प्रसिद्धमेव ।

विवर्ताद्वैतिनां मते ब्रह्मान्यस्य सर्वस्य मिथ्यात्वेन वियदादीनां प्राणादीनां (इन्द्रियादीनां च) कार्यताप्रतिपादनपर पादद्वयस्याप्यसंगतिः । न हि शुक्तिकारजतादेः रज्जुसर्पादेर्वा कार्यताज्ञानं ब्रह्मकार्यत्वोपपादकम् । दृष्टिसृष्टिपक्षस्य मधुसूदनादिर्मुख्यतया आदृतस्य स्वीकारे प्रातिभासिकत्वं किल सर्वस्य जगतः । अतः

पादद्वयमपीदं शांकराणामनुपयुक्तम् । एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञा हि सर्वस्य सत्यतया अङ्गीकार एव घटते इति वेदार्थसंग्रहादौ भगवता भाष्यकृता सम्यगुपपादितम् ।

या चेयं शतभूषणीकारभ्रान्तिः श्रीभाष्यमते आकाशादीनां नित्यत्वेऽपि कथं जिज्ञासितब्रह्मासिद्धिः, 'आकाशशरीरं ब्रह्मे' ति श्रुतौ आकाशशरीरकत्वस्य बोधः श्रीभाष्यमते अङ्गीक्रियते, तत्र 'आकाशं ब्रह्मे' त्याम्नानमानमात्रेण तदर्थसिद्धौ शरीरपद-वैयर्थ्यात् । अतोऽवगम्यते शब्दानां शरीरिपर्यन्तत्वं न युक्तमिति' इति । तदिदं सर्वं केवलं स्वान्यथाज्ञानविलसितम् – तथा हि, द्वितीयाध्यायो हि पूर्वाध्यायनिरूपितब्रह्मकारणत्वविरोधपरिहारार्थः । तत्र, ब्रह्मान्यकारणत्ववादिभिः ब्रह्मकारणत्वरूपश्रौतसिद्धान्ते ये आक्षेपास्ते पादद्वयेन परिहृताः । अधुना तु, श्रुतावेव वियदादीनां नित्यत्वेन आम्नानात् तेषां ब्रह्माजन्यत्वेन ब्रह्मणः सर्वका-रणत्वासिद्धिः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्चासिद्धिः इति शंका वियत्पादप्राणपादाभ्यां निराक्रियते । सूक्ष्मावस्थारूपेण प्रकृतेर्नित्य-त्ववादिनोऽपि श्रीभाष्यकाराः आकाशादेः कार्यत्वमेव स्वीचक्रुः । अतः आकाशादेः कार्यताऽनिरूपणे ब्रह्मणः सर्वकारणत्वासिद्ध्या जिज्ञासितब्रह्मासिद्धिरेव स्यात् इति पादद्वयाभ्यां वियदादीनां कार्यता-निरूपणमावश्यकमेव श्रीभाष्यदृष्ट्या । शांकराणां मते एव तत्पाद-द्वयानुपपत्तिः पूर्वं प्रदर्शिता । 'आकाशशरीरं ब्रह्मे' ति श्रुतिश्च आकाशशरीरकत्वस्य ब्रह्मणि बोधनाय न प्रवृत्ता । अन्तर्यामि-ब्राह्मणेनैव तस्यार्थस्य सिद्धत्वात्, शरीरपदवैयर्थ्यापाताच्च । किं तर्हि? पूर्वं 'स एषो अन्तर्हृदय आकाशः' इति परविद्या प्रस्तुता ।

तदनन्तरं च, 'अन्तरेण तालुके । . . . व्यपोह्य शीर्षकपाले ।' इत्यादिना च अर्चिरादिगतिः प्रदर्शिता । तदनु 'एतत्ततो भवति' इति अर्चिरादिमार्गेण गमनानन्तरं एतद्भवति इति इत्युक्तम् । किं तदित्यत्राह– 'आकाशशरीरं ब्रह्मे' ति – आ समन्ताद् प्रकाशमानदिव्यमङ्गलविग्रहयुक्तं आविर्भूतब्रह्मरूपं भवति इत्यर्थः । एवमेव शंकराचार्यैः एतत्प्रकरणार्थः प्रदर्शितः । 'आकाशशरीरं' इत्यत्रापि 'आकाशवत् सूक्ष्मं शरीरमस्ये' त्यर्थः वर्णितः । अतः शतभूषणीलेखनं भ्रान्त्यैवेति सिद्धम् ।

एतेन 'चराचरव्यपाश्रयस्तु व्यपदेशो भाक्तः तद्भावभावित्वात्' इति सूत्रं आकाशादिशब्दानां भूताकादौ गौणत्वव्यवस्थापनपरमिति श्रीभाष्यसिद्धान्तसूत्राशयविरुद्धः । न हि तस्य श्रीभाष्यदिशा अद्वैतपथा वा आत्मतत्वविचारपरे अस्मिन् संदर्भे संगतिलेशोऽपि' इत्यादि शतभूषण्यपि परास्ता । सूत्रस्यास्य अद्वैतपथा संगतिलेशोऽपि नास्तीति तु तथ्यं वचः । नैतत्सूत्रमात्रस्य संगत्यभावः तन्मते, सर्वेषां सूत्राणामपि अद्वैतासंगतत्वमेव हि प्रसिद्धचरम् । श्रीभाष्यदृष्ट्या असंगतत्वमिति तु रिक्तं वचः । तेजोऽधिकरणे 'तदभिध्यानादेव तु तल्लिङ्गात् सः' इति सिद्धान्तसूत्रे 'तत्तेज ऐक्षत, ता आप ऐक्षन्त' इत्यादिवाक्येषु ईक्षितृत्वेन प्रतीयमानं 'तेजः, आपः' इत्यादिशब्दैरभिधीयमानं तत्तच्छरीरकं परमात्मैवेति प्रसक्तम् । तत्रेयं शंका भवति तेजःप्रभृतिशब्दाः लोके तत्तद्वस्तुवाचकत्वेन हि प्रसिद्धाः तेषां च ब्रह्मवाचित्वे तैस्तैश्शब्दैः तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्धो विरुध्येतेति । तत्र 'चराचरे' सूत्रेण समाधानमुच्यते । आकृत्यधिकरणनयेन सर्वेषां शब्दाना-

मात्मवाचित्वात् 'अनेन जीवेने' त्यादिवाक्यैश्च ब्रह्मणः सर्वात्मत्वावगमात् । वस्तुतः सर्वेषां शब्दानां ब्रह्मवाचित्वमेव मुख्यम् । तत्तद्वस्तुमात्रव्यपदेशस्तु अमुख्यः, एकदेशे प्रयोगात्' इति । अतः शतभूषणीकथनं तावदयुक्तमिति । वियत्प्राणादिविचारस्य जीवात्मतत्वविचारस्योभयस्यापि तयोः ब्रह्मकार्यत्वोपपादनद्वारा समन्वयाध्यायोक्तब्रह्मकारणत्वस्य, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्चोपपादकत्वात् न श्रीभाष्यकारमते असंगतिः, अपि तु अद्वैतिनां मत एव तात्विकस्य जीवस्य वियदादेश्चानङ्गीकारात् तदनुपपत्तिः, विस्तरस्तु पूर्वमेवासीत् । अतः द्वितीयाध्यायः अद्वैतिनां सुतरामननुगुणः ।

अद्वैतिनां मते मुक्तेर्ब्रह्मीभावस्य उपासनादिविद्यासाध्यत्वाभावात्, तदर्थं कर्मणामनुष्ठानस्य च दूरे निरस्तत्वात् तृतीयाध्यायः साधनाध्यायापरपर्यायः उपासनादेर्मुक्तिसाधनत्वनिरूपणाय प्रवृत्तः तेषामत्यन्तमस्वरसः । अगतिकानां चाद्वैतिनां साधनभूतोपासनाविद्वेषिणां परब्रह्मगुणमत्सरिणां च सगुणब्रह्मोपासनपरतृतीयाध्यायसाध्यमस्ति किंचित् ।

एतेन 'तत्राङ्गाङ्गिभावाध्याये साधनाध्याये वा कर्मणां विविदिषासाधनत्वमधिकृत्य 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्यादिन्यायाः सूत्रिताः' इत्यादिः 'ततश्च सर्वाण्यधिकारिविशेषणानि साधनाध्यायसंगृहीतानि अद्वैतमत एव स्वरसानि' इत्यन्ता शतभूषणी परास्ता ।

कर्मणां विद्यासाधनत्वं 'सर्वापेक्षा च यज्ञादिश्रुतेः, अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इत्यादिसूत्रैस्संप्रतिपन्नं तच्च-

दाधिकरणेषु शंकराचार्याणां च संमतं विविदिषामात्रहेतुत्ववादि-भूषणीकारपक्षं निरस्यतीति नास्माकं तत्र पृथङ्निरासप्रयत्नः अपेक्षितः । 'ततश्च विविदिषासंन्यासिनामप्याजीवं स्वाश्रमधर्मानुष्ठानं अन्येषामाश्रमिणामिव वितथम्' इति शतभूषणी असंबद्धार्थिका । जीवन्मुक्तेर्निरूपणाशक्यत्वादेव च 'जीवन्मुक्तानां धर्माधिकारः स्वयमेव निवर्तते' इति शतभूषणी नैवोत्तिष्ठति । एतद्विस्तरस्तु जीवन्मुक्तिभङ्गवादपरीक्षासमालोचने । यथा च साधनचतुष्टयस्य पूर्ववृत्तत्वासंभवः तथा साधनचतुष्टयस्य पूर्ववृत्तत्वभङ्गवादपरीक्षासमालोचने सम्यक् प्रतिपादितमिति नेह चर्वितचर्वणं क्रियते ।

'गृहस्थानां तु साधनचतुष्टयसंपन्नानां . . . . कर्माधिकारनिवृत्त्या न कर्मयोगाधिकारः' इति शतभूषणीकारलेखनं 'मोक्षाधिकारी संन्यासी गृहस्थः किल कर्मणि' गृहस्थानां सर्वथा मोक्षानधिकारं स्पष्टं वदद्भिः शंकराचार्यैरेव निरस्यते । 'मोहात्तस्य परित्यागः तामसः परिकीर्तितः' इति च गीताचार्यः स्वाश्रमधर्मत्यागं भूषणीकारसंमतं मोहादेवेति स्पष्टं ब्रवीति । 'तान्याचरथ नियतं सत्यकामाः, 'क्रियावानेष ब्रह्मविदां वरिष्ठः ।' इत्यादिश्रुतयः कर्मावश्यकताप्रतिपादकाः कर्मनैरपेक्ष्यवादिनं भूषणीकारं निष्करुणं हि मारयन्ति । सूत्रकारोऽपि च भगवान् 'आप्रयणात्तत्रापि हि दृष्टं, अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्, सहकारित्वेन च, सर्वापेक्षा च' त्यादिभिर्नैकैः सूत्रैः कर्मावश्यकतां प्रतिपादयन् कर्मानपेक्षत्वपक्षं दूरीकरोति । अयमत्र सूत्रकारो हि – प्रथमे जिज्ञासासूत्रे ब्रह्मणः 'तद्विजिज्ञासस्व, 'भूमा त्वेव विजिज्ञासितव्यः,'

तान्याचरथ नियतं सत्यकामाः' इत्याद्यनुसारेण इच्छाविषयत्वरूपफलत्वं, 'परात्परं पुरुषमुपैति दिव्य' मित्याद्यनुसारेण 'मुक्तोपसृप्यव्यपदेशाच्चे' त्यत्र प्राप्यत्वं पञ्चाग्निविद्याधूमादिमार्गपुनरावृत्तिनिरूपणेन वैराग्यं (३. १ पादे) पराभिध्यानादेव मोक्षं (३. २. ४.) विहितज्ञानस्यैव पराभिध्यानद्वारा मुक्तिहेतुत्वं, तस्यावृत्तज्ञानरूपत्वं तत्र च शमदमादेराश्रमविहितकर्मणां च सहकारित्वं उत्क्रान्त्यर्चिरादिगतिद्वारा परंज्योतिरुपसंपत्तिस्वस्वरूपाविर्भावापुनरावृत्तिहेतुत्वं च प्रतिपादयति । एवंवदतस्सूत्रकृतः ज्ञानवैधुर्येण कर्मानुतिष्ठतां धूमादिमार्गेण नश्वरं फलं, ज्ञानपूर्वकं तत्कुर्वतां अङ्गिभूतोपासनादिद्वारा अर्चिरादिमार्गब्रह्मप्राप्तिमतां पुनरावृत्त्यभावेन नित्यफलवत्वं च विवक्षितम्' इति सिध्यति । अतः कर्मनिरपेक्षततयैव गृहस्थानामपि मुक्तिरिति अद्वैतिनां मतं निर्मूलं, प्रमाणरहितं, सूत्रानारूढं चेति निर्मत्सरा जानन्ति । स्थिते चैवं 'कर्मयोगः आप्रयणमनुष्ठेयः इति मतं श्रीभाष्यानुयायिनां मतं निर्मूलं सूत्रानारूढं चे' ति शतभूषणीकारोक्तिः उन्मादादेव । शतभूषणीकारवाक्यघटकाप्रयाणपक्षेपस्थितेन 'अप्रयाणात्तत्रापि हि दृष्ट' मिति सूत्रेणैव श्रीभाष्यकारमतस्य सूत्रारूढतायाः शाङ्करमतस्य सूत्रानारूढतायाश्च स्पष्टमवगमात् ।

'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्यत्र तच्छब्दस्य पूर्वप्रसक्तविद्यापरामर्शित्वात् विद्याधिगमे उत्तरपूर्वाघयोरश्लेषविनाशयोः प्रतिपादनात् विद्यायाश्च कर्माङ्गकत्वात् कर्मनैरपेक्ष्यं वदतां विद्यासिद्ध्यभावः, ततश्च उत्तरपूर्वाघयोरश्लेषविश्लेषयोरभावः इति संसारे भ्रमणमेव सर्वदेति न मुक्तेर्मनागप्यवकाशः अद्वैतिनां इति स्पष्टमभ्यधायि सूत्रकारैः ॥

संन्यासः कर्मयोगश्च निश्श्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ गी. ५. २.)

संन्यासस्तु महाबाहो दुःखमाप्तुमयत्नतः । (गी. ५. ६.)

इत्यत्र स्पष्टमेव कर्मयोगावश्यकतां प्रतिपादयन् कर्मनैरपेक्ष्य-पक्षं दूरीकरोति । अत्रैव,

'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥'

इत्यादिना नरावतारस्याप्यर्जुनस्य कर्मावश्यकतां तदकरणे प्रत्य-वायभाक्त्वं च स्फुटमावेदयन् सर्वेषां कर्मनैयत्यं प्रतिपादयतीति 'न हि तावता सर्वेषां ज्ञानिनां कर्मनैयत्यम्' इत्यादिवादस्य सर्वथा नैवावसरः ।

विवर्ताद्वैतमतेऽपि तत्वज्ञानिनामेवोपदेष्टृत्वस्याङ्गीकरणीयतया ब्रह्ममात्रसत्यताज्ञानिनां तदतिरिक्तजीवानां औपाधिकत्वेन असत्व-ज्ञानिनां च उपदेशः सर्वथा अयुक्तः, उपदेश्योपदेशकभावस्य भेद-समनियतत्वात् । अतश्च परमात्मनो गीताचार्यस्य स्वभिन्नार्जुन-सद्भावाज्ञाने तत्वोपदेशः कथं, भिन्नत्वज्ञाने वा अतत्वज्ञानित्वं भगवतः इति 'शांकराणां तत्वोपदेशः अतत्वोपदेशः' इति अस्मदाचार्यकृतदूषणं वज्रलेपायते । एवं चात्र शतभूषणीकारेण श्रीभाष्यमते इव अस्मन्मतेऽपि उपदेश उपपद्यत इति लेखनं भ्रमादेव । न हि श्रीभाष्यकाराणामिव जीवपरयोः उपदेश्योप-देशकयोः भेदः अद्वैतिसंमतः, येन तद्वद्विरोधपरिहारस्संभाव्येत । अतः जीवपरमात्मनोः जीवानां च परस्परं भेदानङ्गीकारे अद्वैतिनां

तत्वोपदेशः अतत्वोपदेश एव । एतद्विस्तरस्तु उपदेशानुपपत्तिवाद-परीक्षासमालोचने सम्यक् कृतः ।

आत्मनः कर्तृत्वादिकमनौपाधिकमेव कर्त्रधिकरणादिसूत्र-कारैस्साधितमपि 'कर्तृत्वमौपाधिकं न तु स्वाभाविक' मिति सूत्रकारानिर्णीतमेवार्थं भगवत्पादैर्भाष्यादिषु भाष्यते । सूत्राशयस्या-न्यथानयनं तु सूत्राण्येवान्यथानयतां श्रीभाष्यकारादीनां कृत्या' इति शतभूषणीकारप्रलापश्च परिपूर्णोन्मादात्, अहंकारकृतान्ध्याद्वा । कस्मिन्नधिकरणे केन सूत्रेण कर्तृत्वादेरौपाधिकत्वं सूचितमिति प्रश्ने श्रुतिवाह्यैः, अत एव च सूत्रकारैर्ब्रह्मविचारे दूरतो निरस्तैरेतैर्भूषणी-कारप्रभृतिभिः मौनमेव किलाश्रीयेत, अथवा असंबद्धतया यः कश्चन प्रलापः । अतः 'परिशुद्धस्वरूपोपदेशदशायां प्रतिपक्षप्रति-क्षेपपूर्वकस्य भ्रान्तिसिद्धाकारसमर्थनस्य विरुद्धत्वात्' इति आचा-र्यपादोक्तदूषणं (शतदूषणी) अप्रकम्प्यमेव ।

लोके वेदे वा शक्यावाधे शक्यार्थविरुद्धतात्पर्यानुगृहीत-कल्पितार्थाश्रयणं कुत्रापि नैव दृश्यते । शशशृङ्गतुल्ये च निर्विशेषे केनाऽपि पदेनावाच्ये केनाऽपि प्रमाणेनासिद्धे च तात्पर्यकल्पनं च सुतरामयुक्तम् । उक्तं चाचार्यैः 'तदेवं व्योमारविन्दसदृशवपुषि यथोदितदृषि वेदान्ततात्पर्यवर्णनं वेदान्तायैव (वेदनाशाय) स्या' दिति ।

'एतेन 'असंभवस्तु सतो अनुपपत्तेः' इति तत्पदलक्ष्या-भिप्राय' मित्यादिः 'अत एव 'तत्वमसी' त्यादि महावाक्यार्थ-निर्णयार्थं न पृथगधिकरणम्' इत्यन्ता शतभूषणी परास्ता ।

यदपि चेदं शतभूषणी वदति 'जिज्ञासापेक्षितकर्तृस्वरूपनिरूपणपरत्वे अस्याधिकरणस्य, अत्र जीवशरीरतायाः श्रीभाष्यमते मुख्यायाः कुत्राप्यधिकरणे अनिर्णीतत्वात् जीवात्मस्वरूपनिरूपणपरं सर्वं प्रकरणं श्रीभाष्यकारस्य मरणायते' इति। तदिदं, भगवद्विद्वेषेण भक्तोत्तमनिरतिशयज्ञान्यग्रेसरश्रीभाष्यकारचरणारविन्देषु निर्हेतुकविद्वेषेण च सन्निहितमृत्योर्भूषणीकारस्य 'मुमूर्षूणां हि मन्दात्मन् ननु स्युर्विप्लवा गिरः' (श्रीभा. ७) इति न्यायेन असंबद्धलेखनम्। तथा हि, 'न हि श्रीभाष्यकाराः, जिज्ञासापेक्षिकर्तृस्वरूपनिरूपणार्थं 'नात्मा श्रुते' रित्याद्यधिकरणं प्रवृत्तमिति वदन्ति। तस्य पूर्वमीमांसाविचारणैव निर्णीतत्वात्; किंतु सर्वप्रपञ्चस्य श्रुत्या ब्रह्मकार्यत्वावगमात्, जीवस्यापि तदनुरोधेन अचेतनस्येव स्वरूपान्यथाभावेनैव कार्यत्वं इति शंका या भवति, तन्निरसनमुखेन, स्वभावान्यथाभावादेव कार्यत्वं ज्ञाधिकरणादिभिः सूत्रकारैस्समर्थ्यते, ततः सर्वप्रपञ्चस्य ब्रह्मकार्यतायाः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाश्च न विरोधः इति च वदन्ति। अतः शतभूषणीकारभ्रमस्य नैवावकाशः।

'आत्मेति तूपगच्छन्ति ग्राहयन्ति' चेति चातुर्थिकसूत्रेण जीवशरीरकत्वं परमात्मनः स्पष्टमेवावेद्यते। अत्र उपासितुर्भिन्नतया ब्रह्मोपासितव्यमिति पूर्वपक्षीकृत्य, 'उपासितुरात्मत्वेनैव ब्रह्मोपास्य' मिति सिद्धान्तः क्रियते। सूत्रे चास्मिन् 'एष त आत्मा अन्तर्याम्यमृतः' इति बृहदारण्यकवाक्यं 'ग्राहयन्ति चे' ति सूत्रखण्डविवरणाय शंकराचार्यैरप्युपात्तम्। तत्र च 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरः— यस्य विज्ञानगँ् शरीरं यो विज्ञानमन्तरा यमयती' त्यनेन, शारीरा (जीव) र्थविज्ञानशब्दघटितेन वाक्येन स्पष्टमेव

जीवस्य शरीरत्वं, परमात्मनश्च तदात्मत्वं बोध्यते इति तद्विषयकेणानेन सूत्रेणाऽपि जीवशरीरता बोधितैवेति, सूत्रेषु कुत्राप्यबोधितवादिति शतभूषणी अयुक्तैव । एवं 'तत्त्वमस्या' दिवाक्यमपि 'ऐतदात्म्यमिदं सर्वं' मित्युपक्रमानुरोधात् शरीरात्मभावनिबन्धनाभेदप्रतिपादनपरमेवेति पूर्वं स्पष्टं निरूपितम् । अत एव 'जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातल' मित्यादि स्मृतिवचनानामञ्जसोपपत्तिः । अधिकं तु जीवेश्वरैक्यभङ्गवादपरीक्षासमालोचनादौ विशदीकृतं तत्रैव द्रष्टव्यम् ।

अन्तर्यामिब्राह्मणं तु ' इति शतभूषणीग्रन्थः केवलप्रतिज्ञापरः उपपादकयुक्तिप्रमाणादिविधुर इति नात्र किंचन निरसनीयमित्युपेक्ष्यते । उपासनायाः सत्यत्वं तु प्रागेव साधितमस्माभिः । अतश्च तत्त्वद्वयोपसर्जनकतृतीयतत्त्वब्रह्मणः प्रतिपादकमन्तर्यामिब्राह्मणं, तद्विषयकाणि सर्वाणि सूत्राणि जीवशरीरतां स्पष्टमेवावेदयन्तीत्यन्यत्र विस्तरः ।

'नात्मा श्रुते' रिति सूत्रे 'आत्मे' त्येकवचनं ब्रह्मात्मैक्यपक्ष एवोपपद्यते । न तु तद्भेदपक्षे । जात्यभिप्रायेणैकत्वमिति परिहारस्तु न घटते । 'आत्मत्वस्याजातित्वात्' इति शतदूषणीकारोक्तिस्सूत्रविरुद्धत्वादनादरणीया । 'अधिकोपदेशात्तु, अधिकं तु भेदनिर्देशात्, उभयेऽपि हि भेदेनैनमधीयते, अप्रतीकालंबनान् नयतीति बादरायणः उभयथा च दोषात्तत्क्रतुश्च' (४. ३. १४.) 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' इत्यादिसूत्रेषु जीवपरमात्मनोर्भेदस्य 'अधीयते, आचक्षते, अप्रतीकालंबनान्' इत्यनेन जीवभेदस्य च शब्दादर्थतश्च सूचितत्वात्, 'एको बहूनां' इति

श्रुत्या स्पष्टमेव जीवबहुत्वस्याभिधानात् । आत्मनां नित्यानामपि अनेकत्वेन आत्मत्वजात्यङ्गीकारे बाधकाभावाच्च । अतः 'श्रेष्ठश्चे' त्यादिसूत्रेष्विव जात्यैक्यविवक्षया तत्प्रयोगसंभवादिति शतदूषणी-श्रीसूक्तिरबाधितैव ।

यदप्याह शतभूषणीकारः 'जातित्वेऽपि– 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्यत्र क्षेत्रेष्विति बहुवचनं क्षेत्रज्ञ इत्येक-वचनं च व्याहन्यते इत्यादि, तदिदं गीतातात्पर्याज्ञाननिबन्धनम् । तत्रापि 'क्षेत्रज्ञं चापि' इत्यत्र 'नात्मा' इत्यत्रेव जात्येकत्वाङ्गी-कारेण बाधकाभावात् । तात्पर्यचन्द्रिकायां आचार्यपादैस्तथैव प्रदर्शितत्वाच्च । वस्तुतस्तु 'सर्वक्षेत्रेषु' इत्यस्य 'मा' मित्यत्रैवा-न्वयेन 'बहवो ज्ञानतपसा पूता मद्भावमागताः । तेषामादित्यवत् ज्ञानं' इति प्रागुक्तबहुजीवसिद्धान्तस्य, 'बहूनां' इत्यादिश्रुति-सूचितस्य न कोऽपि विरोधः । यद्वा 'इदं शरीरं' इति एतत्पूर्व-श्लोके एकत्वं न विवक्षितं, उद्देश्यविशेषणत्वात् । अभिधानक्रियां प्रति कर्मत्वेनान्वीयमानक्षेत्रविशेषणं हि प्रत्ययेनाभिधीयमानमेकत्वं, एवं च ग्रहैकत्वन्यायेन तदविवक्षणं युक्तमेव । जात्येकवचनं वा । तेन सर्वक्षेत्रेषु' इत्यस्य 'क्षेत्रज्ञ' मित्यत्राप्यन्वयेन कोऽपि न दोषः ।

'अन्तवन्त इमे देहा, वासांसि जीर्णानि' इत्यादावपि एकस्य जीवात्मनः नित्यस्य अनित्यानेकदेहसंबन्धो भवति, आत्मा तु नित्यः इत्येवोच्यते, न तु शरीरेषु सर्वेषु आत्मैकत्वमिति । तादृश-वर्णनं तु शतभूषणीकारस्याज्ञानादेव । प्रकरणविरोधश्च तदानीमपरि-हार्यः । पूर्वं हि द्रोणभीष्माद्याचार्यान् स्वबन्धूंश्च युद्धे समवेतान्

कृष्णसहायेन स्वेन अवश्यं हनिष्यमाणांश्च दृष्ट्वा अर्जुनः भीतः, तेषां वधे शरीरनाशे आत्मनो नाशं च मन्वानः शोकं प्राप । तादृशशोकनिवृत्तिः परमपुरुषेण संपिपादयिषिता । तदर्थं चोपादिशति एकैकल्याप्यात्मनः कर्माधीनदेहानामानन्त्यात् एकस्य जीर्णस्य देहस्य नाशेऽपि अन्यन्नवतरं कल्याणं शरीरं भविष्यति । अतो नात्र ते शोको युक्त इति । अयमेव चार्थः संमतः शंकराचार्याणामपि । जीवात्मैक्यं तु अत्रानपेक्षितं बाधितं च । 'न त्वेवाह' मित्युपक्रमे,

'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥'

इति इत्यन्ते च भेदस्य 'मनीषिणः' इति स्पष्टं बोधनात् ।

'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।' इति स्वात्मार्जुनात्मनोरेकत्वं स्मरति' इति शतभूषणीप्रवृत्तिस्तु मोहादेव ।

नास्मिन् श्लोके अर्जुनस्य प्रस्तावः सर्वथा वर्तते । यदि च सर्वभूतपदेन अर्जुनस्यापि ग्रहणं तर्हि अर्जुनात्मेति विशेषनिर्देशस्य वैयर्थ्यम् । आस्तामिदम् । अत्रैव 'सर्वभूतस्थित' मित्यनेन स्वशरीरभूतात्मानेकत्वस्य परमात्मनः तत्रस्थितत्वस्य स्पष्टमुक्तत्वात्ः एवं 'मां भजति' इति भजनीयभजनकर्त्रोः कर्मकर्तृभावेन भेदस्य 'मुक्तोपसृप्ये' ति सूत्रोक्तदिशा स्पष्टतया च नाभेदकल्पनाया मनागप्यवकाशः। अतः 'एकत्वमास्थितः' इत्यस्य असंकुचितज्ञानाकारतया 'एकत्वमास्थितः' इति सर्वात्मसाम्यमेव विवक्षितं न त्वभेद' इति । यद्वा 'एकत्वमास्थितः' इत्यस्यायमर्थः — एकत्वमास्थितः — सर्वत्र एक एव सर्वेश्वरः इति स्थितः' इति । अस्मिन् प्रश्ने च 'यो

मां पश्यति सर्वत्र' इति पूर्वश्लोकाशयं भविष्यति । सर्वथाऽपि नात्राभेदविवक्षा । एवं च 'नित्यो नित्याना' मित्याद्यनुरोधेन 'न त्वेवाह' मिति शास्त्रारम्भश्लोकेऽपि बहुवचनोपात्तात्मबहुत्वाविवक्षायां कारणाभावात् शतभूषण्युक्तिस्सर्वथा अनादरणीयैव ।

यदाह शतभूषणीकारः 'श्रीभाष्यमते 'अणवश्च, श्रेष्ठश्च' इति सूत्राभ्यां एकाधिकरणप्रविष्टाभ्यां प्राणानामणुत्वं स्थाप्यते, तत्र 'श्रेष्ठश्चे' ति सूत्रेण एकवचनान्तेन प्राक्सृष्टेरेकत्वावधारणात् कारणात्मना ऐक्यं, पूर्वसूत्रेण, 'अणवश्चे' ति बहुवचनान्तेन प्राणानां कार्यावस्थायां बहुत्वं, तद्वत् 'नात्मा' इत्यत्र आत्मपदमपि शरीराद्युपहितरूपेण बहुत्वेऽपि ब्रह्मात्मना आत्मनामेकत्वं अभिप्रेत्ये' ति अद्वैतमेव पोषयति – इत्यादि ।

तदिदं निरवग्रहमहामोहादेव । तथा हि – श्रीभाष्यकाराणां मते, अणवश्चेति सूत्रं, इन्द्रियाणामणुत्वप्रतिपादनपरम् । श्रेष्ठश्चेति सूत्रं तु मुख्यप्राणोत्पत्तिस्थापकम् । मुख्यप्राणश्च वायुपरिणामः । इन्द्रियाणि तु आहंकारिकाणि । तस्य तेषां च परस्परमुपादानोपादेयभावः नैव स्वीक्रियते । अतः शतभूषणीकारलेखनं सर्वं विपरीतग्रहादेव । प्राक्सृष्टेरेकत्वावधारणादित्यादि तु स्वाज्ञानबलात् । स्पष्टं भाष्यादावुपलभ्यमानमप्यर्थं ग्रहीतुमपारयतः शतभूषणीकारस्य महामोहोपाध्यायत्वे स्वतः सिद्धे महामहोपाध्यायत्वमित्येतदतीव विस्मयावहम् ।

एवं विपरीतग्रहपूर्णस्य तत्वज्ञानशून्यस्य च शतभूषणीकर्तुः 'अणवश्चे' ति सूत्रे बहुवचनमिव शरीरसंयोगावियोगाभ्यां जनन-

मरणशाल्युपहिताभिप्रायम् । एवं 'श्रेष्ठश्चे' ति सूत्रोक्तन्यायेन आत्मेत्येकवचनमपि मुक्त्यवस्थसंबन्ध्यभिप्रायेण यथाश्रुतं संगच्छते इत्यात्माद्वैतभङ्गाय प्रयासः स्वशृङ्गभंगायैव'। इत्युक्तिः स्वमतपरमतोभयाज्ञानं, केवलाग्रहपरिपूर्णत्वं ('स्वशृङ्गभङ्गायैवे' त्युक्तिः) अतिनीचस्वभावतां चावेदयति। (शृंगपदेन रामानुजीयानां ऊर्ध्वपुण्ड्रविवक्षा इति भाति।) 'अणवश्चे' ति सूत्रं शंकररामानुजोभयमतेऽपि इन्द्रियबहुत्वाभिप्रायम्। न तु प्राणबहुत्वाभिप्रायम्। 'श्रेष्ठश्चे' ति तु, मुख्यप्राणैकत्वविषयम्। तेषां तस्य च कार्यकारणभावः उभयोरसंप्रतिपन्नः । अतः तद्दृष्टान्तेन साधनं शशशृंगदृष्टान्तेन अश्वशृङ्गसाधनमेव । 'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति सूत्रविषयवाक्यभूतेन 'नित्यत्वाच्च ताभ्यः' इति सूत्रखण्डमूलभूतेन 'नित्यो नित्यानां' इत्यनेन नित्यानां बहूनां चेतनानां स्पष्टमेवाभिधानात् 'अप्रतीकालंबनान्नयति' इति सूत्रे स्पष्टमेव उपासकजीवबहुत्वाभिधानाच्च विवर्ताद्वैतस्यैव भस्मीभाव इति नैव रामानुजीयानां कदाऽपि शृङ्गभङ्गः। एतद्विस्तरस्तु आत्माद्वैतभंगवादपरीक्षासमालोचने जीवेश्वरैक्यभंगवादपरीक्षासमालोचने च द्रष्टव्यः।

'न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि' (३. २. ११) इति सूत्रमपि परमतासाधकं, प्रत्युत परमतविघटकमेवेति शतदूषण्यामाचार्यपादप्रतिपादनं सर्वथात्वप्रकम्प्यम् । तथा हि, ब्रह्मशब्दस्तावत् दोषशून्यत्वगुणभूयिष्ठत्वाभ्यां निरवग्रहमहत्त्ववाचकः इति अद्वैतिनामपि संमतम्। तादृशब्रह्मजिज्ञासैव आदिमसूत्रे प्रतिज्ञाता। प्रथमसूत्रे विवक्षित एवार्थः 'न स्थानतोऽपी' त्यत्र स्पष्टं निर्धार्यते। सूत्रे चास्मिन् परशब्दः 'परात्तु तच्छ्रुतेः' इति सूत्रस्थपरशब्दवत् अन्तर्यामिपरः। तत्र परशब्दस्यान्तर्यामिपरत्वं परेषामपि संमतम्।

'स्थानादिव्यपदेशाच्चे' ति सूत्रे स्थानशब्दवत् अत्र स्थानशब्द-निर्देशेन स्थानसंबन्धितया दोषाणां प्रसक्तिः, अपिः विरोधसूचकः। 'न स्थानतोऽपि परस्ये' त्यनन्तरं 'उभयलिङ्ग' मिति निर्देशेन नात्रोभयलिङ्गस्य निषेधो अभिमतः। यद्युभयलिंगमेव निषेध्यतया सूत्रकृतो विवक्षितमभविष्यत्, तदा 'स्थानतोऽपि परस्ये' त्यनन्तरं नञो निर्देशः अवर्तिष्यत। एतदधिकरणपूर्वतनानामधिकरणानां जीवदोषनिरूपणपरत्वं परेषामपि संमतम्। एवं च पूर्वं जीवदोषाणां बुद्धिस्थतया जीवस्य शरीरसंबन्धवत् परमात्मनो शरीरसंबन्धसत्वेन दोषापत्तिः इति शङ्का प्राक् 'संभोगप्राप्तिरिति चेन्न वैशेष्यात्, भोक्त्रापत्ते' रित्यादौ कर्मसंबन्धतदभावाभ्यां जीवपरयोर्वैलक्षण्येन दोषसंबन्धः न घटते इति परिहृता। जगत्कारणत्वेनैव ब्रह्म-शब्दार्थनिर्णयः सूत्रकृता कृतः। 'ब्रह्मविदाप्नोति पर' मिति प्राप्यत्वेनोक्तब्रह्मण एव 'यतो वे' ति वाक्ये लक्षणमभि-हितम्। सृष्टिसमकालिकमन्तर्यामित्वं च श्रुत्या प्रतीयते। प्राप्यस्य ब्रह्मणः आनन्दरूपस्य अन्तर्याम्यभेदात् सर्वेषां जनानां हेयतया जुगुप्सितशरीरसंबन्धस्य स्वेच्छाकृतस्याप्यपुरुषार्थत्वेन अन्तर्याम्यभि-न्नानन्दरूपब्रह्मणः प्राप्यत्वं कथमिति पूर्वपक्षिण आशयः अस्मिन्नधि-करणे।

एतेन 'इदमत्र पृच्छ्यते यत्' इत्यारभ्य, परमात्मनोऽपि स्वप्नावस्थायां सूक्ष्मचिद्रूपदेहयोगो वर्तते न वा, यदि वर्तते, तेन सत्यसंकल्पत्वादेस्तिरोधानं भवति न वा, यदि तिरोधानं, तर्हि न परस्यापि स्वाप्नपदार्थस्रष्टृत्वं, यदि तिरोधानं अकिंचिकरं जीवस्यापि तर्हि निर्मातृत्वं, यदि परमात्मनस्सत्यसंकल्पत्वादेर्न तिरोधानं, तर्हि कथं 'देहयोगाद्वे' ति न्यायेन शरीरसंबन्धब्रह्म-

सदोषताशङ्काया उत्थानम् ? अतः श्रीभाष्यमते सर्वथा अस्याधिकरणस्यानुत्थान' मिति क्षुद्रशतभूषणीकारोपद्रवः सुतरां दूरे निरस्तः ।

परमात्मनः देहयोगस्य कर्ममूलकत्वासंभवात् न दुःखभाक्त्वमिति 'संभोगप्राप्तिरिति चेत् न' इत्यादावभिहितम् । इदानीं तु स्वेच्छाकृतस्याप्यपुरुषार्थस्य पूयशोणितादिमज्जनस्य अपुरुषार्थतादर्शनवत् ब्रह्मणः कर्मसंबन्धरहितस्यापि स्वसंकल्पमात्रेण तत्तच्छरीरेष्वन्तर्यामितया प्रवेशात् अपुरुषार्थत्वयोगेन आनन्दरूपत्वासंभवः इति शंकाया उन्मेषसंभवेन तन्निरासायास्याधिकरणस्य प्रवृत्तेस्सुतरां युक्तत्वात् । स्पष्टं चेदं उभयलिंगाधिकरणारंभे 'ननु "संभोगःप्राप्तिरिति चेन्न वैशेष्यात्' इत्यादिषु' इत्यारभ्य 'अतो अकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसंबन्धो अपुरुषार्थ एव । पूयशोणितादिमज्जनं हि स्वेच्छाकृतमप्यपुरुषार्थ एव ।' इत्यन्तश्रीभाष्ये । अतः सर्वदा अचित्संबन्धयोगस्य, अकर्मवश्यत्वस्य च परमात्मनि सद्भावमंगीकृत्यैव, संबन्धमात्रेण पूर्वस्योत्थानं, तत्परिहारश्चेति न काप्यनुपपत्तिः ।

प्राप्यतृष्णाजननायोभयलिंगाधिकरणमिति सिद्धान्तः । एवं च नञः परस्यैत्युत्तरं निवेशाभावेन दोषाणां पूर्वाधिकरणेषु बुद्धिस्थतया तेषां निषेधस्संभवतीति तात्पर्येण निषेध्यवाचकस्य पदस्य सूत्रे अप्रयोगेऽपि न क्षतिः । उभयलिंगमित्यत्र लिंगशब्दः ज्ञापकपरः । ब्रह्मशब्दार्थः निरवग्रहमहत्वं, तज्ज्ञापकत्वं निर्दोषत्वगुणभूयस्त्वयोः प्रागुक्तदिशेति परैरप्यनिच्छयापि स्वीकार्यम् । सर्वत्र - उपनिषत्सु हि - यतः उभयलिंगं, अतः परस्य स्थानतोऽपि न दोषः इति सूत्रतात्पर्यविषयीभूतार्थः ।

शाङ्करीत्या सूत्रार्थस्तु नितरामयुक्तः । तन्मते परशब्दस्य स्वसंमतार्थनियामकं न किंचित् । उभयलिंगमित्यत्र लिंगशब्दस्य वैफल्यम् । धर्मादिशब्दप्रयोगेणैव परसंमतार्थोपपत्तेः । उभयलिंगमित्यस्य परसंमतार्थे गमकाभावश्च । पूर्वसूत्रेषु निर्विशेषबोधकशब्दस्य अनन्यथासिद्धस्य निर्विशेषस्थापनस्य चाभावात् । 'न स्थानतोऽपि' इत्यनेन पूर्वं बुद्धिस्थदोषनिषेधेनैव वाक्यपरिसमाप्त्या नञः उभयलिंगपदसमभिव्याहाराभावेऽपि सविशेषत्वनिर्विशेषत्वोभयलिंगनिषेधपरत्वमौत्प्रेक्षिकमेव । तथाऽपि निर्विशेषत्वमेवात्र विवक्षितमित्यत्र न किञ्चिदपि नियामकं पश्यामः । सर्वत्रेत्येतावन्मात्रस्य हेतुत्वे, प्रतिपाद्यार्थविशेषबोधकशब्दाभावे परसंमतार्थस्य अत्र विवक्षितत्वे गमकाभावे च अत्र परसंमतार्थासिद्धिश्च ।

सूत्रे 'सर्वत्र हि' इत्यत्र 'अपहतपाप्मा विजरः – सत्यकामः सत्यसंकल्पः, 'यत्तद्रेश्यमग्राह्यम् ।' 'नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिम् ।' 'ज्ञः कालकालो गुणी सर्वविद्यः', 'कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।' 'य ईशोऽस्य जगतो नित्यमेव ।' निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।' 'अमृतस्य परं सेतुम् ।' 'प्राण एव प्रज्ञात्मा आनन्दो अजरोऽमृतः' स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् ।' 'एष लोकपालः एष लोकाधिपतिः एष सर्वेश्वरः ।' 'स वा एष महानज आत्मा सर्वस्य वशी सर्वस्येशानः' इत्यादिसर्ववेदान्तश्रुतयो विवक्षिताः । स्थानसंबन्धनिबन्धनदोषशून्यत्वं गुणभूयित्वं चात्र स्फुटं प्रतिपादितम् । ब्रह्मशब्दः उपनिषत्सु सर्वत्र वर्तते । ब्रह्मशब्दार्थनिरवद्यमहामहत्त्वस्य ज्ञापकं दोषशून्यत्वं गुणभूयिष्ठत्वं च । एतदप्रति-

पादने हि ब्रह्मपरत्वमेवोपनिषदां न स्यात् । अतः सूत्रोक्तोभयलिङ्गत्वं निर्दोषत्व, निखिलकल्याणगुणगणाकरत्वमेवेति सिद्धम् ।

'भेदादिति चेन्न प्रत्येकमतद्वचना' दित्यत्र शङ्कितुरयमाशयः शरीरभेदेन यथा जीवस्य ज्ञानसंकोचविकासौ पूर्वशरीरनाशानन्तरं शरीरान्तरसंबन्धे विलक्षणौ तद्वत् परमात्मनोऽपि सृष्टिप्रलययोः पृथिव्याद्येकैकशरीरस्थाननाशानन्तरं स्थानान्तरसंबन्धे वैलक्षण्यमवर्जनीयम् । अकर्मवश्यत्वेनानुपपत्तिपरिहारेऽपि आगमापायिस्थानसंबन्धाभ्युपगमेन परिणामिनित्यतैव स्यात् न कूटस्थनित्यता । जीवे स्वरूपपरिणामाभावेऽपि धर्मभूतज्ञानसंकोचविकासयोस्सद्भावेन परमात्मनि च तयोरप्यभावेन अतिशयितं कूटस्थनित्यत्वं व्याहन्येत । अतः अन्तर्यामित्वधर्म एव ब्रह्मणि नाङ्गीकर्तव्य इति । प्रत्येकमतद्वचनेन भेदात् यो दोषः स नास्ति इत्यर्थः । दोषश्चात्र परमात्मनः चेतनत्वेन मृतत्वरूप एव वक्तव्यः, श्रुतिषु च प्रत्येकं मृतत्वाभाववचनात् अभ्यासेन च तत्रैव तात्पर्यातिशयेन आगमापायिस्थानसंबन्धः न मृतत्वमापादयति । 'देवो मृतः, मनुष्यो मृतः इति व्यवहारवत्, अन्तर्यामी मृतः इति च नैव व्यवहारः । तत्र देवादौ धर्मभूतज्ञानसुखसङ्कोचविकासयोश्शरीरवियोगवत्सद्भावेन जीवे तथा व्यवहारः । स्थानानां संबन्धस्य च ब्रह्माभेदविरहेण ब्रह्मभिन्नत्वेन तेषामागमापायित्वेऽपि ब्रह्मणः नाशापादनासंभवात् । 'अतद्वचनात्' इत्यस्य पूर्वपक्ष्यापादितदोषाभाववचनादित्यर्थः । सर्वत्र पूर्वपक्षिणा योऽयमर्थस्साध्यते तदभावबोधतात्पर्येण शब्दप्रयोगस्तावत्संगत एव । 'द्वा सुपर्णा' विति श्रुतौ कर्मवश्यत्वतदभावाभ्यां जीवपरवैलक्षण्यप्रतिपादनेन जीवे शरीरसंबन्धस्य

ज्ञानसुखसन्तोषाणां च कारणं वर्तते, परमात्मनि तु नैतादृशं कारणमिति त्वाकूतम् ।

एतेन 'भेदादिति चेन्न प्रत्येकमतद्वचनात्' इति सूत्रं प्रतिशरीरं दोषाभावप्रतिपादनपरं व्यर्थम् । पूर्वसूत्रेणैवास्यार्थस्य निरूपणात् श्रीभाष्यकारमते' इति शतभूषणी परास्ता । उभयलिङ्गत्वश्रुतिः जीवस्याप्यस्ति, तत्रावस्थाभेदेन हि तन्निर्वाहः कार्यः तद्वदपरमात्मनोऽपीति शङ्का । अमृतव्यपदेशश्च नित्यत्वमात्रेणोपपद्यते इति च । अमृतशब्दस्य सकृदुक्तिश्चेत् नित्यत्वाभिप्रायेण अन्यथासिद्धिः कामं स्यान्नाम । प्रतिपर्यायमुक्तत्वात् तत्तद्वस्तुगतदोषसंबन्धराहित्यमेवामृतशब्देनाभिप्रेतमिति भावः । जीवस्योभयलिङ्गश्रुतिसद्भावेऽपि तिरोधानादेः श्रुतिसिद्धत्वात् जीवविषयोभयलिङ्गश्रुतिः संकोचिता । परमात्मनस्त्वन्याधीनत्वतिरोधानश्रुत्यभावात् तद्विषयोभयलिङ्गत्व श्रुतिरसंकुचितेति परिहारः ।

'भेदादिति चेन्ने' ति सूत्रस्य शांकरार्थश्चायुक्तः, प्रत्युपाधिभेदं अतद्वचनत्वं च तदुदाहृतश्रुतौ नास्ति । 'यश्चायमस्यां पृथिव्यां तेजोमयः अमृतमयः पुरुषः' इति हि तदुदाहृतश्रुतिः । अत्र तेजोमयत्वनिर्विकारत्वानन्दरूपत्वादिबहुविशेषप्रतीतेः । आत्मशब्दश्च देह-प्रतिप्रतिसंबन्धिनि व्यापिनि नियन्तरि धारके शेषिणि रूढ इति सोऽपि निर्विशेषत्वविरोधी । शांकरमत एव पूर्वसूत्रे सर्वत्र हि – ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु अपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते इत्यर्थस्वीकारात्, 'भेदादिति' सूत्रस्योत्थानार्थमीति व्यर्थं विविधं सूत्रान्तरं, अथवा तण्डुलस्वीकरणाय पुनः पुण्याहसंकल्पः इति । यथा चैतदधिकरणघटकीभूतानां सर्वेषामपि सूत्राणां विवर्त-

द्वैतविभञ्जकत्वं तथा अस्मदाचार्यचरणानुगृहीतत्रय्यन्तसारामृतगूढार्थसंग्रहादौ अस्मदीये सूत्रार्थमणिदर्पणे च व्यक्तम् ।

उभयलिङ्गाधिकरणघटकीभूतं च 'प्रकृतैतावत्त्वं हि प्रतिषेधती' त्यादि सूत्रम् । शांकरमते चेदमधिकरणान्तरपरतया योजितम् । सूत्रे चास्मिन् प्रकृतपदं पूर्वं प्रमाणान्तरापरिज्ञातस्य श्रुतावपूर्वतया प्रतिपादनेन निषेधासंभवबोधनार्थम् । प्रकृतस्य एतावत्त्वं यत् पूर्ववाक्ये प्रतीतं तस्यैव निषेधः, कर्मधारयसमासांगीकारेण अद्वैतरीत्या चार्थे प्रकृतशब्दस्य वैयर्थ्यमेव । एवं एतावदित्यस्यापि वैयर्थ्यम् । परिमाणवाचकशब्दप्रयोगे च निमित्ताभावः । रूपाणि प्रतिषेधतीत्येतावतैव परमतोपपत्तेः । शांकररीत्या च भूयश्शब्दस्य पुनरित्यर्थकत्वे द्विः प्रतिषेधतीत्येतावतैवोपपत्तौ भूयश्शब्दप्रयोगे न किञ्चन प्रयोजनम् । सिद्धान्ते तु भूय इत्यस्य बह्वर्थकत्वेन वाक्यस्य सार्थक्यम् । तत इत्यस्य च सार्थक्यम् । निषेधानन्तरं निषेधप्रतियोगिनः कथने च न निषेधस्य प्राबल्यम् । अत एव निर्गुणश्रुतेस्समनन्तरमपि 'ज्ञः कालकालो गुणी' इत्यादिना गुणानां स्पष्टं कथनात् गुणसामान्यनिषेधः नैव निर्गुणश्रुतौ, किं तर्हि हेयगुणनिषेध एव इति न्यायः अनेन सूत्रेण शिक्षितो भवति । वेदार्थसंग्रहादौ चायमर्थः स्फुटः । सूत्रे चास्मिन् 'द्वे वाव ब्रह्मणो रूपे' इत्यादि, 'अथात आदेशो नेति नेति, 'अथ नामधेयं सत्यस्य सत्यं तेषामेष सत्य' मित्यन्तश्रुतिवाक्यं विषयः' इति उभयसंप्रतिपन्नम् । 'द्वे वाव ब्रह्मणो रूपे, 'तस्य ह वा पुरुषस्य रूप' मित्यन्तरूपाणां प्रकृतत्वं ब्रह्मसंबन्धित्वं च प्रमाणान्तरेण केनाप्यप्रतिपन्नम् । प्रमाणान्तरापरिज्ञातस्य निषेधार्थमनुवाद इति तु नैव घटते । अपूर्वत्वेन विधिसंभवात् । अत्र 'एतावत्त्व' मिति

शब्दे एतत् परिमाणमस्य एतावत्, तस्य भावः एतावत्त्वमिति विग्रहः । 'द्वे वाव ब्रह्मणो रूपे' इत्यत्र द्विशब्देन संख्यावाचिनोपक्रमेण रूपगतद्वित्वादेरेव 'नेति नेति' इत्यत्र निषेधः, न तु रूपाणाम् । एवमनङ्गीकारे च 'द्वे' इत्यस्य वैयर्थ्यमपरिहार्यम् ।

ननु जर्तिलयवाग्वधिकरणन्यायेन रूपान्तराणां ब्रह्मसंबन्धस्यापरिज्ञातत्वेऽपि न विधिः 'जर्तिलयवाग्वा वा .... पयसा जुहोति' इत्यादिवाक्ये हि जर्तिलगवीधुकवाक्ययोर्न विधिः, किं तु पयोविधिस्तावकत्वमेवेत्यङ्गीकृतं दशमे । तद्वत् 'द्वे वाव ब्रह्मणो रूपे' इत्यस्य नेति नेति इति विधिशेषत्वमेव युक्तमिति चेत्तत्राह—ततो ब्रवीति च भूयः इति निषेधानन्तरं 'द्वे वाव ब्रह्मणो रूपे' इति विध्यनुगुणबह्वर्थप्रतिपादनात् न जर्तिलयवागून्यायप्रवृत्तिरत्र । तत्र हि पयोविधिः परः, तस्य च प्राबल्यम् । जर्तिलादिद्रव्यविधेश्च तद्विघटकत्वात् न तत्र विध्यङ्गीकारः । प्रकृते तु 'द्वे वाव ब्रह्मणो रूपे' इत्यत्र रूपयोः ब्रह्मसंबन्धित्वेन विधानम् । तदनु 'अथ नामधेयमिति वाक्ये बह्वर्थप्रतिपादनेन तदानुगुण्यं पूर्वविधेः । 'द्वे वा ब्रह्मणः' इत्यत्र ब्रह्मशब्दश्च निरवग्रहमहत्परः । 'न ह्येतस्मादिति नेत्यन्यत् परमास्ति' इति वाक्ये 'इति ने' त्यस्मादन्यस्योत्कृष्टस्य निषेधेन व्यतिरेकमुखेन निरवग्रहमहत्त्वं दृढीकृतम् । 'अथ नामधेयं सत्यस्य सत्य' मित्यत्र गुणवत्त्वेन जीवावधिकोत्कर्षः अन्वयमुखेन प्रदर्शितः । एवं नाम च । पूर्वं हि रूपसामान्यनिषेधे 'नेति नेति' इति द्विरुक्त्या नाम्नोऽपि निषेधस्यावर्जनीयतया 'अथ नामधेय' मित्यस्य परमते असंगतिः । 'तस्योपनिषत् सत्यस्य सत्य' मित्यजातशत्रुब्राह्मणान्ते सृष्टिकारणत्वप्रतिपादनानन्तरं वर्तते तत्रोक्त एवार्थः एतद्वाक्येन दृढीक्रियते इत्यवद्यं

वाच्यम् । 'प्राणा वै सत्यं तेषामेष सत्य' मित्यत्र एष इति पुल्लिङ्गनिर्देशेन पुरुषशब्दनिर्वचनासिद्धार्थस्सर्वोऽप्यत्र विवक्षित इति च । एवं च बहूनां विशेषाणामत्र प्रतिपादनेन 'नेति नेती' त्यत्र न रूपसामान्यनिषेधः । किं तर्हि ? रूपेयत्ताया एव । निषेधात् पूर्वमुक्तार्थविशदीकरणरूपत्वादस्य वाक्यस्य । तेषां च प्रमाणान्तराविषयतया न निषेधो युक्तः, उन्मत्तप्रलापायितत्वापत्तेः । अतः नात्र जर्तिलयवाग्वाधिकरणन्यायप्रसक्तिः । पूर्वं ब्रह्मसंबन्धिनां रूपाणां प्रतिपादनेन, उत्तरत्रापि बहूनामर्थानां प्रतिपादनेन गुणभूयिष्ठत्वेन ब्रह्मपदार्थनिरवग्रहमहत्वदृढीकरणेन एतत्सूत्रमपि सविशेषब्रह्मपरमेवेति । विस्तरस्त्वन्यत्र ।

यदपि एतेन 'प्रकृतैतावत्त्व' मिति सूत्रमपि व्याख्यातम् । इदं ह्यधिकरणं 'द्वे वा ब्रह्मणो रूपे मूर्तं चामूर्तमेव च' इत्युपक्रस्यानेकगुणविशिष्टं मूर्तरूपमुपन्यस्य अमूर्तरूपमिदंतया उपदेष्टुमशक्यं मत्वा– 'अथात आदेशो नेति नेति' इत्यध्यारोपापवादविधया प्रवृत्तं निषेधवाक्यमधिकृत्य । तत्र प्रकृतं प्रतिषेधति' इत्युक्ते अधिष्ठानारोप्योभयनिषेधः स्यात् । अतः 'अथात आदेशो नेति नेति' इति स्वरूपाप्रतिषेधेन तद्गतविशेषाणां केवलानां प्रतिषेधपरमित्यभिप्रेत्य प्रकृतैतावत्त्वं प्रतिषेधतीत्युक्तम् । इदमद्वैतमत एव स्वरसम् । श्रीभाष्यमते तु प्रक्रान्तामूर्तरूपाद्यनुपदेशात् साकाङ्क्षं तत्प्रकरणं स्यात् । 'ततो ब्रवीति' इति सूत्रवैयर्थ्यं चेति शतभूषणीकारो लिखति स्म ।

तदपि शतभूषणीकाराज्ञानस्य सर्वथा तस्य श्रुतिपरिचयवैधुर्यस्य विवर्ताद्वैतवादः अथाहैदारण्यकः इत्यस्य च परिपूर्ण-

निदानम् । तथा हि, 'द्वे वावे' ति वाक्यं हि बृहदारण्यक-द्वितीयाध्यायतृतीयब्राह्मणारम्भस्थम् । संपूर्णं च ब्राह्मणं तदुपपादनाय प्रवृत्तम् । तत्र ब्रह्मणः मूर्तामूर्तात्मकरूपद्वयं मर्त्यामृतात्मकरूपद्वयं अव्यापकव्यापकात्मक (स्थित, यदात्मक) रूपद्वयं सत्त्यदात्मकरूप-द्वयं चोपक्षिप्तमारंभवाक्ये । तदनु 'तदेतन्मर्त्यं' मित्यारभ्य अधिदैवते वाय्वन्तरिक्षभिन्नपृथिव्यप्तेजोलक्षणमूर्तं (रूपं), वाय्वन्त-रिक्षात्मकामूर्तं च प्रतिपाद्य अनन्तरमध्यात्मं मूर्तामूर्तविभागः प्रस्तुतः। तत्र च मुख्यप्राणादन्यत् यश्च शरीरान्तराकाशः तस्मादन्यच्च मूर्तं इत्युक्त्वा प्राण, शरीरान्तराकाशयोश्चामूर्तत्वं स्पष्टमभिहितम् । अतः 'अमूर्तरूपाद्युपदेशात् साकांक्षं तत्प्रकरण' मिति शतभूषणी श्रुत्यपर्यालोचनयैव । एतादृशमूर्तामूर्तविशिष्टब्रह्मणः 'तस्य हैतस्य पुरुषस्य रूप यथा महारजतं वासः' इत्यादिना दिव्यमङ्गलविग्रहा-भरणादियोगश्च प्रमाणान्तरापरिज्ञातः उपदिष्टः । ततः परं च 'अथात अथात आदेशः' इति श्रुतिक्रमः । अत्र 'नेति नेति' श्रुत्यर्थ एव 'प्रकृतैतावत्त्वं' इति सूत्रेण स्पष्टीक्रियते । पूर्वं मूर्ता-मूर्तात्मकशरीरात्मकत्वेन रूपादिमत्वेन या इयत्ता प्रकृता सैव 'नेति नेति' इत्यनेन व्यावर्त्यते । न तु पूर्वोक्तपरः । तदेव च 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति' इति श्रुतिः संगच्छते । अत्र 'इति ने' ति यद्ब्रह्मनिर्दिष्टं, तद्भिन्नोत्कृष्टवस्तुनिषेध एव, न तु भिन्नस्य निषेधः । तथा सति, परान्यशब्दयोरन्यतरस्य वैयर्थ्या-पातात् । तदुपपादनाय 'अथ नामधेय' मिति श्रुतिक्रमः । एतदर्थश्च पूर्वमेव प्रदर्शितः । 'प्राणा वै सत्य' मिति श्रुतौ प्राणशब्दश्च जीववाची । 'स यथा प्रयोग्य आचरणयुक्तः, एव-मस्मिन् शरीरे प्राणयुक्तः' इति श्रुतौ प्राणशब्दस्य जीवपरतायाः

शंकराचार्यैरेव प्रदर्शितत्वात् । तद्वदत्रांगीकारे बाधकाभावाच्च । अतश्चेतनाचेतनाभ्यां स एव पर इति, तदन्योत्कृष्टवस्तुनिषेध एव अत्र अभिप्रेतः । 'ततो ब्रवीति च भूयः' इति सूत्रखण्डसार्थक्यस्य, परमते एतत्सूत्रानुपपत्तेश्च पूर्वमेव निरूपितत्वात् नात्र पृथग्व्यापार आवश्यकः । वेदाप्रामाण्यप्रसंगात् श्रुतौ अध्यारोपापवादस्वीकरणं सर्वथा न युक्तं इति तत्त्वसिद्धिपेटिकायां वार्तिककारैरेव सम्यङ्निरूपितम् । निषेध्योपस्थापकस्येतेः प्रकारवाचित्वात् प्रकारिणो ब्रह्मणः निषेध्यत्वशंकैव नोदेतीति पूर्वपक्ष एवानुपपन्नः अद्वैतिनाम् । अतः अनेनापि सूत्रेण सविशेषत्वमेव साध्यत इति उभयलिङ्गाधिकरणे समस्तविशेषशून्यत्वप्रतिपादने 'प्रकृतैतावत्व' मिति सूत्रविरोधः इति शतदूषण्याऽऽपादितः अपरिहार्य एव ।

सन्ध्याधिकरणमपि परेषामत्यन्ताननुकूलम् । तथा हि— अस्मिन्नधिकरणे शंकराचार्यैः स्वप्ने सृष्टिरपि प्रबोधे सृष्टिरिव किं पारमार्थिकी, उत मायामयी इत्यादिभाष्ये सूत्रद्वयेन परमात्मकर्तृकत्वं पूर्वपक्षयित्वा उत्तरसूत्रैः जीवकर्तृकत्वं अपारमार्थिकत्वं स्वाप्नार्थानां सिद्धान्तितम् । प्रबोकालिकानामप्यर्थानां मायारूपत्वस्य विवर्ताद्वैतिभिरेव बहुत्र स्थापनेन तेषां मायाशब्दः सर्वथा प्रतिकूल एव । व्यावहारिकत्वं निराकृत्य स्वाप्नार्थानां प्रातीतिकमेवात्राधिकरणे स्थाप्यते इत्येव परमतनिष्कर्षो वाच्यः । अयं चार्थः मायाशब्दस्य प्रातीतिकमात्रबोधकत्वे संगच्छते । न च तथा परैरभ्युपगम्यते । परमात्मकर्तृकत्वे न मायात्वं, जीवात्मकर्तृकत्वे तु मायात्वमिति तु न वक्तुं शक्यते, जीवेशभेदस्य मायामयत्वात् । इति । एवं तन्मते पादानुगतार्थतत्संगती सर्वथा अनुपपन्ने । जीवावस्थानिरूपणं पादकृत्यं, उत परमात्मनिरूपणम् । न तावदाद्यः

कल्पः, फलाधिककरणासाङ्गत्यप्रसंगात् । न हीश्वरो जीवस्यावस्था, ईश्वरस्य ब्रह्मणि कल्पितस्य जीवे अध्यस्तत्वाभावात् । नापि द्वितीयः कल्पः, तथात्वे स्वाप्नार्थानां जीवकर्तृकतया मिथ्यात्वोक्तेरसंगतेः ।

इदमत्र पृच्छामः— अद्वैतिनां मते आरम्भणाधिकरण एव कृत्स्नप्रपञ्चमिथ्यात्वस्य साधनेन वियदादेरपि यदि मिथ्यात्वं सिद्धं, तर्हि कैमुत्यन्यायेन स्वाप्नार्थानां मिथ्यात्वस्य सुतरां सिद्धत्वेन कथमत्र पूर्वपक्षोत्थितिः, कथं वा मिथ्यात्वसिद्धान्तः पुनरत्र संगच्छत इति । न च वियदादीनां व्यावहारिकसत्यत्वमस्ति, स्वाप्नार्थानां तु तदपि नास्ति, अतः व्यवहारविसंवादादिना वियद्वैलक्षण्यप्रतिपादनायायमारंभ इति वाच्यम् । व्यवहारविसंवादस्य प्रबोधसमये सर्वसंप्रतिपन्नत्वात् । 'वैधर्म्याच्च न स्वप्नादिवत्' इति पूर्वमेव तद्वैषम्यस्योक्तत्वाच्च । न च नात्र मिथ्यात्वं साधयामः । अपि तर्हि ? व्यावहारिकसत्यत्वाभावमेव तस्य च पूर्वमसाधनान्न दोष इति वाच्यम् । तर्हि जीवकर्तृकत्वाश्रयणसिद्धान्तस्यायुक्तता, जीवकर्तृकघटादीनामिव व्यावहारिकसत्यत्वप्रसंगात् । जीवस्य स्रष्टृत्वं च अन्तिमसूत्रद्वयव्युदस्तमिति सर्वथा परसिद्धान्तः अनुपपन्नः । अतः पररीत्या अधिकरणमिदमयुक्तम् ।

सिद्धान्ते तु जीवप्रकरणेन जीवकर्तृकत्वपूर्वपक्षः । श्रुत्यन्तरे प्राज्ञप्रकरणे परमात्मकर्तृकत्वस्य स्पष्टमुक्त्या 'स हि कर्ता' इत्यत्र तच्छब्दस्य प्रसिद्धार्थकतया परमात्मकर्तृकत्वम् । 'न तत्र रथा' इति श्रुतिपरा न स्वाप्नार्थमिथ्यात्वपरा । तत्र पदार्थानामभावेऽपि पदार्थानां सृष्टिप्रतिपादनेन सृष्टपदार्थानामभावप्रतीतेस्सुतरामसंभवात् । अतः सृष्टेः पूर्वं पदार्था नावर्तन्त इत्येव हि एतद्वाक्यतात्पर्यं प्रतीयते । सृष्टेः पूर्वं सत्वे

सकलेतरपुरुषाननुभाव्यत्वं स्यात् । तदभावेन सकलेतरपुरुषाननुभाव्यपदार्थानामभावप्रतिपादन एव तात्पर्यम् । अतः नेयं श्रुतिः स्वाप्नार्थानां मिथ्यात्वबोधनपरेति तद्दृष्टान्तेन प्रपञ्चमिथ्यात्वस्थापनाय विवर्ताद्वैतिनां प्रयासः सर्वथा श्रुतिसूत्रविदूरः ।

एतेन 'एतद्दृष्टान्तेन हि प्रपञ्चस्य मिथ्यात्वं तदनन्यत्वाधिकरणेन सिद्धं अनुमानेन प्रपञ्चमिथ्यात्वे विप्रतिपन्नान् प्रति साध्यते' इत्यादि शतभूषणी प्रत्युक्ता ।

स्वाप्नमिथ्यात्वस्यैतेनासिद्धेः, एतद्दृष्टान्तेन विश्वमिथ्यात्वस्य साधनं हि शशविषाणदृष्टान्तेन हयविषाणसाधनमेव । मायाशब्दस्य मिथ्यार्थकत्वे कोशादिविरहात् । मायाविद्याविभागवादिजरदद्वैतिभिः 'मायाशब्दस्य न मिथ्यार्थकत्वं, सत्येष्वेव मायाशब्दप्रयोगात्' इत्युक्तम् । 'मन्त्रौषधादिरेव माया इत्यभ्युपगम्यते' इति विवरण एव स्पष्टमुक्तम् । मायाशब्दस्य मिथ्यार्थकत्वे संप्रतिपत्तिविरहाच्च । 'मायां तु प्रकृतिं विद्यात्' इति श्रुतिरपि विचित्रार्थकारित्वात् प्रकृतौ मायाशब्दं व्युत्पादयन्ती मिथ्यार्थकत्वं मायाशब्दस्य निरुणद्धि । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतिश्च परमात्मनः शक्तिविशेषैः परमात्मनः प्रभूतरूपप्रकाशनपरम् । अन्यथा अनन्वयात् । न चेदमिन्द्रभ्रान्तिपरं वाक्यमिति शक्यते वक्तुम् । प्रशंसार्थकप्रकरणविरोधात् । कथमन्यथा 'युक्ताह्यस्य हरयश्शता दश, भूरि त्वष्टेह राजति' इत्यादिकं घटेत ?

नृसिंहोत्तरतापनीये च 'अथैषो अकारः आत्मन्येव नृसिंहे ब्रह्मणि वर्तते . . . . अतः सर्वगतः नहीदं सर्वं एष हि व्याप्ततमः ।

इदं सर्वं यदयमात्मा मायामात्रं एष एवाग्रे' इत्याद्युक्तम् । अत्र आत्मन् शब्दस्य 'यच्चाप्नोति' इति स्मार्तनिर्वचनसिद्धार्थस्य अकारार्थत्वमभिधाय नियन्तृतया सर्वगतत्वेन च तदर्थमभिधाय आत्मनः सर्वस्य चाभेदं प्रतिषिध्य मायामात्रस्य सर्वस्य व्याप्ततमत्वेन आत्मन् शब्दार्थपर्यालोचनया सर्वाभेदः नियन्तृत्वविशिष्टव्यापकत्वेनोपपादित इति हि स्फुटं प्रतीयते । अत्र मायाशब्दस्य अनिर्वचनीयत्वशङ्कैव नोदेति ।

एवं 'माया वयुनं ज्ञान' मित्यादिकोशबलादपि मायाशब्द न मिथ्यार्थक इति निश्चीयते । अतः शतभूषणीकारकथनमनालम्बम् ।

एतेन 'मायाशब्दार्थस्तु पूर्वपूर्वपरिणामहेतुकोत्तरोत्तरपरंपरा' इत्यादि शतभूषण्यपि परास्ता । श्रुतिस्मृतिविरुद्धतादृशकल्पनायाः स्वोत्प्रेक्षामात्रमूलत्वेन अभित्तिचित्रत्वात् । 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रस्य चायमर्थः । 'पराभिध्यानात्' इति उत्तरसूत्रात् पराभिध्यानादित्याकृष्यते । तु शब्दः जीवकर्तृत्वव्यावृत्त्यर्थः । तत्र अनभिव्यक्तस्वरूपत्वं हेतुः । मायामात्रमिति हेतुगर्भविशेषणम् । एवं च सन्ध्ये सृष्टिः पराभिध्यानात् मायामात्रत्वात् आश्चर्यरूपत्वादित्यर्थः । यथा जाग्रत्कालिकप्रपञ्चसृष्टिः आश्चर्यरूपत्वात् परमपुरुषकर्तृका, तथैव स्वाप्नार्थसृष्टिरपि आश्चर्यरूपत्वात् परमपुरुषकर्तृकेत्यर्थः । आश्चर्यरूपतामेव प्रतिपादयति— 'न तत्र रथा न रथयोगाः इत्यादिश्रुतिः' इति । परमते सूत्रानुपपत्तिस्तु पूर्वमेव प्रदर्शिता । विचित्रार्थसृष्ट्यनुकूलायाश्शक्तेः ब्रह्माभिन्नायाः स्रष्टृत्वानुकूलाया एवाङ्गीकारात् सूत्रमिदंस्व-

विशिष्टः एव परमात्मा विचित्रार्थसृष्ट्यनुकूलशक्तिविशिष्टः (तत्तत्पु-रुषमात्रानुभवाल्पकालिकस्वाप्नानुभवप्रयोजकीभूतकर्मकर्तृजीवानुष्ठि-तकर्मजन्यफलानुभवप्रयोजकसंकल्पविशिष्टः) स्वाप्नानर्थान् सृजति । यथा च कुलालः मृदाद्युपादानविशिष्टः घटनिर्माणौपायिकसामर्थ्य-विशिष्टस्सन् घटादीन् सृजति तद्वत् अभिन्ननिमित्तोपादानत्व, केवलनिमित्तत्वाभ्यां परं विशेषः कुलालब्रह्मणोः । एवं च 'विचित्र-शक्तिः ब्रह्मणो भिन्ना, उत अभिन्ना' इत्यादिना शतभूषणीकारस्य विकल्प्यदूषणं केवलं स्वाज्ञानमात्रप्रकाशकमिति सिद्धम् ।

स्वाप्निकजागरिकाणां 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रोक्तं वैधर्म्यं शुक्तिरूप्यव्यावहारिकरजतयोरिव प्रातिभासिकत्व-व्यावहारिकत्वाभ्यामेव इति शतभूषणीकारकथनमप्यनुपादेयम् । अद्वैतसिद्ध्यादिप्रदर्शितमुख्यवेदान्तभूतदृष्टिसृष्टिपक्षस्यैव मुख्यसिद्धा-न्तत्वेनावश्यमेष्यत्वात्, तदङ्गीकारे च सर्वेषामेव जाग्रत्स्वाप्नार्थानां प्रातीतिकत्वेन मात्रयाऽपि वैलक्षण्यस्योपपादयितुमशक्यत्वात् ।

इदं त्वत्र तत्त्वम् । स्वाप्नरथादिसृष्टिकर्ता त्वीश्वरः समग्र शक्तिः रथादिनिर्माणौपयिकप्रकृतिपरिणामपरं पराघटकवृक्षादिरूपेणैव प्रकृतेरुपादानत्वं परिकल्प्य सृजतीति न काप्यनुपपत्तिः । अल्प-कालिकत्वतत्तत्पुरुषमात्रदृश्यत्वाभ्यामेव स्वाप्नार्थस्य, चिरकालाव-स्थायित्वसर्वानुभवयोग्यत्वधर्मविशिष्टजागरितपदार्थेभ्यो विशेषः ना-न्यथेति । एतेन भगवत्संकल्पस्यापर्यनुयोज्यत्वे गगनकुसुमादीना-मपि सृष्टिः स्यात् इति शतभूषणीकारभ्रमस्तु नैवावसरं लभते । प्रत्युत तन्मत एवेदं दूषणं, विचित्रविक्षेपकारिण्याविद्या गगनकुसुमा-दीन्यपि कुतो वा न प्रदर्शयतीति ।

शांकररीत्या च परमात्मकर्तृकत्वं स्वाप्नार्थानां इति पूर्वपक्ष एवानुपपन्नः। तदनन्तरप्रतिपत्तिपत्तिपादाख्ये पूर्वस्मिन् पादे जीवावस्थाया एव निरूपणेन जीवस्यैव प्रस्तुतत्वात् । 'निर्मातारं चैके पुत्रादयश्चे' ति सूत्रे 'पुत्रादयश्चे' त्यंशस्यानुपपत्तिश्च । पुत्रादिस्रष्टृत्वस्य जीवेष्वेव संभावितस्य ईश्वरसाधकत्वायोगात् । एवं 'मायामात्र' मिति सूत्रे 'स्वप्नस्ये' ति पदाध्याहारः शांकराणां, जीवस्येति पदस्य त्वध्याहारः सिद्धान्ते । स्वप्नस्य कात्स्न्येंनानभिव्यक्तस्वरूपत्वं चासिद्धम् । स्वप्नदर्शनवेलायां अभिव्यक्तस्वरूपत्वस्यैवोपलंभात् । अत एव च भीतिः प्रीतिर्वा स्वप्नसमये । सिद्धान्तरीत्या तु बद्धस्य जीवस्य स्वप्नद्रष्टुः, प्रत्यक्त्वादिधर्मातिरिक्तापहतपाप्मत्वादीनां अनभिव्यक्तत्वात् युक्तं कात्स्न्येंनानभिव्यक्तस्वरूपत्वम् । अत एव च स्वरूपशब्दसार्थक्यमपि । अव्यवहितपूर्वसूत्रे पुत्रादिनिर्मातृत्वेन जीवस्य प्रस्तुतत्वात् जीवस्येति पदस्याध्याहारः इति तु युक्तम् । स्वप्नस्य तु तत्सूत्रे अप्रस्तुतत्वात् न तत्पदाध्याहारः । जीवस्यानभिव्यक्तस्वरूपत्वं च 'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ' इत्युत्तरसूत्रेण बोध्यते इति शंकराचार्याणामपि संमतम् । ततश्च परसंमतार्थः न युक्तः । किंच कात्स्न्येंनानभिव्यक्तस्वरूपत्वं च न मायामात्रपदवाच्यमिथ्यात्वसाधनायालम् । ब्रह्मण्यनैकान्त्यात् । संसारदशायां हि कात्स्न्येंनानभिव्यक्तस्वरूपत्वं तत्रापि । यदभिव्यक्त्यर्थं च शास्त्राणां प्रवृत्तिः । यथाकथंचिदप्यनभिव्यक्तस्वरूपत्वं तु स्वप्नेऽपि नास्तीति हेतोरसिद्धिः । अतश्चैवमादिदूषणग्रस्तत्वात् पररीत्या एतत्सूत्रार्थोऽनुपपन्नः । अधिकं त्वस्मदीये सूत्रार्थमणिदर्पणे । अत्र चानुमानद्वयं विवक्षितम् ।

'पराभिध्यानात्तु तिरोहितं ततोह्यस्य बन्धविपर्ययौ' इति सूत्रार्थोऽपि परसंमतः अनुपपन्नः। तिरोहितं - ज्ञानादि, परमभिध्यायतः आविर्भवति इति किल शांकरयोजना। तत्र पृच्छामः – 'तिरोहितं पराभिध्यानात्' इति सूत्रविन्यासः कुतो न कृत इति। अतः पराभिध्यानादिति तिरोहितमित्यत्रैवान्वेति इत्येव वक्तव्यम्। युक्तं च। 'अभिध्योपदेशाच्च, तदभिध्यानादेव तु तल्लिङ्गात् सः' इति सूत्रयोः परकर्तृकाभिध्यानाविवक्षायाः शांकराचार्याणामपि संमततया पराभिध्यानादित्यत्रापि परकर्तृकाभिध्यानमेव विवक्षितमिति सूत्रकाराशयः स्फुटं प्रतीयते। तिरोहितं पराभिध्यानादाविर्भवतीति शांकरार्थे च तिरोधानहेतुरनिर्दिष्टः स्यात्। तिरोभावहेतुमनभिधाय सूत्रे आविर्भावहेतुकथनमपि न युक्तम्। 'ततो ह्यस्य बन्धविपर्ययौ' इति बन्धविपर्ययोः एकहेतुरत्र प्रदर्शितः। जीवस्वरूपाविर्भावः बन्धान्तर्गतः। जीवस्वरूपाविर्भाव एव च मोक्षः। अतः पराभिध्यानं तिरोधाने एव हेतुरिति सूत्रे विवक्षितम्।

शांकरपक्षे च 'आविर्भवति इति पदं सूत्रे नास्ति इति अध्याहारप्रसङ्गः। अतः जीवकर्तृकपराभिध्यानाविर्भावः इति नात्र सूत्रे विवक्षितम्। आविर्भावरूपपरसंमतार्थस्यात्र विवक्षितत्वे। आविर्भावप्रतिकोटिभूततिरोभावस्यैव सूत्रे वक्तव्यतया आपद्यते तदा हि 'तिरोभूत' मित्येव च वक्तव्यं भवति। तथा अनभिधाय 'तिरोहित' मिति वदतः सूत्रकृतः हेतुतयैवात्र विवक्षितम्। पूर्वसूत्रोक्तानभिव्यक्तस्वरूपत्वं च जीवस्य पराभिध्यानहेतुकमित्यनेन दर्शितं भवति।

किंच ज्ञानैश्वर्यशक्तितिरोभावाविर्भावौ परमते सगुणविद्याविषयावेव । 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते', 'संपद्याविर्भावः स्वेन शब्दात्' इति श्रुतिसूत्रविवक्षितश्चाविर्भावः निर्गुणविषयः, इति । सूत्रे वक्ष्यमाणाविर्भावस्य सूत्रकृत्तात्पर्यविषयत्वं च नैव संभवति । सिद्धान्ते तु जीवस्यानभिव्यक्तस्वरूपत्वोपपादनमावश्यकम् । तदुपपादनं तु पराभिध्यानेन तिरोधानोक्त्यैव 'ततो ह्यस्य बन्धविपर्ययौ' इत्यनेन तिरोधाननिवृत्तेः बन्धविपर्ययरूपत्वेन तस्य पराभिध्यानहेतुकत्यैव आविर्भावः उक्तप्राय इति 'पराभिध्यानात्तु तिरोहित' मित्यत्राविर्भावोक्तिः अत्रानपेक्षिता । अत्र तिरोधाननिवृत्तेः पराभिध्यानहेतुकत्वमुक्तम् । उत्तरत्र मोक्षस्य विद्याफलत्वमभिधाय उत्क्रान्तितः पश्चादेव तत्फलमिति निर्णयाय 'संपद्याविर्भावः स्वेन शब्दात्' सूत्रप्रवृत्तिरिति सामञ्जस्यम् । एवं च 'ततो ह्यस्य बन्धविपर्ययौ' इत्यत्रापि बन्धान्तर्गततिरोधानहेतुरभिध्यानमेव तद्विपर्ययहेतुरित्यर्थ एवात्र विवक्षितः । एवं विवक्षायामेव च बन्धाविपर्ययैतदुभयहेतुः पराभिध्यानमेकमेव । हेतुतावच्छेदकधर्मोऽप्येक एवेति 'ततः' इत्यस्य स्वारस्यम् । अद्वैतिमते 'यदज्ञानात् बन्धः यज्ज्ञानाच्च तान्निवृत्तिरित्यर्थस्य विवक्षितत्वेन 'पराभिध्याना' दित्यत्र वृत्तिच्छन्नस्य परस्य तच्छब्देन परामर्शाङ्गीकारेऽपि परस्य ज्ञानाज्ञानसंबन्धित्वेन पूर्वमनुपस्थित्या तच्छब्देन ज्ञानाज्ञानसंबन्धित्वेन परस्य परामर्शो नैव युज्येत । अतः पराभिध्यानादिति सूत्रमपि परेषां प्रतिकूलमेवेति । यथा चैतदधिकरणघटकीभूतसर्वसूत्राणामपि अद्वैतभञ्जकत्वं तथा अस्मद्गुरुचरणानुगृहीतगूढार्थसंग्रहभावप्रकाशादौ द्रष्टव्यम् ।

अभिव्यक्तसत्यसंकल्पादेः जीवस्य मुक्त्यवस्थापन्नस्य स्वप्ना-द्रष्टृत्वादेव स्वाप्नपदार्थस्रष्टृत्वासंभवात् 'अभिव्यक्तसत्यसंकल्पादे-र्जीवस्य निर्मातृत्वं, किमचिदंशमनपेक्ष्य उत तदपेक्ष्य' इत्यादि-विकल्पनं दूषणं च शतभूषणीकारस्य सर्वथा अस्थाने। बन्धदशायां जीवस्य स्वाप्ननिर्मातृत्वं न संभवतीति निरूपणे एवात्र तात्पर्यात्।

'सूचकश्च श्रुतेराचक्षते च तद्विदः' इति सूत्रे स्वप्नस्य अभ्युदयानभ्युदयसूचकत्वात् जीवकर्तृकत्वे च अशुभस्यानिष्टत्वात् शुभस्य सूचनमेव स्रष्टा पश्येत्' इत्युक्तम्। अत्र 'सूचकत्वोक्तिमात्रेण अपारमार्थिकत्वमवगम्यते' इति शतभूषणीकारोक्तिस्तु पारमार्थिक-दीपादर्शगवादीनां शुभसूचकत्वदर्शनात् व्यभिचरितत्वादुपेक्ष्यैव। 'मिथ्यात्वेऽपि कार्यकारणभावस्य सत्यत्वनिबन्धनाभावात् भाव्यभ्यु-दयसूचकत्वं स्वाप्नार्थानां अव्याहतम्' इति शतभूषणीकारवचनं 'हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा।' इति खण्डनं च कार्य-कारणभावस्य सांवृतत्ववादिनां बौद्धानां, कार्यकारणभावमेवानभ्यु-पगच्छतां चार्वाकाणां च सांकर्यं शांकराणां द्योतयति। प्रथमेन अध्यायेन जगत्कारणत्वं ब्रह्मणि बहुभिः प्रतिपाद्य द्वितीयाध्यायेन च तत्र विरोधप्रसक्तिं च वारयता भगवता सूत्रकृता कार्यकारणभाव-दूषयितारः विवर्ताद्वैतिनोऽपि बौद्धादिवदेव वैदिकगोष्ठीतस्सुदूरं निष्कासिता इति नास्माभिः किञ्चिन्निरसनीयमवशिष्यते। एतद्वि-स्तरस्तु उपोद्घाते एव सम्यक्कृतः तत्रैव द्रष्टव्यः, भूमिकायां च।

मत्स्यपुराणगतवचनबलात् स्वाप्नार्थानां मिथ्याभूतत्वसाधनं कूर्मपुराणगतस्वाप्नार्थसत्यताप्रतिपादकध्यायेन निरस्तम्। महा-

व्याख्यानां चतुर्णामेव वेदत्वं वर्णयित्वा अन्ततः तेषामपि अप्रामाण्यं वर्णयतां अद्वैतिनां 'पुराणन्यायमीमांसा' दि चतुर्दशविद्यास्थानाङ्गीकरणं सर्वथा न घटते। प्रामाण्याभ्युपगमे वा अद्वैतहानिरेव।

सन्ध्याधिकरणे 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति वदन् सूत्रकारः, अद्वैतिदृष्ट्या परं (उत्कृष्टं) परमात्मानं ध्यायन्जीवः मुक्त्यादिकं प्राप्नोति इति निरूप्य ध्यातृध्येय, जीवपरयोः भेदं च स्पष्टमभिधाय, तत्संकल्पादेव च बन्धरूपं संसारमभिधाय च, जीवपरयोर्भेदं, उपासनस्य अतात्विकत्वं, प्रपञ्चस्य मिथ्यात्वं च वर्णयतः विवर्ताद्वैतिनः निष्करुणं किल खण्डयति। स्थिते चैवं मायामात्रसूत्रं तदधिकरणं वा अद्वैतमत एव स्वरसम्' इति शतभूषणीकारोक्तिः मायामात्रमेव।

श्रीभाष्यकाररीत्या स्वाप्नानामपि ईश्वरसृष्टत्वे जागरितेभ्यो विशेषः किन्निबन्धनः, किं व्यावहारिकप्रातिभासिकरजतयोरप्यविशेषः' इत्यादि शतभूषणी अनुवादमपि किल नार्हति। प्रातिभासिकव्यावहारिकभेदस्तु बौद्धकल्पितः न वैदिकसार्वभौमैः श्रीभाष्यकारैः तदनुयायिभिर्वा अङ्गीक्रियते। न च तदङ्गीकारस्य आवश्यकता मनागपि। प्रत्युत कुमारिलादिभिः दूषिता चेयं प्रक्रिया। उभयोरपि स्वाप्नजागरपदार्थयोः ईश्वरसृष्टत्वाविशेषेऽपि जागरितपदार्थानां सर्वदेशसर्वकालवर्तित्वं सर्वजन्तुदर्शनयोग्यत्वं, स्वाप्नानां तु तत्तत्पुरुषानुभवमात्रयोग्यत्वं तत्तत्कालवर्तित्वं चेति वैषम्येण दोषाभावात्। तदर्थं च बौद्धशरणप्रवेशस्य नितरामयुक्तत्वात्। अल्पकालिकत्वादेव च जाग्रत्पदार्थवत्कार्यकारित्वाभावः।

'सर्वे प्रत्ययाः निरालम्बनाः, प्रत्ययत्वात् स्वाप्नप्रत्ययवत्' इत्यनुमानस्यापि दृष्टान्ते साध्यासिद्धिरेव श्रीभाष्यकारमते उत्तरम्। वस्तुतस्तु अद्वैतिनां मुख्यवेदान्तपक्षे (जाग्रत्प्रपञ्चस्यापि दृष्टिसृष्टित्वपक्षे) जाग्रत्प्रत्ययानामपि निरालम्बनत्वमेवेति सर्वेऽपि प्रत्ययाः निरालंबनाः, प्रत्ययत्वात्, स्वाप्नप्रत्ययवत्' इत्यनुमानस्य किमुत्तरं शाङ्करमते ? इत्येव पर्यालोच्यताम्। अतश्च तृतीयाध्यायस्सर्वोऽपि अद्वैतिनां विरसः। विशिष्टाद्वैतिनामेव स्वरस इति शतदूषण्यामाचार्यपादोक्तिरप्रकम्प्यैव।

'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'ति सूत्रं शांकराणां सर्वथा प्रतिकूलमेवेति पूर्वमेवोपवर्णितम्। एतत्सूत्रार्थविवरणावसरे 'स त आत्मा, एष त आत्मा' इत्यादिवाक्यं शंकराचार्यैरप्युपन्यस्तम्। उपनिषद्भेदेन, द्वाविंशतिवारं, चतुर्विंशतिवारं चाभ्यस्तयोरनयोर्वाक्ययोः जीवब्रह्मभेदसाधकत्वेन प्रत्यग्ब्रह्मैक्यवादभञ्जकत्वात् तद्विषयकमिदं सूत्रं च अद्वैतभंजकमेवेत्यत्र न कोऽपि संशयः। 'अहं ब्रह्मास्मि' इति वाक्ये अत्र विषयतया स्वीकृतेऽपि न पराभीष्टसिद्धिः। 'तदात्मानमेवावेदहं ब्रह्मास्मि' इति ह्यत्र वाक्यमुपलभ्यते। इदं हि वाक्यं 'आत्मैदमग्र आसीदि' त्यादि (बृ) चतुर्थब्राह्मणगतम्। तत्र 'आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनो अपश्यत्, सोऽहमस्मीत्यग्रे व्याहरत्। ततोऽहं नामाऽभवत् – स यत्पूर्वोऽस्मात् सर्वान् पाप्मनः औषत् तस्मात् पुरुषः' इत्युपक्रमवाक्यम्। अत्र 'आत्मैवेदमग्र आसीदि'त्यात्मनः सर्वपूर्वकालसत्वं, 'स यस्मात् पूर्वोऽस्मात्' इति पुरुषशब्दनिर्वचने पुरुषशब्दार्थतया अभिहितमिति स्फुटं प्रतीयते। इदं च 'सदेव

सोम्येदमग्र आसीत्' इत्यादिवत् प्रळयवाक्यम् । 'सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहं नामाऽभवत् । इत्यत्र अहमिति हिरण्यगर्भनाम । भृगुभरद्वाजसंवाद हयशिर उपाख्यानादिषु च अयमर्थः स्फुटः । अहं नामत्वसाधनं 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत असौ नामायमिदं रूपमिति, स एष इह प्रविष्ट आनखाग्रेभ्यः यथा क्षुरः क्षुरधाने निहितः स्यात्, विश्वम्भरो वा विश्वम्भरकुलाये' इत्यादिना क्रियते । अत्र 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति प्रलयवाक्यम् । 'तन्नामरूपाभ्यां व्याक्रियत' इति नामरूपव्याकरणं प्रक्रम्य 'ततोऽहं नामायमिदं रूपः' इत्यत्र 'स एष इह प्रविष्टः आनखाग्रेभ्यः' इति हेतुतया प्रयुक्तम् । ततश्चात्मनः शरीरान्तः प्रवेशनिबन्धनं तत्तन्नामभाक्त्वमित्येतेन सिद्धम् । 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति वाक्यानुसारेण 'आत्मैवेदमग्र आसीत् पुरुषविधः' इत्यत्रापि अव्याकृतावस्थैव विवक्षिता । 'सोऽनुवीक्ष्य नान्यदपश्यत्' इत्यत्र च व्याकृतदर्शनविरह एवाभिप्रेतः । आत्मन्शब्दस्य व्यापकचेतनार्थकत्वेन 'घटादन्यं न पश्यति' इत्यादौ घटत्वघटरूपादिदर्शननिषेधविरहवत् व्याप्यवस्तुनः अव्याकृतस्य आत्मन्शब्दप्रवृत्तिनिमित्तान्तःपातिनः दर्शननिषेधोऽपि नैव विवक्षितः । 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इति वाक्येन 'स वा अयं सुपूर्षु पुरिशयः इति चतुर्थवक्ष्यमाणनिर्वचनानुसार्यर्थोऽपि सूच्यते । आत्मन्शब्दस्य सर्वव्यापकार्थकतया व्याप्तिरेव प्रवेशः । स च नियमनार्थः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते ।' (श्वे.) इति जीवप्रकरणोक्तदिशा जीवेषु कृपया अन्तर्नियमनार्थतया सर्वशरीराण्यादत्ते इत्यपि निर्वचनम् । 'अद भक्षणे' इति धातुना 'सर्वान् पाप्मन औषत्' इत्युक्तार्थोऽपि आत्मन्शब्दस्य युक्त एव ।

एतेन आत्मनः पुरुषविधत्वं सुस्थम् । 'तदाहुः ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते, किमुत ब्रह्मावेत्, यस्मात् सर्वमभवत्' इति । 'ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात् तत्सर्वमभव' दित्याद्यत्र श्रूयते । तत्पूर्वं च 'स एष इह प्रविष्ट' इत्यनन्तरं 'स योऽत्र एकैकमुपास्ते न स वेद अकृत्स्नो ह्येष अत एकैकेन भवति । आत्मेत्येवोपासीत । अत्र ह्येत सर्वे एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा अनेन ह्येतत्सर्वं वेद' इति वाक्यम् । अत्र परमात्मसृष्टौ सर्वत्र प्रवेशेन विशिष्टस्यैवोपास्यता न तु विशेषणविशेष्ययोः पृथक् । विशिष्ट एव सर्वपदार्थानामैक्यम् । न तु स्वरूपैक्यम् । जडाभेद-स्यात्मनि बाधितत्वात् । इत्यादिकं स्फुटम् । अनन्तरं च विशिष्ट-स्यैव प्रियत्वमुपपादितम् । तदनु च 'तदाहुर्ब्रह्मविद्याया' इत्यादिवाक्यम् । 'अत्र मनुष्या' इत्यनेन मनुष्यशरीरसंयुक्तजीवा एव विवक्षिताः । परमात्मनः सर्वशरीरसंयोगः पूर्वमुपपादितः । जीवस्य मनुष्यशरीरसंयोगेन मनुष्यशब्दवाच्यत्ववत् परमात्मनः सर्वशरीरसंयोगेन सर्वशब्दवाच्यत्वं च सूचितं भवति । 'किमुत ब्रह्मावेत्' इति प्रश्नस्य चायमाशयः सर्वभावहेतुभूतं ज्ञानं किं सर्वान्तर्यामित्वज्ञानं, उत, अन्यधर्मप्रकारकज्ञानमिति । अत्र 'ब्रह्म वा इदमग्र आसीत्' इति वाक्यं च 'आत्मैवेदमग्र आसीत् ।' 'तद्धेदं तर्ह्यव्याकृतमासीत् ।' इति वाक्यद्वयं च स्मारयति । तेन च तदनन्तरं 'स एष इह प्रविष्ट' इत्याद्यनन्तरमात्मशब्दार्थ-विवरणेन 'आत्मेत्येवोपासीत' इति वाक्यार्थोऽपि स्मारितो भवति । एवं च 'तदात्मानमेवावेदहं ब्रह्मास्मी' ति वाक्येऽपि आत्मानं सर्वमन्तःप्रविश्य नियन्तारं अवेदित्यर्थः । तेन सर्वभावहेतुः

सर्वान्तर्यामित्वज्ञानमेवेति प्रतिवचनार्थः निर्मत्सराणां विदुषां स्फुटः। एवमर्थस्याविवक्षितत्वे 'ब्रह्म वा इदमग्र आसीदि' त्यस्य 'आत्मान' मित्यस्य च वैयर्थ्यमेव स्यात्। अनन्तरं 'स यो देवानां प्रत्यबुध्यत . . . . आत्मा ह्येषां स भवति। अथ योन्यां देवतां . . . . न स वेद' इत्यादि श्रूयते। पूर्वं सर्वभावहेतुत्व-मन्तर्यामिणः प्रतिपाद्य देवादीनामुत्तरत्र सर्वभावाभिधाने देवाना-मपि सर्वभावहेतुभूतमन्तर्याम्यैक्यज्ञानमेव। 'अन्तर्याम्यैक्यमेव प्रत्य-बुध्यते' त्यत्र विवक्षितम्। 'स एव सर्वमभव' दित्यत्र तदन्तर्या-मिणः सर्वान्तर्याम्यैक्यमेव विवक्षितम्। देवमनुष्यादिशब्दानां शरीरसंयुक्तात्मघटनाया निश्चयेन जीववत् परमात्मनोऽपि प्रवेशेन स्ववाच्चिशब्दोऽपि परमात्मपर्यन्तः इति निश्चयस्संभवत्येव। सर्वाभेदबोधकमिदं वाक्यमिति परेषां मते तु अचिज्जीवयोरभेद-वैलक्षण्येन सर्वाभेदो नैव घटते। अतः 'अहं ब्रह्मासी' ति वाक्यं न प्रत्यग्ब्रह्मैक्यबोधकमिति तद्विषयकं 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे' ति सूत्रमपि न परमतानुकूलम्।

एतेन 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे' ति सूत्रे 'अहं ब्रह्मासी' त्यनुसंधानं मोक्षोपाय इति वर्णितम्। इदं च प्रत्यग्ब्रह्मै-क्यवाद एव सत्यम्' इत्यादि शतभूषणी प्रत्याख्याता। अद्वैतमते अधिकार्यलाभेन मोक्षोपायप्रवृत्तेर्विचारप्रवृत्तेरेववाऽयोगात्। किं तत्र ईश्वरो अधिकारी, उत निर्विशेषचित्, ज्ञाता जीवो वा? नाद्यः — ईश्वरस्य सर्वज्ञत्वेन विचारसाध्यज्ञानवत्वाभावेन विचारे निर्णया-त्मकज्ञानानुकूले प्रवृत्त्यनुपपत्तेः। नापि द्वितीयः — चिन्मात्रस्य ज्ञातृत्वाभावात्। नापि तृतीयः, ज्ञातुश्च नाशस्यापुरुषार्थत्वेन शास्त्रे प्रद्वेषवत्वात्। अतः परमते अधिकार्यलाभः। इति।

यद्प्याह शतभूषणीकारः, 'श्रीभाष्यमते 'आत्मेति तूपगच्छन्ति' इति सूत्रं हि उपासनावस्थायामहमर्थस्य जीवस्य स्वात्मतया परमात्मानुसन्धानं बोधयति । तदिदमयुक्तम् । मुक्तात्मैव हि परमात्मानं स्वात्मतया अनुसंधातुमर्हति, न उपासकः' इत्यादि । तदिदं केवलं स्वाज्ञानाविष्करणम् । उपासकः शास्त्रबलात् परमात्मानं स्वात्मतया अनुसंधायैव स्वात्मभूतपरमात्मतृप्त्याद्यर्थं उपासनादिकमनुतिष्ठतीति श्रीभाष्यकारसिद्धान्ते बाधकस्य कस्याप्यभावात् । 'मुक्तात्मैव परमात्मानं स्वात्मतया अनुसंधातुमर्हति' इति कथनमपि एवकारस्थाने अपि शब्दे योजनेन सम्यगेव । मुक्तात्मनः परमात्मनः स्वात्मत्वेन अनुसंधानं प्रात्यक्षिकम् । उपासकस्य शास्त्रबलात् इति परं विशेषः । अतः शतभूषणीकारदूषणं सर्वं एतादृशभ्रममूलकं एतद्भ्रमनिराकरणादेव निरस्तमेवेति न विस्तरस्यावकाशः । ब्रह्मणोऽपि 'आनन्दो ब्रह्मे' त्यादि वाक्यैः सुखरूपत्वे फलत्वेनावगमात् 'आत्मेति तूपगच्छन्ति' इति सूत्रे चोपास्यब्रह्मणः एव फलभूतस्य आत्मत्वेनोपास्यता उत प्रकारान्तरेण इति विचारात् फलाध्याय एव संगतिर्युक्तेति अध्यायासंगतिशंकाया नैवावकाशः ।

'मुक्तात्मत्वप्रयुक्तशरीरशरीरिभावः, परमात्मनः स्वशरीरितया अनुसंधानप्रयुक्तं मुक्तात्मत्व' मित्यन्योन्याश्रयणं' इति शतभूषणीकथनमपि केवलमुन्मादात् । मुक्तात्मत्वप्रयुक्तः शरीरशरीरिभावः इत्यस्य सिद्धान्ते अनङ्गीकारात् । चेतनाचेतनसाधारण्येन सर्वस्यापि हि परमात्मनिरूपितं शरीरत्वं श्रुतिबलादङ्गीक्रियते । अतः न किञ्चन संकटम् । प्रत्युत अद्वैतिनामेवानुपपन्नमिदं सूत्रमिति पूर्वमेव स्पष्टमावेदितम् ।

अन्तर्याम्यधिकरणेन गतार्थत्वादिमदधिकरणं वितथमिति शतभूषणीप्रतिपादनमपि मोहादेव । अन्तर्याम्यधिकरणे हि 'स्थाना-व्यपदेशाच्च' त्यादिसूत्रैः प्रतिपादितस्य परमात्मत्वस्थापनं हि अन्तर्यामिब्राह्मणबलात् क्रियते । न तु तस्योपास्यत्वानुपास्यत्व-विचारः । अत्र तु उपास्यत्वरूपनिष्कर्षः क्रियते इति प्रमेयभेदात् पुनरुक्तत्वशंकाया एवाप्रसरात् । अद्वैतिनां मते एव, जिज्ञासाधि-करणसमन्वयाधिकरणादिषु प्रत्यग्ब्रह्मैक्यस्य साधितत्वेन व्यर्थमिद-मधिकरणम् । अश्रौतस्यासंबद्धस्य प्रत्यग्ब्रह्मैक्यस्य पुनःपुनः सूत्रकारैः स्थापनं क्रियते इति कथनं सूत्रकारहृदयपीडावहमेव ।

आत्मपदं हि शरीरप्रतिसंबन्धिनमेव बोधयति । क्वाचित्कं हि 'मृदात्मको घटः' इत्यादावन्यार्थकत्वम् । जीवात्मन्यपि आत्मन् शब्दः मुख्य एव । अत एव क्वचित् क्वचित् जीवात् व्यावृत्ति-सिद्ध्यर्थं, परशब्दविशेषेण परमात्मेति निर्देशः क्रियते ।

यदपीह शतभूषणीकारो लिखति, 'नियन्तृत्वमात्रे वा, नियाम्यत्वमात्रेण वा शरीरशरीरिभावाङ्गीकारे राजप्रजयोरपि शरीर-शरीरिभावापत्तिः' इति, तदिदं, श्रीभाष्यकारैरेव परिहृतम् । तथा हि ; विलक्षणत्वाधिकरणे, 'यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च तत्तस्य शरीरं' इति श्रीभाष्यकारैः शरीरलक्षणं प्रतिपादितम् । तदिदं लक्षणत्रयपरतया श्रीन्यायसिद्धाञ्जने आचार्यपादैर्योजितम् । तत्रैकं लक्षणम् – 'यस्य चेतनस्य यदवस्थं द्रव्यं यावत् सत्तं धार्यं तदवस्थं तस्य शरीरं' इति । तथा अपरं लक्षणं – 'यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमशेषतानर्हं तदवस्थं तस्य शरीर' मिति । अत्र

लक्षणद्वयेऽपि, प्रजाभृत्यादेः राजादिकं प्रति यावत्सत्त्वं धार्यत्वस्य यावत्सत्त्वमशेषतानर्हत्वस्य वा अभावात् न कश्चिद्दोषः । 'आकाश शरीरं ब्रह्म' त्यत्र शरीरपदवैयर्थ्यं तु पूर्वमेव परिहृतम् ।

अद्वैतिमते 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे' ति सूत्रे अभेद इति तूपगच्छन्ति' इति सूत्रयितव्ये आत्मेति सूत्रणं जीवपरयोरभेदाङ्गीकरणं सर्वथा श्रुतिविरुद्धमिति सूचनार्थमेव । 'शरीरी' इति सूत्रणे विशिष्टार्थबोधकत्वेन गौरवापत्त्यैव आत्मेति पदनिर्देशः । आत्मन्शब्दश्च यथा व्यापकचेतनबोधकः न तथा 'शरीरी' इति पदमिति तद्बोधाय चापि आत्मन्शब्दप्रयोगः इति न श्रीभाष्यमते आत्मन्शब्दानुपपत्तिः । 'व्याप्यव्यापकता मिथ्या' (शंकराचार्यकृतापरोक्षानुभूतौ) इति वदतां मत एव व्यापकचेतनवाचकात्मन्शब्दानुपपत्तिः ।

सर्वशरीरकस्य परमात्मनः 'स्वात्मत्वेनोपासनं न परमात्मोपासनं' इति शतभूषणी अनुवादमपि न प्रयोजयति । सर्वात्मत्वादेव परमात्मनः सर्वघटकीभूतं स्वंप्रत्यपि आत्मत्वं वर्तते इति एतादृशव्यापकस्यैव परमात्मत्वं तस्यैव सर्वशरीरस्य युज्यते नान्यस्येति बोधनात् ।

आचार्यपादाश्शतदूषण्यां 'अहं ब्रह्मासीत्यनुसंधानं भ्रान्तिरूपमिति भवतेष्टव्यम् । विप्लुताहंभावादिविप्लवसंविन्मानरूपत्वाभ्युपगमाद् ब्रह्मणः । ततश्च मोक्षोपायतया भ्रान्तिरेव सूचितेत्यापतति' इति निरूपयामासुः ।

तद्दूषयितुकामः शतभूषणीकारः 'न ह्यहं ब्रह्मासीत्यनुसंधानं जीवन्मुक्तानां भ्रमः । तदानीमहंकारस्योपाधित्वेन वृत्त्यानुपाधितवे-

नाभासमानत्वात् । स्वरूपचैतन्यस्य वृत्तिव्याप्यस्याबाधितत्वाच्चे-त्यादि यत्किञ्चिल्लिखति स्म, तदपि विमर्शासहम् । अहंकारस्योपा-धित्वेनाभासमानत्वे 'अहं' इति व्यपदेशः कथम्? भासमानत्वे वा न हि जीवन्मुक्तता । जीवन्मुक्तिरेव न संभवतीति सुदृढं प्रमाण-बलात् जीवन्मुक्तिभङ्गवादपरीक्षासमालोचने प्रपञ्चितम् ।

अहमर्थस्य सोपाधिकत्वं वदतां अद्वैतिनां मते तत्वज्ञानेन निवृत्ताविद्यानां जीवन्मुक्तानां 'अहं ब्रह्मास्मी' ति प्रतिसंधानानुप-पत्तिश्च । 'बाधितानुवृत्त्या व्यवहरन्तोपीमे आत्मैक्यदर्शिनोऽप्युप-देशका भवितुमर्हन्ति' इति तु निरूपणानर्हम् । अविद्याख्यदोषस्य अहन्ताव्यवहारहेतुभूतस्य ब्रह्मान्यस्य ज्ञानबाध्यदोषत्वाभ्युपगमात् तिमिरादिवत् ज्ञानाबाध्यदोषत्वानभ्युपगमाच्च तत्वज्ञानेन निवृत्ता-ज्ञानानां जीवन्मुक्तानां, आत्मैक्यदर्शिनां कथमुपदेशकत्वम्? ऐक्यज्ञाने सत्यपि भेदसमनियतोपदेशकत्वस्वीकारे वा अद्वैतिसंमत-जीवन्मुक्तानां विप्रलंभकाग्रेसरत्वमिति समीचीनमिदं जीवन्मुक्तत्वम् । एतद्विस्तरस्तु उपदेशानुपपत्तिवादपरीक्षासमालोचने द्रष्टव्यः ।

इदमत्र प्रष्टव्यम् – अद्वैतिनां मते अपरोक्षज्ञानं अविद्या-निवर्तकमित्यङ्गीक्रियते । तच्चापरोक्षज्ञानं शब्दादेव जायते इत्यपि, तत्र तत्वमस्यादिवाक्यजन्यापरोक्षज्ञानाङ्गीकारमते, तत्वमस्यादि-वाक्यश्रवणसमनन्तरमेवाविद्या कुतो न निवर्तते इति । यदि च अविद्या वासना वा वाक्यजन्यापरोक्षज्ञानानन्तरं न निवृत्ता, तर्हि निदिध्यासनानन्तरमपि न निवर्तेतैव । निदिध्यासनानन्तरं निवर्त-कताऽच्छेदकपूर्वासिद्धरूपसंपादनस्य विरहेणाविशेषात् । अधिष्ठाना-

परोक्षस्यैव अध्यस्तनिवर्तकतावच्छेदकत्वात् । अतः अविद्यानिवृत्तिः सर्वथा अनुपपन्नेति कथं मुक्तिः अद्वैतिमते इति ।

अहंप्रत्ययस्य भ्रान्तिरूपत्वं चेति अद्वैतिनां निरूपणं सर्वदर्शनविरुद्धम् । तथा हि ; 'न चाहं प्रत्ययः व्यामोह इति शक्यते वक्तुम् । बाधकप्रत्ययाभावात्' । इति शाबरं भाष्यम् । वार्तिककारास्तु 'नातस्मिन् स इति ज्ञानं न ह्यसौ भ्रान्तिकारणम् । न चाहं प्रत्ययो भ्रान्तिरिष्टो बाधकवर्जनात् ॥' (श्लो. वा. आ. १२५) इति अहमर्थात्मत्वं स्थापयन्तः अहमर्थानात्मतावादिनः बौद्धानिव विवर्ताद्वैतिनोऽपि तादृशान् दूरीकरोति । एतद्विस्तरस्तु अस्मदीये श्लोकवार्तिकभूषणे स्पष्टः ।

यदप्युक्तं शतभूषण्यां 'श्रीभाष्यमते के वा ज्ञानिनः तत्त्वदर्शिनः ? यदि परमात्मशरीरतया दर्शनसमानाकारध्रुवानुस्मृतिमन्तः तर्हि ते स्वमपि स्वशरीरात्मतया गृह्णन्ति न वा, आद्ये, तेषां परमापृथक्सिद्धशरीरात्मना न स्वात्मानुभवः, न वोपदेशकत्वम् । द्वितीये तु आप्रयाणं कर्मयोगनियमाधिकारत्यागः मुक्तात्मव' दित्यादि ।

तदिदमत्यन्तासंबद्धमुन्मादैकमूलकं च । तथाहि, अत्र दर्शनसमानाकारध्रुवानुस्मृत्यादेः प्रसक्तेरेवाभावात्, ध्यानरूपज्ञानं नात्र विवक्षितम् । 'तद्विद्धि' इति गीताश्लोके चतुर्थाध्यायस्थे शरीरव्यतिरिक्तनित्याविनाशिजीवात्मस्वरूपोपदेशस्यैव प्रस्तुतत्वात् । अत एव तच्छ्लोकभाष्ये भगवता 'तत् आत्मविषयं ज्ञानं अविनाशि तु' इत्यारभ्य मया उपदिष्टमित्यभाषि । तुष्यतु' इति न्यायेन परमात्मापृथक्सिद्धस्वात्मज्ञानवन्तः इत्यङ्गीकारेऽपि वा न मनागप्यनुपपत्तिः

पश्यामः । स्वस्य परमात्मापृथक्सिद्धस्वरूपतया परमात्मशरीरत्वज्ञानसद्भावे स्वशरीरं प्रति आत्मत्वज्ञाने का अनुपपत्तिः ? यथा देवदत्तस्य स्वस्य यज्ञदत्तनिरूपितपुत्रत्वज्ञानसमय एव स्वपुत्रभूतविष्णुदत्तनिष्ठपुत्रत्वनिरूपकपितृत्वज्ञानमबाधितं, तद्वत् इति निरूपणसंभवात् । अतः तत्वदर्शिनां परमात्मापृथक्सिद्धशरीरतया स्वस्वरूपज्ञानसद्भावसमय एव, स्वशरीरं प्रत्यप्यात्मत्वज्ञानं इति नानुपपत्तिः । उपदेशश्च, परेषां अपि, परमात्मापृथक्सिद्धशरीरत्वरूपतया आत्मविषयकज्ञानसंपादनाय घटत एव । जीवभेदाङ्गीकर्तॄणां श्रीभाष्यकाराणां मते न काप्युपदेशानुपपत्तिः । उपदेशानुपपत्तिश्च सर्वथा विवर्ताद्वैतिनामेव । कल्पितभेदस्वीकारेणोपदेशोपपत्तिस्तु प्रतिबिम्बं प्रति उपदेष्टृत्वमुन्मत्तानामेव दृष्टमिति न शक्यशङ्का ।

'आत्मेत्येवोपासीत' इत्यत्र इति करणात् दृष्टिपरं, न तूपासनपरमिति गम्यते । अतः आत्मदर्शनमेवात्र विवक्षितमिति शतभूषणीकथनमप्ययुक्तमेव । शांकरभाष्य एव दृष्टिविधेर्निराकरणात् यथा 'यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति । यथा 'मनो ब्रह्म, आदित्यो ब्रह्म' इत्यादि । इह पुनः त्वमहमस्मि, अहं च त्वमसि इत्याह अतः प्रतीकश्रुतिवैरूप्यात्' इति । दृष्टिविधिस्थले हि सर्वत्र नीचे उत्कृष्टदृष्टिः विधीयते यथा 'मनो ब्रह्मेत्युपासीत' इत्यादौ । अत्र च आत्मान्यस्य 'आत्मेत्येवोपासीत' इत्यत्रानुपादानात् नात्र दृष्टिविधिः । पूर्वमुपपादितस्य शरीरात्मभावगोचरस्य सामानाधिकरण्यस्याप्रामाणिकत्वानुपपन्नत्वयोरभावात् मोक्षफलश्रवणाच्च न दृष्टिविधित्वम् । किञ्च 'आत्मेत्येवोपासीत' इत्यत्र एवकारस्य श्रूयमाणस्य चोपासीतेत्यत्र योजनेन 'उपासीतैव'

इत्यर्थ एव स्वीकर्तव्यः, 'आत्मेति उपासीत' इत्येतावन्मात्रेणो-पपत्तौ तत्र एवकारस्य वैयर्थ्यात् । एवं 'चोपासीतैवे' त्युपासन-स्यावश्यकताबोधनेन केवलज्ञानमात्रान्मोक्षः इति वादः अनयैव श्रुत्या व्युदस्तो भवति । तद्वैव च 'ओमित्येवात्मानं ध्यायथ' (मु) 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', 'आत्मानमेव लोकमुपासीत' इत्यादिश्रुत्यैकरस्यम् । एतद्विस्तरस्तु अविधेयज्ञानभङ्गवादपरीक्षा-समालोचने । अतः 'आत्मेति तूपगच्छन्ति' इति सूत्रं जीवब्रह्मै-क्यभञ्जकमेवेति सिद्धम् ।

यदप्याह शतभूषणीकारः 'मुक्तौ हि जीवब्रह्मणोरभेदमेव सूत्रकारः फलाध्याये सूत्रयति 'अविभागेन दृष्टत्वादिति' इत्यादि । तदप्ययुक्तम् । जीवब्रह्मणोरभेदस्य 'आत्मेति तूपगच्छन्ति' इति सूत्रेणैव सिद्धिरिति अद्वैतिभिरसिद्धान्तितत्वेन पुनरपि 'अविभागेने' ति सूत्रस्य वैयर्थ्यात् । अभेदशब्दं विहाय 'अविभाग' शब्दप्रयोगे प्रयोजनाभावाच्च ।

इदमत्र तत्वम् – भगवता व्यासेन 'अविभागेन दृष्टत्वादि' ति सूत्रे मुक्तौ जीवब्रह्मणोरविभागः उच्यते । 'भोक्त्रापत्तेरविभाग-श्चेत् स्याल्लोकवत्' इत्यत्र विभागश्चोक्तः । द्वयं चेदं कथं युज्यते इति विचारणीयम् । एतत्पर्यालोचनायां यथा जातिव्यक्त्योः गुण-गुणिनोश्च नाभेदः, किं तु विभज्य स्थित्यनर्हसंबन्धः, अत एव जातिगुणबोधकगोनीलादिपदानां व्यक्तिगुणिपर्यन्तत्वं च । तथा जीवब्रह्मणोर्नाभेदः, अपि तु पृथक्स्थित्यनर्हसंबन्धः, जीववाचि-शब्दानां ब्रह्मपर्यन्तता च प्रतीयते । अयमेव च संबन्धः सामाना-धिकरण्यनिर्देशे मूलम् । एतत्संबन्धनिबन्धन एव चैक्यव्यवहारः ।

भगवान् जैमिनिः आकृत्यधिकरणे 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्', 'तदर्थत्वात् प्रयोगस्याविभागः' इत्युपक्रमोपसंहारसूत्रयोः अविभागशब्दं निक्षिप्य जातिव्यक्त्योरविभागात् जातिविशिष्टव्यक्तिबोधकत्वं पदानामिति सिद्धान्तयति । आचार्यश्च व्यासः ब्रह्मसूत्रकारः अविभागशब्दघटितमेव सूत्रमारचयन् स्वशिष्यजैमिन्युक्तदिशैव जीववाचिनां शब्दानामपि पृथक्स्थित्यनर्हरूपाविभागेनैव परमात्मपर्यन्तताम्वगमयति । अतः अविभागशब्दप्रयोगमात्रेण न जीवेशयोः स्वरूपैक्यम् । किं तु नीरन्ध्रसंश्लेषः जातिगुणाविभागवत् पारतन्त्र्यपर्यवसितः । अन्यथा जातिव्यक्त्योरप्यैक्यरूपाविभागापत्तिः कथं वार्येत ? अत एव च श्रुतौ 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' इत्यत्र विभक्तशब्दस्य प्रयोगः, ब्रह्मणो जगद्व्याप्तिश्रुत्यादिकममुमेवार्थमुपोद्बलयति । स चाविभागः पारतन्त्र्ये पर्यवस्यति । 'द्रव्यगुणकर्मसामान्यविशेषशक्तिपारतन्त्र्यनियोगा, इत्यष्टौ प्राभाकराः' इति पञ्चपादिकाविवरणं, समवायानभ्युपगन्तृजरत्प्राभाकरमतं' इति विवरणप्रमेयसंग्रहे विवृतं विद्यारण्ययतिभिः । परिनिष्पन्न, परिकल्पित, परतन्त्रस्वभावत्रयस्य शून्यवादिभिः निराकरणेऽपि तद्व्यतिरिक्तानां बौद्धानां कार्यकारणभावस्येव पारतन्त्र्यस्यापि संबन्धता संमतेत्येव प्रतिभाति । अत एव प्रभाचन्द्रेण जैनेन प्रमेयकमलमार्तण्डे—

> पारतन्त्र्यं न संबन्धः सिद्धे का परतन्त्रता ।
> तस्मात् सर्वस्य भावस्य संबन्धो नास्ति तत्त्वतः ॥

इति पारतन्त्र्यसंबन्धस्य दूषणार्थमनुवादस्संगच्छते । अतश्च 'अनेन जीवेनात्मना अनुप्रविश्य; सन्मूलास्सोम्येमाः सर्वाः प्रजाः' इत्यादिभिर्जीवेशयोरपि पारतन्त्र्यपर्यवसित एव अविभागस्सिध्यतीति

'अविभागेन दृष्टत्वात्' इत्यत्रापि स एव विवक्षितः । एवमविभाग-संवलिततादर्थ्ये शरीरशब्दप्रवृत्तिनिमित्तं शरीरवाचिशब्दाश्च शरीरि-पर्यन्ता इति 'अर्थैकत्वमविभागा' दिति सूत्रप्रणेतुर्जैमिनेर्हृदयमिति निर्धारणेन 'ब्राह्मणो यजेत' इत्यादौ ब्राह्मणादिशब्दाः न लाक्ष-णिकाः ।

शांकरैरपि अत्र सूत्रे 'न तु तद्द्वितीयमस्ति, ततोऽन्यद्विभक्तं यत् पश्येत्', तादृगेव भवतीत्यादिश्रुतीरुदाहृत्य 'नदीसमुद्र-निदर्शनानिचे' त्युक्तम् । तत्र 'न तु' इत्यादौ विभक्तशब्दप्रयोगेण विभक्तस्यैव प्रतिषेधः, न त्वविभक्तस्येति स्फुटम् । 'तादृगेवे' त्यतः पूर्वं 'एवं धर्मान् पृथक् पश्यन्' इत्यत्र पृथक्शब्देनैकार्थः 'नेह नाना' इत्यत्र नानाशब्दः । एवं च तत्रापि विभक्तस्यैव निषेधः इति स्फुटम् । 'यथा नद्यः' इत्यत्रापि यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्त्येवमेव जीवोऽपि स्वाश्रय-मेव नामरूपं विहाय परं पुरुषमुपैति' इत्यर्थस्यैव युक्ततया ब्रह्मज्ञानेन नामरूपसामान्याविनिर्मोक्षाभावेन स्वरूपैक्यातिरिक्त एवा-विभाग एव ततस्सिध्यति । एवं नदीसमुद्रनिदर्शनानन्तरं 'तत्त्व-मसी' ति वाक्येऽपि पूर्वोक्त एवाविभाग एव विवक्षितः इति नीलमुत्पलमित्यत्रेव विशेष्यविशेषणभाव सामानाधिकरण्यम् । तत्रैतावान् विशेषः 'प्रकारस्य सति तात्पर्ये असति च बाधके स्वविशेष्यान्वयिन्यप्यन्वयः, अन्यत्र स्वविशेष्यमात्रे । तत्र आद्यः विशिष्टान्वयः इति व्यपदिश्यते । द्वितीयः उपलक्षितान्वय इति । उपलक्षणधर्मश्च क्वचिदसमानकालिकः क्वचित् समानकालिकश्च । प्रकारता चोभयत्राविशिष्टैव । एवं च समानाधिकरणवाक्यबोधे सर्वत्रापि धर्मः प्रकारतया भासत एवेति । ततश्च 'तत्त्वमसी'

स्यादावपि सामानाधिकरण्यं विशेष्यविशेषणभाव एवेति न सामानाधिकरण्यचतुष्टयकल्पना । एवं च 'अविभागेन दृष्टत्वादि' ति सूत्रोक्ताविभागः न ऐक्यरूपः इति सिद्धम् ।

अत एव तन्त्रवार्तिके भट्टपादैः जीवपरयोरुक्ताविभाग एव उपनिषत्सु सामानाधिकरण्यनिर्वाहक इति मत्वा एकात्मवादनिराकरणावसरे इत्थमुक्तम् — 'चैतन्यात्मकत्वादविभागाच्चोपनिषत्सु ऐकात्म्यव्यवहार इति । अतः 'अविभागेन दृष्टत्वा' दिति सूत्रमपि परेषां प्रतिकूलमेव ।

एतेन 'सर्वं खल्विदमित्यादौ बाधायां सामानाधिकरण्यं व्युत्पाद्यते' इत्यादि शतभूषणी परास्ता । सर्वत्र एकविधसामानाधिकरण्येन निर्वाहे संभवति, निर्निमित्तकानेकसामानाधिकरण्यकल्पनाया अयुक्तत्वात् । वेदे आरोपार्थकत्वस्यायुक्तत्वादेव बाधायां सामानाधिकरण्यस्य सुतरामसंभवाच्च ।

'अविभागो वचनात्' इति सूत्रं हि भूतानां परमात्मनि पृथग्व्यवहारानर्हसंसर्गरूपाविभागप्रतिपादनपरम् । 'तानि परे तथा ह्याह' इत्यादिना तत्पूर्वसूत्रे भूतानामेव प्रस्तुतत्वात् । 'अविभागेन दृष्टत्वात्' इति सूत्रं तु परं ज्योतिरुपसंपन्नः परस्मात् ब्रह्मणः स्वात्मानमविभागेन पश्यतीति प्रतिपादयतीति प्रतिपादनाय । अत एव 'अविभागेन दृष्टत्वात्' इत्यत्र 'दृष्टत्वादि' ति पदस्योपपत्तिः । तत्सूत्रमुत्क्रान्तिनिरूपणपरम् । इदं च मुक्तकलाप्रतिपादनपरमिति अत्र परस्परगतार्थतापादनं तावत् सर्वथा विस्मयकरमेव । उभयसूत्रयोरपि अविभागशब्दः एकार्थ एवेति कामं स्यात् । तावता न

काप्यनुपपत्तिः । परमते तु एतन्नैव संभवति । उभयत्राविभाग-शब्दस्य भिन्नार्थकत्वात् । 'अविभागेन दृष्टत्वादि' त्यत्र चाभेद-बोधकत्वमङ्गीकृत्य महावाक्ययोरपि केवलचिन्मात्रबोधकत्वमिति मते च अस्म्यसीत्युत्तमपुरुषादिप्रयोगानुपपत्तिरपरिहार्या । यद्यपि 'असिपदेनैक्य' मित्येव परैरुक्तम् । तथाऽपि 'गगनं द्रव्यं भवती' त्यादौ भवत्यर्थे तादात्म्यादौ 'द्रव्यवृत्तित्वबोधाच्चे' ति बिन्दु-टीकायामुक्त्या 'घटो नीलो भवती' त्यादौ नीलवृत्त्यसाधारण-धर्माश्रयो घटः इति बोधस्य गदाधरेण व्युत्पत्तिवादे प्रदर्शनेन च तत्त्वंपदयोरैक्यबोधः तद्रीत्यैवोपपादनीयः । अन्यथा 'असि' इत्यत्र प्रकृतिप्रत्यययोरुभयोरर्थवत्वं न स्यात् । संक्षेपशारीरकोक्तदिशा 'असि' इत्यस्य सद्रूपब्रह्मार्थकत्वेऽप्ययमेव दोषः । 'असि' इत्यादौ प्रकृत्यर्थस्य क्रियात्वानङ्गीकारे लकारप्रवृत्तेरेवासंभवात् 'असि, अस्मि' इत्यत्र मध्यमोत्तमपुरुषयोः कथमुपपत्तिः? भावे लकारस्थले प्रकृतिप्रत्यययोरेकार्थकत्वेन एकदैवार्थोपस्थितिरिति अनु-भवानुरोधेनाभ्युपगच्छन्ति केचित् । केचित्तु तत्र विशेषमङ्गीकृत्य उभाभ्यामन्यर्थोपस्थितिमङ्गीकुर्वन्ति । कर्तरि लकारस्थले तु कर्त्रर्थ-बोधं सर्वेऽप्यभ्युपगच्छन्तीति 'अस्मि, असि' इत्यनयोः विवर्त-वादिसंमतार्थः न पाणिनिसंमतः । नापि कस्यचिद्दार्शनिकस्य । अतः शरीरशरीरिभावसामानाधिकरण्यस्वीकारमन्तरा 'अहं ब्रह्मास्मी' त्यादीनां उपपत्तिर्नैव घटते । एवं चाखण्डार्थबोधकत्वस्यानुपपन्न-त्वादेव 'अविभागेन दृष्टत्वा' दिति परेषां प्रतिकूलमेवेति, तद्बलेन 'ब्रह्मवित् ब्रह्मैव भवति' इति वाक्यार्थोऽपि परेषां प्रतिकूल एव ।

यदत्रोक्तं शतभूषणीकर्त्रा 'सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः' (सं. शा. १. १९६) इत्यादिवचनानुसारेण अखण्डार्थबोधकत्वमेव 'अविभागेन दृष्टत्वा' दिति सूत्रस्येति स्वीकर्तव्य' मित्यादि ।

तदिदं संक्षेपशारीरकस्यैवायुक्तत्वात् तदनुसृत्य शतभूषणीकृता 'अखण्डार्थबोधकत्वसाधनाय प्रयासः सुतरामयुक्त' इति विभावनीयम् । संक्षेपशारीरके एतदनन्तरश्लोकश्च – 'सामानाधिकरण्यमत्र पदयोः ज्ञेयस्तदीयार्थयोः संबन्धस्तु विशेषणेतरतया ताभ्यां सहास्यात्मनः । संबन्धोऽप्यथ लक्ष्यलक्षणतया विज्ञेय एवं बुधैः एतान्यर्थपदानि बुद्धिपदवीमारोहणीयानि तु ॥' (सं. शा. १. १९७) इति । अत्र उभाभ्यामपि श्लोकाभ्यां निष्पन्नश्चायमर्थः प्रथमं वाक्यार्थभेदबुद्धिः, ततो विरोधज्ञानं, अथ लक्ष्यार्थविषयकधर्माप्रकारकबोधः' इत्यादिः । तत्रेदं ब्रूमः, लक्षणाश्रयणमेव तावदयुक्तम् । विनैव लक्षणां श्रीभाष्यकारप्रदर्शितरीत्या वाक्यार्थवर्णनस्य युक्तत्वात् । लक्षणाङ्गीकारे वा लक्षणयापि शब्दात् धर्माप्रकारकबोधः नैव घटते । इति । यथा च सर्वथा अखण्डार्थे सामानाधिकरण्यं अनुपपन्नं तथा, अखण्डवाक्यार्थखण्डनवादपरीक्षासमालोचने सम्यक्निरूपितम् । 'तत्वंपदार्थविषयो नञ एव योज्यः' (सं. शा. १. १७७.) 'यत्रैष काक इदमेव तु देवदत्तवेश्मेति' (२०६) 'सोऽयमित्यपि पदार्थरूपकं' (२०७) इत्यादिसंक्षेपशारीरकश्लोकार्थाश्च तत्र निपुणं परिशीलिताश्चेति नात्राधिकः प्रयत्नः ।

'ब्रह्मवेद ब्रह्मैव भवति ।' इति श्रुतिरपि न पराभीष्टसाधनायालम् । तत्र भूधातोः प्राप्तिरर्थः, ब्रह्मप्राप्तिरेव हि

प्रतिपाद्यते । अन्यथा उपक्रमादिविरोधः । तथा हि– इयं श्रुतिः मुण्डके श्रूयते । तत्र च उपक्रमे, 'अथ परा यया तदक्षरमधिगम्यते' इति परविद्यासामान्यस्य अक्षरप्राप्तिरेव फलमुक्तम् । तथैव च 'परात्परं पुरुषमुपैति दिव्यम्' इत्युपसंहारेऽपि प्राप्तिरूपफलमेव प्रत्यपादि । इदं च वाक्यं 'ब्रह्मवेद ब्रह्मैव भवति' इति वाक्यतः पूर्वमिति उपक्रमस्थत्वेन 'अथ परा यया तदक्षरमिति वाक्यपर्यालोचनायां च उपक्रमोपसंहारैकरूप्येन तत् प्रबलमिति मध्ये विद्यमाने 'ब्रह्मवेद ब्रह्मैव भवति' इत्यस्य आपाततः प्रतीयमानार्थं प्रत्याव्य उपक्रमोपसंहारानुगुणप्राप्त्यर्थे तात्पर्यं व्यवस्थापयति । एवमुपक्रमस्थसाम्यश्रुत्यनुरोधेनापि 'ब्रह्मवेदे' त्यादेः न पराभिमतार्थकत्वम् । छान्दोग्ये सद्विद्यायां सर्वप्रमाणविरुद्धाभेदं सिद्धवत्कृत्य उपक्रमोपसंहारादिलिङ्गबलात् सदद्वयसिद्धिः इति वदतां अद्वैतिनां अत्र परं उपक्रमोपसंहारत्यागे प्रमाणं न पश्यामः । अतः उपक्रमानुरोधात् 'ब्रह्मैव भवति' इत्यस्य ब्रह्म प्राप्नोतीत्येवार्थः युक्तः ।

किं च ब्रह्माभेदः यदि विवक्षितः स्यात् तर्हि 'ब्रह्म वेद तदेव भवति' इत्येवालं स्यात् । तथा अनिर्देशेन 'ब्रह्मैव भवति' इति निर्देशेन च ब्रह्मशब्दः बृहत्त्वविशिष्टपरः, तथा च बृहत्त्वविशिष्टो भवति इति शब्दार्थः । तादृशबृहत्त्वं च धर्मभूतज्ञानपूर्णविकासरूपम् । 'बुद्धेर्गुणेन आत्मगुणेन चैव' इत्युत्तरं 'स चानन्त्याय कल्पते' इति श्रुतौ धर्मभूतज्ञानेनैव आनन्त्यस्यावश्यं वक्तव्यत्वात् । अत्रैव मुण्डकोपनिषदि 'यस्सर्वज्ञः सर्वविदि' ति परमात्मनः सर्वज्ञत्वधर्मः पूर्वमुक्तः । जीवस्य 'तदा विद्वान् – परमं साम्यमुपैति' इति सर्वज्ञत्वेनापि साम्यं प्रतिपादितम् । तच्च साम्यं 'नामरूपाद्विमुक्तः' इति पुण्यपापप्रयोज्यनामरूपसंबन्धविगमानन्तरं

'ब्रह्मवेद ब्रह्मैव भवति' इत्यत्र प्रतिपाद्यते । न त्वभेदः । अद्वैतिनां मते भवतीत्यपि प्रतिकूलमेव । शुद्धस्य निर्धर्मकतया कर्तरि लकारस्यानुपपत्तेः अतः पूर्वोक्तप्रकार एव ज्यायान् । वस्तुतस्तु 'विष्णुरेव भूत्वेमाँल्लोकानभिजयति' इत्यादौ एवकारस्य इवकारार्थकत्वस्वीकारवत् अत्र 'परमं साम्यमुपैति' इति पूर्वश्रुत्यनुसारेण ब्रह्मसदृशो भवतीत्यर्थोऽपि आचार्यपादैः तात्पर्यचन्द्रिकादौ प्रदर्शितः । एवं च 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे' ति गीताऽपि सुगीता भवति । 'मदभेदमुपागताः' इत्यनुपदिशन् गीताचार्यः परमपुरुषः जीवब्रह्माभेदपक्षं गीतापरिपन्थित्वेन स्पष्टयति । 'संपद्याविर्भावः स्वेन शब्दात्' इति सूत्रविषयवाक्ये 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र स्वस्वरूपाविर्भावः फलमिति सूत्रकृता व्यवस्थापितम् । तत्र च धर्मिमात्राविर्भावः न विवक्षितः । 'रूपेणे' त्यस्य वैयर्थ्यात् । अपि तु ज्ञानानन्दापहतपाप्मत्वादीनामेव इदं परेषामनिष्टमिति तदपि सूत्रं प्रतिकूलम् । अपहतपाप्मत्वसत्यकामत्वसत्यसंकल्पत्वादीनामेव ब्राह्मरूपत्वं तेनैव रूपेणाविर्भावश्च ब्राह्माधिकरणे उक्त इति तद्रूपं मुक्ते अनङ्गीकुर्वतां ब्राह्माधिकरणमप्यननुकूलम् । एतेन 'ब्रह्मभावश्चायं' इत्यादि शतभूषणी परास्ता ।

यच्चेदं भूषणीकर्तुः असिद्धसविशेषनिर्विशेषब्रह्मविभागं सिद्धवत्कृत्य कल्पनं— ब्राह्माधिकरणपर्यन्तं निर्विशेषब्रह्मविचारस्योपसंहारः अनन्तरं संकल्पाधिकरणमारभ्य अवान्तरतात्पर्यविषयस्य सविशेषविचारस्येति ।

तदिदं सर्वप्रमाणविरुद्धं निष्प्रमाणकं निरूपणानर्हं निपुणं निरूप्यमाणमारकूटायते । कस्मिन् वा सूत्रे भगवता सूत्रकृता निर्विशेषं

विचारितं इति प्रश्ने मौनमेव ह्युत्तरं विवर्ताद्वैतिनामिति सूत्रपरिशीलनावतां स्पष्टम् । 'विवक्षितगुणोपपत्तेश्च, 'सर्वधर्मोपपत्तेश्च, 'सर्वोपेता च तद्दर्शनात्, 'आनन्दादयः प्रधानस्ये' त्यादिभिर्नैकैस्सूत्रैः ब्रह्म सगुणमेव सूत्रयन् भगवान् सूत्रकारः हन्त, ब्रह्मनैर्गुण्यवादं सूत्रानारूढं सम्यक् स्थापयति किल । अतः ब्रह्म निर्गुणमिति वादः यत्र कुत्रचित् कोणे उपविश्य कवाटं सम्यक् पिधाय स्वगोष्ठीमात्रे कर्तव्यः न तु पण्डितानां पुरतः । यथा च निर्गुणस्य निरूपणानर्हत्वं तथा पूर्वमत्रैवास्माभिः सम्यक् निरूपितम्, उत्तरत्र च सगुणनिर्गुणश्रुतिव्यवस्थावादपरीक्षासमालोचनादौ विशदं निरूपितम् । किं च सगुणनिरूपणस्य निर्गुणप्रमितिं प्रत्युपयोगित्वमिति वदतां मते, आदौ सगुणविचारमुपसंहृत्य उपसंहार एव निर्गुणविचार उपसंहर्तव्य आपतति । तद्विरुद्धतया सगुणविचारपरमेवोपसंहारं प्रदर्शयंश्च बादरायणः ब्रह्मसूत्रेषु उपक्रमोपसंहारयोः सगुणमेव सूचयन् निर्गुणब्रह्मवादिनां गलहस्तिकादानेन दूरे निस्सारयति तान् ।

एतेन 'इतः परमवशिष्यते अवान्तरतात्पर्यविषयस्य सविशेषविचारस्योपसंहारः । तदर्थं 'संकल्पादेव तच्छ्रुतेः' इत्यारभ्य 'अनावृत्तिशब्दात् अनावृत्तिशब्दात्' इत्यन्तानि सूत्राणि' इत्यादि शतभूषणी परास्ता ।

भित्तिचित्रसमत्वादेतन्निरूपणस्य निर्गुणं सिद्धवत्कृत्य वादः तदनङ्गीकर्तृभिरस्माकं कथं घटते । यथा सगुणनिरूपणं 'वशीकृते मनस्येषां' इत्यादिकल्पतरूक्तदिशा, निर्गुणज्ञानाय उपयुज्यते, तथा समस्तविशेषापेततादृशनिर्गुणनिरूपणं सर्वशून्यत्ववादायोपयुज्यते ।

अतः सर्वशून्यवाद एव विवर्ताद्वैतिनां शरणमापतति । अत एव बौद्धाः 'तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः ।' इति निर्गुणवादिनां निर्विशेषचिन्मात्रस्वीकारेणाल्पापराधं प्रदर्श्य तत्क्षमया स्वगोष्ठीप्रवेशं सूचयन्ति । अतः वैदिकानां सतां वेदे आरोपितार्थबोधकत्वकथनस्यायुक्तत्वेन सर्वे वेदाः निरस्तनिखिलदोषं निखिलकल्याणगुणाकरं सर्वशरीरिणं नित्येशितारं, परमपुरुषं प्रतिपाद्य तदाराधनत्वेन कर्माणि प्रतिपादयन्तीति सर्वैरवश्यमेषितव्यम् । तादृशस्य परमपुरुषस्य मोक्षहेतुत्वप्रतिपादनाय ब्रह्मत्वनिरूपणार्थं जन्माद्यधिकरणमारभ्य सर्वं शारीरकं शास्त्रं प्रवृत्तम् । अभिन्ननिमित्तोपादानं ब्रह्मेति च प्रथमाध्याये प्रतिपाद्य, तत्र संभावितान् दोषान् अविरोधाध्याये द्वितीये दूरीकृत्य, तत्प्राप्तये साधनभूतं चोपासनाद्युपायं तृतीयेनाध्यायेन निरूप्य, चतुर्थे तत्साम्यापत्तिरूपगुणाष्टकाविर्भावादिकं फलं प्रतिपादयति सूत्रकारः इति निरूपयतां वृत्तिकाराणां तदनुयायिनां श्रीभाष्यकारादीनां च सिद्धान्त एव युक्तः । श्रुतिसूत्राद्यबाधात् । ये तु एतद्विरुद्धतया सत्यद्वैविध्यं त्रैविध्यं वा वेदे आरोपितार्थबोधकत्वं, ब्रह्मणो अविद्यादिदोषवैशिष्ट्यं, निर्गुणत्वं च ब्रह्मणः, पितृहत्यया राज्यप्राप्तिवत् ब्रह्माभेदं च मोक्षं, तस्य च उपासनानिरपेक्षत्वात् ध्यानादीनामपारमार्थ्यं जीवब्रह्मणोः स्वाभाविकभेदनिराकरणं वेदस्य तात्त्विकमप्रामाण्यं चेत्यादिकं स्वीकुर्वन्ति ते श्रुतिसूत्रबहिर्भूताः सूत्रकारैरेव निरस्ताश्च वेदितव्याः । यथा च सर्वेषामपि सूत्राणां परमतभञ्जकत्वं तथा व्यक्तमन्यत्र ॥

वेदान्तवाक्यात्मसुमानि वस्त्वान्यः
खण्डिते व्यासकृतेऽथ सूत्रे ।
तद्धारणावाप्तसमस्तमोदः
सदा हरिस्सद्गुण एव भाति ॥

इति श्रीभारद्वाजकुलतिलक श्रीशठकोपार्यतनूजन्मुषा
कनकाम्बागर्भशुक्तिमुक्ताफलवपुषा श्रीलक्ष्मी
हयग्रीवदिव्यपादुकासेवक श्रीमदभिनव
रङ्गनाथब्रह्मतन्त्रपरकालमहादेशिक
चरणारविन्दपरिचर्यासमासादित
मीमांसाद्वन्द्वमतिविभववपुषा
वरदार्यविदुषा विरचि
तायां तत्त्वसुधायां
प्रथमस्तरङ्गः.

---

Printed by G. R. Josyer, at the Coronation Press, Mysore.

## भूमिकास्थशुद्धाशुद्धप्रदर्शिनी ।

| पुटं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १८ | स्पष्ठी | स्पष्टी |
| | २१ | शिष्ठ | शिष्ट |
| | ,, | श्रति | श्रुति |
| २ | १६ | द्रष्ठ | द्रष्ट |
| | १७ | विवर्तना | विवर्ता |
| | २० | परशतं | परश्शतं |
| ३ | २ | द्दष्ठि | द्दष्टि |
| ५ | ६ | स्वप्ने मयि | स्वप्नमाये |
| ६ | १३ | निह्व | निह्न |
| ७ | ७ | नायकरत्ने | न्यायरत्नाकरे |
| ८ | १२ | सदकै | सदैक |
| | १८ | गाथिनं | गाथितं |
| ९ | २२ | गगनवन्नैव | गगनकुसुमवन्नैव |
| १० | ,, | तथापि | तथा हि |
| ११ | ११ | ब्राह्मण | ब्राह्मेण |
| | २३ | लभ्यते | लभ्यन्ते । |
| १४ | ३ | ऋषि | ऋषि |
| | १२ | गाद्य | गाह्य |
| | २४ | संसर्गा | संसर्गं |
| १५ | १० | वोधस्य | बोधस्य |
| १७ | ७ | त्वोप | त्वौप |
| | ८ | स्मात् | स्मात् सर्वस्मात् |
| १८ | ,, | मन उपाधि | मनउपाधि |

| | | | |
|---|---|---|---|
| १८ | १६ | स्मृतिविधि | स्मृतिशब्दविधि |
| | १९ | नाशयति | नाशयन्ति |
| २१ | ३ | क्तः | क्तेः |
| | ९ | द्य | ह्य |
| | १६ | व्याप्ति | व्यापि |
| | २० | ज्यौत्स्ना | ज्योत्स्ना |
| | २२ | यथोपाद | यथोदपाद |
| २२ | ७ | स्याषि | स्यापि |
| | १८ | भवा | भवाभावा |
| २३ | १० | युवत्वत्व | युवत्व |
| | १४ | निरूपिंत | निरूपम् |
| २५ | ३ | इत्यत्र | अत्र |
| २७ | १४ | सिद्धित्व | सिद्धत्व |
| | १५ | गतात्रि | गतवि |
| | २४ | संकोचा | संकोच |
| २८ | ४ | क्लृप्ते | क्लृप्ते |
| २४ | ५ | चेतू | चेत् |
| | ६ | न | न । |
| | ७ | ह्यवं | ह्येवं |
| | १० | ह्यु | प्यु |
| | १८ | अवरो | अववो |
| | २० | स्वन | स्व |
| | २२ | नाशये | नाशमे |
| २९ | १ | षष्टयोः | षष्ठयोः |
| | १० | छ्या | ष्ट्या |
| | १२ | न सुतरां | सुतरां |

| | | | |
|---|---|---|---|
| | १८ | पदादि | पटादे |
| ३० | १ | बोधकं | बोधिका । |
| | ७ | सार | सर |
| | ८ | त्यारा | सार |
| | १७ | तर्हि | यदि तर्हि |
| | २० | ह्यक | ह्येक |
| | २१ | समासस | समास |
| | २२ | श्राय | श्र्य |
| | २३ | कारा | कारो |
| ३१ | १ | पदक | पादक |
| | १५ | आग्नी | आग्नीध्र |
| | १८ | च्यते | च्येत |
| ३२ | ५ | वर | वर |
| | ७ | ज्ञान | ज्ञानं |
| | २३ | प.िणाम | परिमाण |
| ३४ | १ | नेतॄ | नेतृ |
| | ४ | स्त्त्या | स्त्या |
| ३६ | १३ | तां ब्रह्म | तांतत्वतो ब्रह्म |
| | १५ | सर्वान् | सर्वस्मात् सर्वान् |
| ३७ | ४ | इत्यादिः | इत्यादि |
| ३९ | १४ | परीक्ष | परीक्षा |
| ४० | १६ | गृहीने | गृहीत |
| | २० | मां | मम |
| | २२ | लय्यन्न | लय्यन्त |
| ४१ | २४ | पादकं | पादक |

## ॥ शुद्धाशुद्धप्रदर्शिनी ॥

| पुटं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ११ | कर्तृकाना | कर्तृकाणा |
| ४ | १० | गुणोपपन्ते | गुणोपपत्ते |
| | ,, | धर्मोपत्ते | धर्मोपपत्ते |
| | १४ | द्ववजा | द्वावजा |
| ५ | ९ | निरसिप्यते | निरसिष्यते |
| | १० | व्रह्मसायुज्यम् | ब्रह्मसायुज्यम् |
| | १२ | व्यथान्ति | व्यथन्ति । |
| ६ | १३ | प्रपन्जः | प्रपञ्चः |
| ७ | ४ | त्रिशेपाऽपि | विशेपा अपि |
| ८ | २ | सन्ताको | सत्ताको |
| १० | ११ | रत्यपीदं | इत्यपीदं |
| ११ | १३ | अवाधित्व | अबाधितत्व |
| | ,, | ख्यापपत्ति | ख्योपपत्ति |
| १४ | ८ | प्रतिपादिक | प्रतिपादक |
| १५ | २ | सेनून्मान | सेतून्मान |
| | ५ | यावत् | यावान् |
| | १५ | निष्प्रमाणिकी | निष्प्रामाणिकी |
| १६ | १२ | प्रतीतैक्य | प्रतीतैक |
| | १४ | ज्योतिम | ज्योतिष्टोम |
| | ,, | उपसत्रयस्य | उपसत्त्रयस्य |
| १७ | ११ | माणः | मानः |
| १८ | ३ | कारदीनां | कारादीनां |

| | | | |
|---|---|---|---|
| १८ | १० | ईश्वस्य | ईश्वरस्य |
| | २१ | मुक्तितुः | मुक्तिहेतुः |
| | २५ | स्वरूप | स्वरूप |
| २० | १६ | चार्योऽपि | चार्या अपि |
| २१ | ६ | श्वस्य | श्वरस्य |
| | १२ | त्वीशव्य | त्वीशितव्य |
| | १५ | मातया अपि | मातयाऽपि |
| २२ | ३ | व्यरिक्तस्य | व्यतिरिक्तस्य |
| | ७ | दूपणानि | दूषणानि |
| | ११ | तानिनां | ताद्वैतिनां |
| | १६ | त्यत्य | सत्य |
| | १७ | सिद्धि | सिद्धि |
| २३ | ३ | पपते | पपाते |
| | ९ | ग्रहण | ग्रहणं |
| ३१ | ११ | सिसंपादयिषितं | संपिपादयिषितं |
| ३२ | ५ | कोटद्वये | कोटिद्वये |
| ५० | ५ | वादिभिनङ्गी | वादिभिरनङ्गी |
| ५१ | १४ | नेजोबलै | तेजोबलै |
| ५२ | ३ | विशिष्ट | विशिष्टता |
| ५८ | ९ | विशेषधात् | विरोधात् |
| | ११ | रक्षमणि | रक्षामणि |
| ५९ | ,, | प्रहानेन | प्रहाणन |
| ६० | १३ | चिचेदाह | तिचेदाह |
| ६२ | १७ | भूयिष्ट | भूयिष्ठा |
| ६३ | ९ | व्यावस्था | व्यवस्था |

| | | | |
|---|---|---|---|
| ६४ | १९ | निधिक | नाधिक |
| | ,, | प्रेर्यमो | प्रेर्ययो |
| ७६ | २५ | नन्द् | नन्दा |
| ७८ | १७ | हशि | दृशि |
| | १८ | न्तयैव | न्तायैव |
| ७९ | १० | न्तव | न्तेन |
| ८० | ९ | ज्ञातं | ज्ञानं |
| | २५ | रित्या | रित्यादि |
| ८८ | २४ | त्वस्याभि | त्वस्यान |
| ९० | ११ | वेदयत् | वेदयेत् |
| ९२ | २ | नोक्तम् | मुक्तम् |
| | ९ | तस्मा च | तस्मैच |
| | १२ | त्वे | तत्वे |
| ९५ | ६ | पाद् | पद् |
| ९६ | २४ | साभि | सभि |
| ८९ | ८ | प्रमिलस्तु | प्रमितिस्तु |
| | २३ | तिष्टेत | तिष्ठते |
| ९९ | ९ | यतिव्य | यतितव्य |
| | २३ | अन्या | अन्य |
| १०३ | ३ | शया हि | शयाऽहि |
| | ४-५ | या हि हि मञ्जूषां | याऽहि मञ्जूषां |
| | १४ | पैव | नैव |
| | २५ | व अन्या | वान्या |
| १०४ | ४ | मेदं | भेदं |
| १०६ | १५ | त्सु | प्सु |

| | | | |
|---|---|---|---|
| १०७ | ६ | द्व्यायु | द्व्यु |
| | १३ | स्याभाविक | स्वाभाविक |
| ११० | १४ | युक्तादेव | युक्तत्वादेव |
| | २५ | प्यस्थानां | प्यन्धानां |
| १११ | ४ | नादे | वादे |
| | २५ | वाक्यस्य | वाक्यस्थ |
| | ,, | पदान्त | पदान्तर |
| ११४ | ८ | र्हानि | र्हाणि |
| | ९ | र्हानि | र्हाणि |
| ११५ | १३ | सबन्धः | सम्बन्धः |
| | १४ | न्धधीन | न्धाधीन |
| ११६ | ३ | तद्धितीय | तद्द्वितीय |
| | २० | करण | करण्य |
| ११८ | १३ | त्वत्वस्य | त्वस्य |
| | २३ | रुभयमपि | रुभयोरपि |
| १२० | १७ | श्रोतव्य | श्रोतव्यो |
| | २५ | अपरिहार्यं | ऽपरिहार्यं |
| १२१ | ३ | व्यापक | व्यापकारोप |
| १२३ | ३ | अपि | अपितु |
| | ,, | परत्वैव | परैव |
| | २४ | मयद् | मयट् |
| १२६ | ८ | भाया | माया |
| १२७ | ३ | साध्यता | साध्या |
| | १५ | सूत्रं | सूत्रणां |
| १२८ | ९ | चिद्वि | चिद्विशिष्ट |

| | | | |
|---|---|---|---|
| १२८ | १६ | भास्य | भावस्य |
| १३१ | ६ | तमध्या | तध्या |
| १३२ | १६ | भिप्रायां | भिप्राया |
| १३३ | ५ | वैति | वेति |
| | १६ | प्राणाधिकं | प्राणाधिकरणं |
| | २५ | मनिरूप | मेवनिरूप |
| १३६ | ७ | णैव | नैव |
| १४१ | १२ | ध्यना | ध्ययना |
| १४२ | ६ | मप्यनर्हं | मपि नार्हं |
| | २० | विरोध्या | विरोधाध्या |
| १४३ | १ | स्वप्ने मयि | स्वप्नमाये |
| १४४ | ६ | साधयन् | साधितम् । |
| १४६ | २ | रोति | करोति |
| १४७ | १५ | भया | भव |
| १५४ | १ | त्वभाव | त्वाभाव |
| | ११ | गुण | गुणा |
| १५५ | ९ | तार्थः | तार्थं |
| १५६ | १४ | स्व्गौ | स्व्यगौ |
| १६० | ५ | केपदेश | कोपदेश |
| | २१ | तया | तायां |
| १६५ | ८ | अस्रान् | आम्रान् |
| | १४ | मेति | मेवेति |
| | १५ | संमतम् | संमतः |
| १६६ | १३ | भावान् | भावात् |
| | १९ | स्वभा | स्वाभा |

| | | | |
|---|---|---|---|
| १६८ | ,, | नायपि | नामपि |
| १७३ | ६ | संबन्धितत्तद्वाचकः | वाचकः |
| १७४ | १८ | ण्य | न्य |
| १७७ | २ | स्नान | म्नान |
| | ३ | जागरिकता | जागरा |
| | २२ | दिर्भु | दिभि |
| | २५ | आहतस्य | आह्त |
| १७८ | ७ | आम्नानमान | आम्नान |
| | १२ | आक्षेपास्ते | आक्षेपाः कृता |
| | २३ | स-एषो | य एषो |
| १७९ | ५ | आर्विभू ब्रह्म | आविर्भूतब्रह्म |
| | १९ | मानं | मानः |
| | ,, | शरीरकं | शरीरकः |
| १८० | २ | गमात् । | गमात् |
| | १६ | किंचित् | न किंचित् |
| १८१ | १९ | प्रयणात् | प्रयाणात् |
| | २२ | अयमत्र | अयमत्र निष्कर्षः |
| १८२ | १५ | पक्षेप | पदोप |
| १८३ | ४ | प्रतिपादयन् | प्रतिपादयन् गीताचार्यः |
| | १३ | असत्व | असत्यत्व |
| १८४ | १८ | हषि | हशि |
| १८६ | २ | णानेन | नानेन |
| | ३ | वादिति | त्वादिति |
| १८८ | ११ | इति इत्यन्ते | इत्यन्ते |

| | | | |
|---|---|---|---|
| १८८ | १७ | स्थितत्वस्य | स्थितत्वस्य च |
| १९२ | ८ | र्थत्वयो | र्थयो |
| १९२ | १५ | पूर्वस्य | पूर्वपक्षस्य |
| १९३ | १३ | त्तद्द्रेश्य | त्तदुद्देश्य |
| | १७ | एव | एप |
| १९४ | ८ | भिनित्यता | मिनित्यता |
| १९७ | १० | बवीति | ब्रवीति |
| | १७ | मस्मि | मस्ति। |
| १९८ | १५ | वेधति | षेधति |
| १९९ | १२ | रूप | रूपं |
| २०० | १६ | प्रवो | प्रबोध |
| २०१ | २० | कर्तृकत्वम्। | कर्तृकत्वमिति सिद्धान्तः। |
| | ,, | इति श्रुतिपरा | इति श्रुतिःस्वामार्थ वैचित्र्यपरा |
| २०४ | ३ | कल | फल |
| | ५ | तद्वत् | तद्वत्। |
| २०५ | २ | प्रतिपतिपत्ति | प्रतिपत्ति |
| २०६ | १३ | बन्धान्तर्गतः | बन्धविपर्ययः |
| | १९ | तया | ता |
| | ,, | द्यते | द्येत |
| २०८ | ८ | परयोर्भेदं | परयोरभेदं |
| २१० | २० | अस्मात् सर्वान् | अस्मात् सर्वस्मात् |
| २११ | ९ | रूपः | रूपं |
| | १५ | घटत्स | घटत्व |

| | | | |
|---|---|---|---|
| २१२ | २४ | अवेदि | अवैदि |
| २१३ | १० | पटनाया | परताया |
| २१५ | १ | मद | दम |
| | २३ | तद्वसरं | तद्वस्थं |
| २१८ | ९ | करोति | कुर्वन्ति |
| २२१ | १४ | पारत | पारत |
| २२३ | २० | कला | स्वरूप |
| २३० | १२ | तत्व | तत्त्व |

---

## एतद्ग्रन्थकर्तृविरचिताः अन्ये ग्रन्थाः

१. श्लोकवार्तिकभूषणम् (कुमारिलभट्टविरचितश्लोकवार्तिकव्याख्यारूपम्)

२. तत्त्वमुक्ताकलापप्रकाशः (श्रीनिगमान्तदेशिकविरचिततत्त्वमुक्ताकलापस्य ललितव्याख्यारूपम्)

३. ब्रह्मसूत्रार्थमणिदर्पणम् (ब्रह्मसूत्राणां द्वैताद्वैतपरार्थसमालोचनपूर्वकं विशिष्टाद्वैत एव स्वारस्यप्रदर्शनपरम्)

४. अभयप्रदानसारः (निगमान्तदेशिकानुगृहीतद्राविडाभयप्रदानसारस्य संस्कृतपरिवर्तनम्)

SREE KANTI'A POWER PRESS, MYSORE